# विषयानुक्रमणिका

| विषयः | पृष्ठसंख्या |
|---|---|

श्रीलौगाक्षिभास्करप्रणीतः

# अर्थसंग्रहः

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः ।
कुरुते जैमिनिनये प्रवेशायाऽर्थसंग्रहम् ॥ १ ॥

---

श्रीकृष्णवल्लभाचार्यस्वामिनारायणविरचिता

## किरणावली

( मंगलम् )—

विधिर्विधेयानि च शेषशेषित्वकं पदार्थीयपरिप्रमाणम् ।
क्रमोऽधिकारोंऽगविकारिदेशो द्रव्याणि देवादिविशेषदेशः ॥ १ ॥
पदाऽधिहा गोहविकारबाधौ तन्त्रोपकारित्वपरोपकारौ ।
धर्मः फलं यत्र निरूपितं तन्मीमांस्यते द्वादशसाररूपम् ॥ २ ॥
प्रमाणसद्वाक्यपदाऽब्धिपारि-श्रीकृष्णसम्वल्लभदेशिकेन ।
आराध्यमूर्तेन विनोदनाय बोधाय तत्काण्डजुषां विशिष्टम् ॥ ३ ॥
टीकया किरणावल्या भूष्यते त्वर्थसंग्रहः ।
विशदाऽर्थाऽवबोधिन्या यथाऽपेक्षार्थगर्भतः ॥ ४ ॥
परंब्रह्म समस्तानां क्रतूनां देवतात्मकम् ।
विशिष्टं फलदं द्रव्यैराराधितं प्रयोगिणाम् ॥ ५ ॥

मीमांसाशास्त्रं विधिनिषेधश्रुत्यर्थनिर्णायकं विविधाऽऽराधनार्थक-कर्मकाण्डनिरूपकं कर्मणां शेषशेषिताज्ञापकं यज्ञाद्यनुष्ठेयेयत्तादर्शकं तत्तद-नुष्ठानप्रक्रियाप्रबोधकं तत्तत्कर्मफलभोक्त्रधिकारिनिर्णायकं प्रकृतिविकृति-काण्डीययोग्यविनिमययोजकं द्रव्यदेवतादिद्वारकविशेषाऽतिदेशपरं मान्त्रिक-सामीयसंस्कारीयकर्मीयाऽध्याहाराऽऽवेदकम् अंगांऽगिविशेषप्राप्तिकृत्तत्तद्-बाधोद्भावकं सकृत्कृत्स्नाऽनुष्ठानोपकारकात्मकतान्त्रिकरीतिनिर्देशकं धर्माऽ-धर्मस्वर्गादिरसिकम् अत्र परत्रोपकारकं गहनमपि सारग्राहिकृते नाऽतिगहनं वामनस्वरूपमिव वर्तमानं लौगाक्षिभास्कररचितमिदमर्थशास्त्रात्मकं मया श्रीकृष्णवल्लभाचार्यस्वामिनारायणेन किरणावल्या विशेषतोऽवगतं कार्यते ।

अथ परमकारुणिको भगवाञ्जैमिनिर्धर्मविवेकाय द्वादशलक्षणीं

---

तत्र मंगलम्—**वासुदेवमिति**। परवासुदेवः परमात्मा अपरवासुदेवो व्यूहात्मा, इह वासुदेवः श्रीकृष्णात्मा, तं सर्ववासिनं दिव्यं भगवन्तं सुमूर्तम्। **रमाकान्तमिति**। रमाणां मुक्तानिकानां च कान्तं परमात्मानम्, रमाणां लक्ष्मीणां कान्तं श्रीनारायणम्, रमायाः रुक्मिण्याः कान्तम् अनादिश्रीकृष्णनारायणं, रमाः—देवताः तत्कान्तं समाराध्यं परमाराध्यं परमेश्वरं, रमाः मीमांसाः तासां तासु वा प्रियं कान्तं शाश्वतपुरुषं शब्दब्रह्म परब्रह्माऽपि च, तं यजनाऽर्हं, **नत्वा**—नमस्कारात्मकं मंगलं कृत्वा, स्वाऽपेक्षयोत्कृष्टवत्तया ज्ञापनाऽनुकूलं व्यापारं शारीरं मानसं च कृत्वा, द्रव्यत्यागोद्देश्यं व्यापकं परमविष्णुं परमात्मानं, समीमांसोऽहं नाम्ना लौगाक्षिभास्करो नत्वा, लुक् लौगा दर्शनशक्तिः, तद्वदक्षिणी ताभ्यां भास्करः, लुक् अज्ञानलोपः, तादृशाऽक्ष्युद्घाटकः मीमांसादिज्ञानवान्, रलयोरैक्ये तु रोगाक्षिमतां ज्ञानदाता, **जैमिनिनये**—जेमनं भोजनं, जेमनायाः ज्ञप्तेः पुत्रो जैमिनिः, तद्विचारितो वाक्यन्यायः, अयं द्वादशाऽध्यायात्मकः, मीमांसादर्शने यज्ञमन्त्रादिवाक्यार्थमुख्यविचारात्मकः। तत्र—

**प्रथमे** अध्याये—विध्यादिप्रामाण्यं, **द्वितीये**—विधेयानुष्ठानभिन्नतादिः, **तृतीये**—कर्मादिशेषशेषित्वं, **चतुर्थे**—अनुष्ठेयेयत्ताविचारः, **पञ्चमे**—अनुष्ठानक्रमः, **षष्ठे**—फलाऽधिकारितादिः, **सप्तमे**—प्रकृत्यंगानां विकृतौ विनियोगात्मकसामान्याऽतिदेशादिः, **अष्टमे**—प्रकृत्यंगानां विकृतौ मन्त्रसामसंस्कारकर्मणां देवतादिभिन्नत्वे तु विकृतौ देवतादिपदाध्याहारोहनादिः। प्रकृतिः—अंगित्वेन कृत्स्नांऽगी यज्ञादिर्महाकर्म। विकृतिः—अंगत्वेन प्रातिस्विकांऽगानि अंशकर्माणि। प्रकृतिव्याप्या विकृतिः। विकृतिव्यापिकाप्रकृतिः। **नवमे**—प्रकृतौ साऽवकाशांगानां वैकृतविशेषांऽगैर्बाधादिः। **दशमे**—विकृतौ चोदकप्राप्तानां प्राकृतांऽगानां प्रकृतौ सावकाशानां विकृतौ ह्युपदिष्टविशेषांगादिना बाधः। **एकादशे**—अनेकविधिप्रयुक्तांगानां सकृदनुष्ठानात् सर्वांग्युपकारसाम्यं तन्त्रं निरूपितम्, **द्वादशे**—एकांगिप्रयुक्तांऽगानुष्ठानस्य तदसमर्थाऽङ्गतान्तरेऽप्युपकारित्वम्, इत्येवं द्वादशविधनिर्णयात्मको द्वादशात्मा न्यायो धर्मविषयकः श्रेयःप्रयोजको बोध्यबोधकसम्बन्धवान् धर्मजिज्ञास्वधिकारिपात्रकोऽयं मीमांसान्यायो विशदीकृतः। तद्विधे नये विवेके ज्ञाने पूर्ववेदभागतन्त्रे प्रवेशाय धीगत्यर्थाय, द्वादशानां विधिप्रमाणाद्यर्थानां संग्रहं संक्षिप्ताऽत्यौपयोगिकम् उद्देशलक्षणविनियोगात्मकम् अर्थसंग्रहनामकं कुरुते स्वव्यापारीकरोति।

**प्रणिनीय ( प्रणिनाय ), तत्राऽऽदौ धर्मजिज्ञासां सूत्रयामास— 'अथाऽतो धर्मजिज्ञासे'ति ।**

---

एतद्ग्रन्थस्य मीमांसादर्शनाऽऽधारतामावेदयितुं हेतुहेतुमद्भावसंगत्या सूत्रोपन्यासपूर्वकधर्मात्मकविषयैक्यव्यापृतिज्ञापनार्थमुपक्रमते—**अथ परमकारुणिक इति** । अथ—वेदाऽध्ययनाऽनन्तरम् , स्नातकानां 'धर्मविवेको जायतामि'ति या परमा करुणा, परमत्वं निर्व्याजविवेकोद्बोधनविषयित्वं, तद्वती धर्मविवेकदानदयावृत्तिः, तद्वान्, तथाऽनुकूलं यद्भगमैश्वर्यं सामर्थ्यं शक्तिरूपं, ज्ञानशक्तिगुणादि, तद्वान्, शिक्षणीयाऽपेक्षया भगवान्, न तु सर्वाऽपेक्षया, एतेन जैमिनेः यथार्थवक्तृत्वमाप्तत्वम् अवधेयवचनत्वमुपदर्शितम् , तन्मूलकतया एतद्ग्रन्थकारस्याऽपि च तथा । भगं—माहात्म्यम् अस्त्यस्येति, 'भगं श्रीकाममाहात्म्यवीर्ययत्नाऽर्ककीर्तिषु'इत्यमरः । 'भगं श्रीयोनिवीर्यच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ'इतिविश्वमेदिन्यौ । श्रीमान् ग्रन्थकामनावान् माहात्म्ययत्नकीर्तिमान् इच्छाज्ञानवैराग्यैश्वर्यधर्मवान् । जैमिनिः । परेषां धर्माऽधर्मयोर्विवेकाय, धर्मपदं धर्माऽधर्मोभयलाक्षणिकम् , विवेकाय—स्वरूपज्ञानाय, फलार्थमेकस्य ग्रहणायाऽपरस्य त्यागाय च । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः'इत्यमरः । धरति विश्वं धर्मः, पुण्यमपूर्वमदृष्टं धर्मः, सुकृतं कर्माऽपि धर्मः, यज्ञादिर्धर्मः, विधिना धर्मः, अविधिनाऽधर्मः, निषिद्धवर्तनम् अधर्मः, वर्षति फलं सुखं स्वर्गं चेति वृषो धर्मः, सुकृतक्रियाऽपि धर्मः, अतिशयं धर्मः, 'धर्मस्तु तद्विधिरि'त्यमरः । तेन वेदेन विधीयते यज्ञादिः, वेदविहितत्वं धर्मत्वम्, ध्रियते जनैरिति धर्मः, 'धर्माः पुण्ययमन्यायस्वभावाऽऽचारसोमपाः'इत्यमरः। 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसो- पनिषन्न्याये ना धनुर्यमसोमपे'इति मेदिनी । अपूर्वकर्मणोर्विवेकाय परिचेयाय चेत्यर्थः । विवेकः—पृथक्स्वरूपनिर्णयज्ञानम्, धर्माऽधर्माऽन्यताज्ञानं, तस्मै तदर्थम् । **द्वादशलक्षणीमिति** । लक्ष्यन्ते एभिर्विधिप्रामाण्यादीनीति लक्षणानि अध्यायाः, द्वादशानां लक्षणानामध्यायानां समाहारो द्वादशलक्षणी कर्ममीमांसा, तां **प्रणीनीय**—बुद्धौ संकलय्य आत्मनि संस्कारीकृत्य च, तत्र मीमांसायाम् , तद्घटकतयांऽगतया, **आदौ**—प्रारम्भे, शब्दरचनाऽऽरम्भे, **प्रणिनाय**—इत्यपि पाठः । बुद्धावाकलयामास, ततो धर्मजिज्ञासां प्रथमम् 'अथाऽतो धर्मजिज्ञासा' ( १।१।१ ) सूत्रयामास । तत्र मीमांसादर्शने सूत्रारब्धे सति प्रथमं धर्मस्याऽपूर्वस्य यज्ञादेश्च, धर्माय वा, जिज्ञासां, ज्ञातुमिच्छाम्, 'धर्मविषयकज्ञानार्थकेच्छावान् भवे'ति धर्मज्ञानेच्छाकर्मकभूतकालीनसूत्रव्यापारो जैमिनिनिष्ठ इतिबोधविषयव्यापृतसूत्रक्लृप्ति-

'अथ'—शब्दो वेदाऽध्ययनाऽऽनन्तर्यवचनः ।

मान् बभूव जैमिनिः। द्वादशाऽध्याये ग्रन्थे 'अथाऽतो धर्मजिज्ञासा' प्रथमं सूत्रम् , प्रथमसूत्रस्य विषयः 'चोदनालक्षणोऽर्थो धर्मः' (१।१।२)—इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' ( १२।४।४७ ) इत्यन्तं द्वादशाऽध्यायात्मकं धर्मविचारशास्त्रं विषयः। अन्वाहार्यम् आर्त्विज्यं दक्षिणादि च। चोदनाः प्रेरणा विध्यभिबोध्याः। प्रवर्तकवचनं विधिः—यजेतेत्यादिः। विधिना यो लक्ष्यतेऽर्थो यागानुकूलाव्यापारः, य एव श्रेयस्करः स एव धर्मः, धर्मः पुरुषं यजमानं निःश्रेयसेन संयुनक्ति, यजतिप्रभृतिशब्दवाच्यो धर्मः, अर्थो धर्मः, न त्वनर्थः, हिंसादिर्न धर्मः अनर्थकारी सोऽधर्मः, सः प्रतिषिध्यते, श्येनयागाद्याः शत्रुमारणार्थं निर्दिष्टा न तु कर्तव्यतयोपदिष्टाः, अभिचाराद्या अपि तथा, यो हि हिंसितुमिच्छेत् तस्याऽयमुपायः 'श्येनेनाऽभिचरन् यजेते'ति। अत्र शास्त्रविधिर्धर्मः, सर्वे धर्मा वेदमूलकाः, स्मृत्यादिधर्मा अपि तथाविधाः। वेदप्रमाणीकृते धर्मे तद्भिन्नप्रमाणानां गतिः। निसर्गाः स्वभावास्तु प्रकृतयो धर्मानुस्यूता धर्माः, अन्ये तु न धर्मा इति ॥

**'अथाऽतो धर्मजिज्ञासे'**ति ( १।१।१ ) सूत्रं धर्मं विषयं दर्शयति, तत्र संशयो ज्ञप्तिमताम्, पूर्वपक्षः प्रतिभाशालिनाम्, तत्खण्डनं न्यायशालिनाम्, तत्रोत्तरपक्षः सिद्धान्तशालिनाम्, ततो निर्णयः फलम्। 'धर्मो जिज्ञास्यो न वे'तिसंशयः, 'न जिज्ञास्यः स्वभावसिद्धत्वादि'ति पूर्वपक्षः, 'दुःखसाधनेष्वपि स्वभावसिद्धत्वात् अहेतुरिति'—खण्डनम् , 'अलौकिकफलप्रदधर्माणां गुर्वादिगम्यत्वाज्जिज्ञास्य'इत्युत्तरपक्षः, अथ गुर्वादयोऽप्यसर्वज्ञाः क्वचित्कुत्रचिद्भ्रान्ताः, अतो न तद्वाक्यजिज्ञास्यत्वम्। किं तर्हिः, वेदवाक्यार्थमात्रजिज्ञास्यत्वं निर्दोषत्वादिति सिद्धान्तः। तस्माद्वेदोदितधर्मो जिज्ञास्य इति ॥

अथाऽत्र द्वादशलक्षणशास्त्रमारम्भणीयमिति विषयः, प्रथमसूत्रमपि द्वादशलक्षणशास्त्रान्तर्गतमेव स्वं विषयः स्वं च विषयविचारकमपि, आत्मा ज्ञाता स्वयं विषयः स्वं विचारयतीतिवत्. विवेचकत्वेन एकव्यक्तित्वेनाऽऽत्मा विवेच्यात्मतत्त्वेनाऽऽत्मतत्त्वं समस्तं विचारयतीतिवत् , आरम्भसूत्रत्वेनाऽऽरम्भसूत्रं कृत्स्नमहाशास्त्रसूत्रार्थात्मकविवेच्याऽर्थसमस्तं विचारयतीति नाऽऽत्माश्रयाद्यापत्तिरर्थभेदापत्तिश्च, शास्त्रान्तर्गतत्वेनैव शास्त्रार्थचिन्तनप्रामाणिकत्वात्, शास्त्राऽनन्तर्गतत्वेन तु अशास्त्रीयत्वापत्त्या सूत्रस्य शास्त्रार्थचिन्तनेऽनधिकारपराहतत्वापत्तिः स्यात्, प्रामाणिकत्वार्थमन्याऽपेक्षायां तु तदर्थमन्यदन्यदित्यनवस्थापत्तिर्वा स्यात् , तस्मात् सर्वत्र शास्त्रादौ समस्तशास्त्रार्थविषयोद्देशादेरनुबन्धविन्यासांऽगीकृतत्वम्, मंगलादीनामपि तथा-

'अतः' शब्दो हि वेदाऽध्ययनस्य दृष्टार्थत्वं ब्रूते। 'स्वाध्यायोऽ-

---

विषया शास्त्रान्तर्गतत्वांगीकारात्। अतः शास्त्रं स्वयमेव स्वं प्रमाणयति स्वतःप्रमाणत्वात्, न तु स्वेतरत् स्वं प्रमाणयतीति न परतःप्रामाण्यापत्तिरिति ॥

अथाऽतोऽप्यत्र 'धर्मविचारशास्त्रमारम्भणीयमि'तिविषयः, वेदो दुर्बोधोऽत आरम्भणीयम्, शास्त्रकर्ताऽसर्वज्ञः, अतो नाऽऽरम्भणीयम्, तथा च संशयः—आरम्भणीयं न वेति। पूर्वपक्षः—नाऽऽरम्भणीयम्, वेदनैव निर्वाहात्। उत्तरपक्षः—गहनार्थकमात्रमारम्भणीयं न त्वगहनार्थकं, तदपि नाऽऽरम्भणीयमेव, तदाप्तमहर्षिप्रभृतितोऽपि शेषगहनाऽर्थाऽवधारणसुशकत्वादिति। अथ सिद्धान्तः—कृत्स्नवेदकाण्डार्थाऽवगमकैकव्यक्त्यभावात्, भिन्नानामसमवेतत्वात्, भिन्नतात्पर्यैश्च मिथो बाधात्, यावदैदम्पर्यनिर्णयाऽलाभाच्च,—समस्तधर्मकाण्डाऽवगमकशास्त्रमारम्भणीयमिति ॥

**अत्राऽथशब्द इति।** अत्र प्रथमसूत्रे, '**अथ**'शब्दो वेदाध्ययनाऽनन्तरार्थकः, आनुपूर्वीकमन्त्रपाठाद्यध्ययनाऽनन्तरम्, **अतः**—तदर्थसमन्वयितज्ञानप्राप्त्यर्थम्, धर्मजिज्ञासाशास्त्रं कर्तव्यं, वेदाध्ययनाऽनन्तरं वेदाऽर्थज्ञानं कर्तव्यम्। **अतः**—यतो वेदाऽध्ययनानन्तरम्, दर्शपूर्णमासादौ दृष्टार्थदाक्षिणादिलाभो भवति, अतो हेतोः, दर्शपूर्णमासादिकाण्डाऽर्थज्ञानं चाऽपेक्षणीयम्, तज्ज्ञानेन यज्ञाद्या यथार्थविधयः सम्पद्यन्ते, तदर्थज्ञानार्थं तादृशांऽगांऽगिस्वरूपक्रमद्रव्यदेवताफलादिबोधकं शास्त्रमारम्भणीयम् ॥

अथ द्वादशाऽध्यायात्मकजैमिनिशास्त्रारम्भो विषयः, 'स्वाध्यायोऽध्येतव्यः'—इत्यध्ययनविधिः। एतच्छास्त्रारम्भोऽध्ययनविधिप्रयोज्यो न वेतिसंशयः, अर्थज्ञानात्मकदृष्टार्थाय शास्त्रारम्भो विधिप्रयोज्यः। तत्र पूर्वपक्षः—अत्यन्ताऽप्राप्तज्ञानाय तु 'वेदाऽध्ययनम् अर्थज्ञानहेतुः अध्ययनत्वात् भारताद्यध्ययनवदि'त्यनुमानेन वेदाध्ययनेऽर्थज्ञानहेतुत्वसिद्ध्या तत्राऽध्ययनविधेरन्यथासिद्धत्वात् शास्त्रारम्भेऽपि अप्रयोजकत्वम्। लिखितपाठेन वा गुरुपूर्वकाऽध्ययनेनाऽर्थज्ञाने सति, पक्षे प्राप्तस्य नियामकोऽध्ययनविधिः प्रयोजक इत्यपि न, लिखितपाठजन्याऽर्थज्ञानेनैव क्रत्वनुष्ठानादिसिद्धेः, विधिरप्रयोजकः शास्त्रारम्भोऽप्यप्रयोज्यः। अत्रोत्तरपक्षः—अक्षरग्रहणमात्रं वा क्रतुजन्याऽपूर्वप्रयुक्तनियमाऽदृष्टं वा वेदाध्ययनप्रयोज्यं, न त्वर्थज्ञानं वा शास्त्रारम्भ इति। अथ सिद्धान्तः—नियमविधिः अत्यन्ताऽप्राप्तविध्यभावान्नोक्ताऽनुमानं सावकाशम्, न चाऽप्रयोजकम्, सकलक्रत्वपूर्वस्य प्रयोजकत्वात्, तथाहि—

ध्येतव्य' इत्यध्ययनविधौ तदध्ययनस्याऽर्थज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात्। तथा च। वेदाध्ययनानन्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तद-

---

क्रतुजन्याऽपूर्वजातमेव क्रतुज्ञानसाधनाऽध्ययननियमजन्याऽपूर्वकल्पकम्, इत्येवं नियमाऽदृष्टकल्पनम्, अर्थज्ञानतत्साधनयोर्लिखितपाठगुरुपूर्वकाऽध्ययनयोः पक्षे प्राप्तिः, लिखितपाठमात्रेणाऽर्थज्ञानार्थं पुरुषे प्रवृत्ते सति तत्र नियमाऽदृष्टाय गुरुपूर्वकाऽध्ययनमेवाऽर्थज्ञानसाधनं विधीयते, क्रतुजन्याऽपूर्वप्रयुक्तनियमाऽदृष्टस्वीकारे विधिसार्थक्यम्, अर्थज्ञानरूपदृष्टप्रयोजनायाऽध्ययनस्य विधेयत्वे नियमाऽदृष्टस्य क्रतुजन्याऽपूर्वे दृष्टफले उपयोगः, केवलाऽदृष्टफलार्थकत्वाऽनुपपत्तिः, विधिरेव वेदाध्ययनं वेदार्थज्ञानपर्यवसायीति, तदर्थनिर्णयहेतुविचारकर्तव्यतामाक्षिपति ।।

'स्वाऽध्यायोऽध्येतव्य' इत्यध्ययनविधिः ( तै० आ० २।१५।१ )। तत्र तव्यप्रत्ययः शाब्दभावनाऽभिधायकः, शाब्दभावना किञ्चिद्भाव्यमपेक्षते, तत्र एकप्रत्ययोपात्तार्थभावना भाव्यतया समन्वेति, अर्थभावनाऽपि किञ्चिद्भाव्यमपेक्षते, तत्र स्वाध्यायः कर्मभूत एव भाव्यतया सम्बध्यते, स्वाध्यायस्य भाव्यत्वोपपत्त्यर्थं फलवदर्थाऽवबोधपर्यवसायित्वं समापतति, अर्थनिर्णये सत्येव फलवदर्थाऽवबोधो भवति, अतोऽर्थनिर्णयहेतुर्विचारः कर्तव्य इत्यध्ययनविधिराक्षिपति, तस्मादर्थज्ञानरूपदृष्टप्रयोजनायाऽध्ययनं विधीयते—'स्वाध्यायोऽध्येतव्य' इति, न त्वक्षरमात्रग्रहणाय। तदेतदाह—**'अथ'** शब्दो वेदाध्ययनाऽऽनन्तर्यार्थकः, **'अतः'** शब्दो वेदाध्ययनं वेदार्थज्ञानरूपदृष्टार्थकमित्यर्थपरः, इत्यत्र हेतुमाह—**'स्वाध्यायोऽध्येतव्य'** इत्यादिना। अधीते—इत्यध्यायी स्वः, अधीयते—इत्यध्यायः, स्वस्य ब्रह्मचारिणोऽध्यायो वेदः स्वाऽध्यायः, सोऽध्येतव्योऽभ्यासेन कण्ठस्थः कर्तव्यः। **अध्ययनविधाविति।** अत्रेदं बोध्यम्—मीमांसादर्शनाऽऽरम्भे 'अथाऽतो धर्मजिज्ञासे'ति प्रथमं सूत्रं धर्मशास्त्रारम्भप्रतिज्ञाऽधिकरणम्। 'चोदनालक्षणोऽर्थो धर्म' इति द्वितीयं सूत्रं धर्मलक्षणाऽधिकरणम्। 'तस्य निमित्तपरीष्टि'रिति तृतीयं सूत्रं धर्मप्रमाणपरीक्षाऽधिकरणम्। 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादि'ति चतुर्थं सूत्रं धर्मप्रत्यक्षाद्यगम्यत्वाऽधिकरणम्। 'औत्पत्तिकस्तु शब्दस्याऽर्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चाऽर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्याऽनपेक्षत्वात्' इति पञ्चमसूत्रं धर्मविधिप्रामाण्याधिकरणम्। पञ्चमाधिकरणेन धर्मविधिप्रामाण्याद् विधिना धर्मप्रामाण्यात् धर्मलक्षणस्वरूपप्रामाण्याद्धर्मशास्त्रारम्भोऽपि प्रमाणं तत्प्रयोजकोऽध्ययनविधिरपि प्रमाणमिति। इत्येवम्—**अध्ययनविधौ**—अध्ययन-

ध्ययनमतो हेतोर्धर्मस्य वेदार्थस्य जिज्ञासा कर्तव्येतिशेषः। जिज्ञासापदस्य विचारे लक्षणा। अतो धर्मविचारशास्त्रमिदमारम्भणीयमिति—शास्त्रारम्भसूत्रार्थः। अथ को धर्मः ?, किं तस्य लक्षणमिति चेत् ?, उच्यते,—यागादिरेव धर्मः, तल्लक्षणं—'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म'इति। प्रयोजनेऽतिव्याप्तिवारणाय—प्रयोजनवदिति। भोजना-

---

विधिविचारे प्रथमाधिकरणे एव, **तदध्ययनस्य**—वेदाध्ययनस्य कण्ठस्वीकृतवेदस्य, अर्थज्ञानरूपदृष्टार्थकत्वं मीमांसाशास्त्रप्रयोज्यमिति व्यवस्थापितम्॥

एकैकाधिकरणस्य विषयः संशयः संगतिः पूर्वपक्षः सिद्धान्तश्चेति पञ्चावयवाः, विषयसंशयपूर्वपक्षोत्तरपक्षसिद्धान्तप्रयोजनसंगतयोऽधिकरणे यथायोगं भवन्ति, जैमिनिप्रोक्तानि धर्मनिर्णायकान्यधिकरणानि न्यायाः, ते च मीमांसान्याया ग्रन्थविषया अत्र॥

व्यवस्थापितमर्थमाह—**तथा चेति**। वेदाध्ययनस्य तदर्थज्ञानात्मकदृष्टार्थकत्वे सिद्धे सति। कण्ठस्वीकरणात्मकस्य वेदाध्ययनस्याऽनन्तरमेव। **यतः**—यतो हेतोः, **तदध्ययनं**—वेदाध्ययनम् अर्थज्ञानरूपदृष्टार्थकम्, **अतो** हेतोः, वेदाध्ययनानन्तरं वेदार्थस्य, **धर्मस्य**—ज्ञेयस्य, **जिज्ञासा**—वेदार्थनिर्णयहेतुःपदार्थनिर्णयहेतुः विचारः,—इष्टविमर्शः,—अधिकरणयोजनाभिः कर्तव्यः 'धर्मज्ञानं जायतामि'तीच्छाविषयो ज्ञानफलको धर्मो विचारणीयः। इत्येवम् अध्ययनविधिप्रयोज्य एव शास्त्रारम्भः, शास्त्रं कर्तव्यविषयमिति। **शेषः**—'कर्तव्या'—इतिशेषम् अवशेषपदं योक्तव्यम्॥

अथ जिज्ञासाशक्यार्थो ज्ञानेच्छा, साऽऽत्मवृत्तिः, सा न यज्ञवत् कर्मकाण्डवत् विचारवत् निर्णयवत् वा कर्तुं घटयितुं प्रबन्धयितुं ग्रथितुं रचयितुं वा शक्या, कृतिव्यापाराद्यगोचरत्वात्, ज्ञानोत्तरमिच्छाया जायमानत्वात्, इच्छामात्रेण चाऽनुष्ठानादिधर्मज्ञानाऽसम्भवात्, अतो लक्षणया जिज्ञासापदस्याऽर्थमाह—**विचारे लक्षणेति**। जिज्ञासेति 'ज्ञानं तुम् इच्छा' 'ज्ञा तुम् सन्' इतिप्रकृत्या ज्ञानमात्रे शक्तिः, अनुष्ठानोपयोगिज्ञानेऽजहल्लक्षणा, प्रत्ययार्थः साध्यसाधनभावसम्बन्धः, जहल्लक्षणया इच्छासाध्यो विचारो बोध्यते। धर्मानुष्ठानोपयोगिज्ञानसाधकविचारः कर्तव्य इत्यर्थः। एनमर्थमाह—**अतो धर्मेत्यादिना**। लक्षणाकरणात्, **अतः**—स्वाध्यायाऽध्ययनविधेः शास्त्रारम्भे प्रयोजकत्वाद्धेतोः। धर्मविचारकमिदं मीमांसाशास्त्रं द्वादशाऽध्यायात्मकं समारम्भणीयमिति शास्त्रान्तर्गतप्रथमसूत्रस्याऽर्थः। धर्मो विचारार्हः अनुष्ठानोपयोगिज्ञानविषयत्वादितिप्रयोगोऽपि॥

दावतिव्याप्तिवारणाय—वेदप्रतिपाद्य इति। अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणायाऽर्थ इति।

---

अथ—उद्दिष्टः पक्षो धर्मः स्वरूपतो लक्षणतो वाऽज्ञातो न विचारार्हो भवतीति धर्मस्वरूपं तत्त्वं पृच्छति—**को धर्म इति**। क्रिया यज्ञादिः, पुण्यमपूर्वात्मकं च स्वरूपं धर्मः। लक्षणं पृच्छति—**किं तस्येति**। धर्मस्य **लक्षणं** तटस्थं कीदृगिति। सजातीयविजातीयव्यावर्तकं वृत्तितया स्थितं तटस्थं लक्षणमिति। स्वरूपलक्षणमाह—**यागादिरेवेति**। वेदविहितक्रियाद्रव्यफलार्थविहितांऽगगुणफलयोजकाऽतिशयादीन् धर्मानभिप्रेत्योक्तं यागादिरिति। एवकारेण चैत्यवन्दनाद्यास्तथाऽनर्थाश्च निवार्यन्ते। तटस्थलक्षणरूपमाह—**वेदप्रतिपाद्य इति**। वेदविहितः। **प्रयोजनवत्**—प्रयोजनं सुखं स्वर्गादि फलं, सम्पादकत्वसम्बन्धेन फलवत्त्वं साक्षात्परम्परया वा फलप्रदत्वम्। 'अर्थः श्रेयस्करः 'चोदनालक्षणोऽर्थो धर्मः' (१।१।२) इतिसूत्रस्य भाष्यम्—"चोदनालक्षणोऽर्थः श्रेयस्करः, य एव श्रेयस्करः स धर्मशब्देन उच्यते, यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते। उभयमिह चोदनया तु लक्ष्यतेऽर्थोऽनर्थश्चेति। कोऽर्थः?, यो निःश्रेयसाय ज्योतिष्टोमादिः, कोऽनर्थः?, यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः। तत्राऽनर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम्। कथं पुनरसावनर्थः?, हिंसा हि सा, हिंसा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्तव्यतयोपदिश्यते?। उच्यते—नैव श्येनादयः कर्तव्या विज्ञायन्ते, यो हि हिंसितुमिच्छेत् तस्याऽयमुपाय इति हि तेषामुपदेशः, 'श्येनेनाऽभिचरन् यजेते'ति हि समामनन्ति—'नाभिचरितव्यमि'ति। अर्थश्च धर्मो नाऽनर्थः"। 'तद्व्यपदेशं चेति (१।४।५) सूत्रभाष्यं—"यथा वै श्येनो निपत्याऽऽदत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते यमभिचरन्ति श्येनेने'ति श्येनः कर्मनामधेयमिति"। ततः श्येननामकं कर्म—अनर्थः, तज्जन्यः शत्रुवधो हिंसाऽनर्थः, हिंसाजन्यो नरकोऽनर्थः, साक्षात्परम्परया वा नरकजनकत्वम् अनर्थत्वम्, वेदबोधिताऽनर्थसाधनताकत्वम् अधर्मत्वम्, एतल्लक्षणाऽऽक्रान्तः श्येनोऽनर्थोऽधर्मः, तद्वारणाय—अर्थपदम्, तेन 'वेदविहितत्वे सति प्रयोजनवत्त्वे सति अर्थत्वं धर्मत्वमि'त्येतल्लक्षणस्य श्येने नाऽतिव्याप्तिः। यागतया श्येनस्य साक्षादिष्टसाधनत्वेन धर्मत्वेन वेदनिर्दिष्टत्वेऽपि वेदविधिविहितत्वाऽभावेन धर्मलक्षणाऽनाक्रान्तत्वान्न धर्मत्वम्। श्येनवज्राऽभिचाराद्या अनर्था न कर्तव्या वेदविहिताः, अपि तु शत्रुमारणादिसाधनतया निर्दिष्टास्तत्राऽनर्थेषु नाऽतिव्याप्तिः। अथ फलं स्वर्गः सुखं प्रयोजनं, तस्य प्रयो-

**न च—'चोदनालक्षणोऽर्थो धर्म'इतिसौत्रतल्लक्षणविरोधः, चोदनापदस्य विधिरूपवेदैकदेशपरत्वादिति'—वाच्यम्। तत्रापि चोदना-**

---

जनान्तरवत्त्वाऽभावेन स्वर्गे सुखे नाऽतिव्याप्तिः। तृप्त्यादिप्रयोजनवति रागादिप्राप्ते भोजने पाने भोगे वा वेदविहितत्वाऽभावादेव नाऽतिव्याप्तिः। 'चोदनालक्षणोऽर्थो धर्म'इति तु 'यो धर्मः स चोदनालक्षणः'—इत्येवंवचनव्यक्तिः, न तु यः चोदनालक्षणः स धर्मः, धर्मेऽथत्वस्य नित्यसिद्धत्वात् धर्ममात्रमुद्दिश्य चोदनालक्षणत्वं विधीयते, अर्थशब्दस्य नित्याऽनुवादत्वात्। अतः श्येनादयो नाऽर्था नाऽपि धर्माः॥

धर्मा अर्थाश्च—स्वर्गं सुखं पुण्यमदृष्टमपूर्वं तत्साधनज्योतिष्टोमाद्याश्च॥ व्यावर्तकत्वं लक्षणस्य लक्षणम्, व्यावृत्तिः—इतरभेदाऽनुमितिः, इतरभेदनिर्णयो वा। अतिव्याप्तिः—अलक्ष्ये लक्षणगतिः। लक्ष्यं तद्वृत्तयोद्दिष्टम्॥

अथ 'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः'। 'चोदनालक्षणोऽर्थो धर्मः'। इत्यनयोर्लक्षणयोः पार्थक्यम्, द्वितीयलक्षणे वेदस्य फलवत्त्वस्य चाऽनिवेशात्; अवैदिकचोदनानामपि धर्मत्वापत्तेः। 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'इतिचोदनालक्षण्या ब्रह्ममीमांसाया अपि कर्ममीमांसत्वापत्तिः, चोदना प्रेरणा विधिः, प्रतिपाद्यत्वं वर्णितत्वं कथितत्वम्, अनयोः पदार्थयोर्भेदाच्च अनैकान्त्याद्विरोधाच्चेत्याशंकते—**न चेति**। 'चोदनालक्षणोऽर्थो धर्मः' (१।१।२) इति सौत्रं धर्मलक्षणम्, तस्य भाष्यं—'चोदने'तिक्रियायाः प्रवर्तकं वचनमाहुः, आचार्यचोदितः करोति, लक्ष्यते येन तल्लक्षणम्, यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्ति, चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थमवगमयितुम्। चोदनैव लक्षणं प्रमाणं यस्य, चोदनालक्षणमेव यस्येति द्वेधा विग्रहः, प्रथमविग्रहेण प्रत्यक्षादेर्धर्मे प्रामाण्यं व्यावर्त्यते, द्वितीयेन चोदनाया अप्रामाण्यशंका व्यावर्त्यते, लक्षणं ज्ञानजनकम्, चोदनाप्रमाणकत्वलक्षणस्य चोदनारूपप्रमाणस्य च संभवाद्धर्मविचारः कर्तव्यः। क्रियाया यत्किञ्चिदितिकर्तव्यताकयागादिरूपायाः प्रवर्तकं प्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनाबोधकलिङादिप्रत्ययघटितं वचनं 'यजेत स्वर्गकाम'इत्यादिरूपं वाक्यं चोदना नोदना प्रवर्तना प्रेरणा, किं केन कथमित्यपेक्षितैः साध्यसाधनेतिकर्तव्यताकैः पूर्णः सम्बद्धार्थको लिङादिर्विधौ पुरुषप्रवर्तने समर्थो भवतिः तत्पूरकं च वाक्यं प्रवर्तकम्, तद्वाक्यमेव चोदनापदार्थः। तादृशवाक्यप्रमाणकोऽर्थो धर्मः क्रत्वादिः। **तल्लक्षणं**—'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः' इति च लक्षणम्, तयो-

**शब्दस्य वेदमात्रपरत्वात् । वेदस्य सर्वस्य धर्मतात्पर्यवत्त्वेन धर्मप्रतिपादकत्वात् । स च यागादिः 'यजेत स्वर्गकाम'इत्यादिवाक्येन**

---

विरोधः, तदभावव्याप्तिर्विरोधः, धर्मे पक्षे एकलक्षणस्य सत्त्वेऽपरलक्षणस्याऽभाववत्त्वे विरोधः । **विरोधः**—इति । पूर्वलक्षणेन सह सौत्रलक्षणस्य विरोधं दर्शयितुं सौत्रलक्षणघटकचोदनापदार्थमाह—**चोदनापदस्येति** । वेदो विधिमन्त्रनामधेयनिषेधाऽर्थवादात्मकः पञ्चधा । पूर्वलक्षणे वेदपदेन पञ्चधात्मकग्रहणम् , अत्र तु चोदनापदेन विधिरूपवेदैकदेशमात्रग्रहणम् , तथा च—विधिवाक्यप्रामाणिकार्थत्वं धर्मत्वम् , विधिमन्त्रनामधेयनिषेधार्थवादात्मकवेदवाक्यप्रतिपादितार्थत्वं धर्मत्वम् , इति तत्र विधिभिन्नवेदवाक्यप्रतिपादितार्थात्मकेषु धर्मत्वेनाऽभिमतेषु विधिमात्रवाक्यप्रामाणिकाऽर्थत्वस्याऽभाववत्त्वं, वेदपदघटितलक्षणवत्सु च चोदनापदघटितलक्षणाऽभाववत्त्वं विरोधः । तल्लक्षणाऽभावव्याप्तिर्विरोधः । 'धर्मः विधिमन्त्रनामधेयनिषेधाऽर्थवादात्मकवेदप्रतिपादितार्थत्ववान्, विधिमात्रप्रामाणिकाऽर्थत्ववत्त्वात्' । 'धर्मः इतरभिन्नः वेदप्रतिपादितार्थत्ववत्त्वात् , विधिप्रतिपादितार्थत्ववत्त्वाच्च वा'-इतिरीत्या सौत्रीयविधिघटितव्याप्यसंकुचितलक्षणाऽभाववत्त्वं वेदघटितप्रतिपाद्यार्थत्ववति लक्षणे विरोधः । तल्लक्षणवत्सु विधिभिन्नेषु सर्वत्र सौत्रलक्षणाऽभावव्याप्तिमत्त्वं विरोधोऽस्ति । एतदाह—**चोदनापदस्येति** । चोदनायाः वेदैकदेशविधिमात्रार्थकत्वात् । समाधत्ते—**तत्रापि** । सूत्रेऽपि, **वेदमात्रपरत्वात्** , चोदनापदं वेदपदस्थाने प्रयुक्तं, लक्षणपदं प्रतिपाद्यस्थाने प्रयुक्तं, प्रयोजनवत्पदं सौत्रलक्षणे प्रवेशनीयं, तथा च—अर्थसंग्रहे कृतं यल्लक्षणं तत्रैव सौत्रलक्षणस्यैक्यमिनि न विरोधः । **वेदस्य सर्वस्येति** । विधिमन्त्रनामधेयनिषेधाऽर्थवादात्मककृत्स्नवेदस्य साक्षात्परम्परया वा विविधप्रकारैर्वाऽन्ततो धर्मे तात्पर्यवत्त्वेन 'इष्टसाधनत्वेन वेदबोधितत्वमि'तिसामान्यस्य धर्मत्वस्य तु सर्वत्र सत्त्वेन वेदस्य धर्मस्यैव प्रतिपादकत्वात् परिहार्यतयाऽधर्मस्याऽपि प्रतिपादकत्वात् न विरोधो न वा लक्षणद्वयं, सामान्यलक्षणे विशेषपदनिवेशे विशेषलक्षणत्वेन विरोधाऽभावात् । निषिद्धाऽधर्मोऽपि न कर्तव्यतया तु धर्मः, अनर्थस्त्याज्यतया तु धर्मः, अर्थवादोऽन्यार्थपरत्वेन तत्कर्तव्यतया धर्मः, मन्त्राः प्रयोगसमवेतार्थस्मारकत्वेन तत्कर्तव्यतया धर्मः, नामधेयानि विधेयार्थपरिच्छेदकत्वेन तत्कर्तव्यतयाधर्मः, द्वयोर्लक्षणयोरैक्येन धर्मलक्षणस्य धर्मे प्रमाणपरत्वे तात्पर्यान्न वाक्यभेदप्रसंगोऽपि ॥

**सः** धर्मलक्षणलक्षितो **यागादिः** यागक्रियाकलापः, आदिना—अपूर्वं कामना

**स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते, तथाहि—'यजेते'त्यत्राऽस्त्यंशद्वयं—यजिधातुः प्रत्ययश्च, प्रत्ययेऽप्यस्त्यंशद्वयम्—आख्यातत्वं लिङ्त्वं च, तत्राऽऽख्यातत्वं दशलकारसाधारणं, लिङ्त्वं पुनर्लिङ्मात्रे,—**

---

अर्थज्ञानं संस्काराश्चेति ग्राह्याः। श्रुतिसिद्धे धर्मेऽन्यप्रमाणानामनुवादकत्वं, क्वचित्क्वचित्तु वेदविहिते धर्मे मध्ये मध्ये पश्चाज्जायमानानां प्रमाणान्तरमात्रग्राह्याणां गुणक्रियासंसर्गविनियोगव्यूहरचनादिव्यष्टिपदार्थानां ग्रहणे प्रामाणिकत्वे यथावश्यकेऽर्थात्सिद्धेतरे सावकाशत्वेन प्रमाणान्तराणामपि साफल्यं प्रामाण्यं च। अलौकिकस्याऽपि धर्मस्यलौकिकधर्माऽन्वितत्वेन स्वतःप्रमाणचोदनाया अनुगामित्वं प्रमाणान्तराणां नोपेक्षाऽर्हम्। चोदनायाः स्वविषये धर्मेऽबोधकत्वं सापेक्षत्वं च तु किञ्चिन्मात्रमपि नास्ति। अतश्चोदनायाः स्वतःप्रामाण्यं धर्मे, अतश्च विधायकत्वमिति दर्शयति—**'यजेत स्वर्गकाम'इत्यादिवाक्येनेति**। 'पुरुषनिष्ठः स्वर्गकामभावितो यागव्यापार'इति बोधः। यथेष्टसुखं स्वर्गम्, यागो यजनं पूजनादि। **इत्यादिवाक्येनेति**। आदिना 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'न हिंस्यात् सर्वा भूतानि' 'वेदमधीत्य स्नायात्' 'कारीर्या वृष्टिकामो यजेते'-त्यादिवाक्यानि ग्राह्याणि। एतेषां विधिवाक्यानां धर्मे स्वतःप्रामाण्यम्। वेदो नित्यः शब्दब्रह्म अपौरुषेयश्च। पौरुषेयशब्दादिषु त्रेधा पुरुषप्रवेशः—पदपदार्थसम्बन्धद्वारेण वाक्यवाक्यार्थसम्बन्धद्वारेण वाक्यरचनाद्वारेण च। एतत्त्रयमपि वेदे नित्यमेव, न तु क्लृप्तं केनाऽपि पुरुषेण, अतः संशयविपर्ययादिप्रयुक्तशब्दभिन्नयथार्थशब्दादिस्वरूपत्वात् स्वतःप्रमाणो वेदः आप्ताऽनाप्तव्यक्तिस्पर्शरहित एवाऽनपोदितप्रमाणः॥ ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एवेति सांख्याः, उभयमपि कारणगुणदोषादिनेति तार्किकाः, अप्रामाण्यस्य स्वतस्त्वं प्रामाण्यस्य च परतस्त्वमिति बौद्धाः, प्रामाण्यंसाक्षिग्राह्यमिति सर्वज्ञानानि यथार्थानीति च स्वामिनारायणीयाः, प्रामाण्यं स्वतोऽप्रामाण्यमेव परत इति तु मीमांसकाः। **इतिवाक्येनेति**। विधिवाक्यैः, **यागादिः** क्रियाकाण्डादिर्धर्मः, **स्वर्गमुद्दिश्य**—फलं सुखं सुखस्थानं च प्रयोजनम् यजनकर्तृर्लब्धिविषयं स्यादिति संकीर्त्य, **पुरुषं प्रति**—यागाऽधिकारिणं प्रति, यागाधिकारिजनार्थकमेवेति। **विधीयते**—कर्तव्यतयाऽऽज्ञाप्यते। मानसविषयं तव स्वर्गं सिद्धवदिति निर्दिशति, तत्साधनम् आज्ञातो यागोऽनुष्ठेय इति प्रतिपादयति विधिवाक्यम्।

**अथ यागादेरपूर्वद्वारा भावितस्वर्गादिनिष्पादकत्वं प्रत्ययार्थभावनां विधे-**

उभाभ्यामंशाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनाऽनुकूलो भावयितुर्व्यापारविशेषः। सा द्विधा--शाब्दीभावना आर्थीभावना चेति।

---

विधायकत्वं च दर्शयितुं 'यजेते'तिपदं व्यासीकृत्य तत्तदंशाऽर्थान् स्फुटीकरोति, तथाहि—**यजेतेत्यत्रेत्यादिना**। तेन पूर्वदर्शितप्रकारेण हि, 'यजेते'तिप्रकृतिर्यजिधातुः आख्यातः तिप्रत्ययश्चेति—अंशद्वयम्। अंशत्वं विभागाऽर्हाऽवयवत्वम्। यजिधातुर्यजनाऽनुष्ठानव्यूहात्मकाऽर्थपरः। तिप्रत्ययेऽस्त्यंशद्वयम्। अंशत्वं गुणतया प्रसक्तिमत्त्वम्। प्रत्ययः प्रकृतिं प्रति अयते यः सः गौणतया प्रसक्तः। **प्रत्ययेऽपीति**। प्रकृतिम् आख्याति अत आख्यातः तिः, रूपपरिकर्माऽर्थं लिङिति चेति संज्ञा। तेन आख्यातत्वं लिङ्त्वं चेति अंशद्वयात्मकः तिप्रत्ययः। **तत्र**—आख्यातत्वलिङ्त्वयोर्मध्ये। आख्यातत्वं त्यंशो दशलकारसाधारणः। लट्लिट्लुट्लृट्लेट्लोट्लङ्लिङ्लुङ्लृङ्साधारणोंऽश आख्यातत्वम्। लिङ्त्वं लिङ्मात्रे। आख्यातत्वलिङ्त्वाभ्यामुभाभ्यां त्यंशाभ्यां भावनाऽभिप्रायो व्यापारविशेषः। **एवकारः** आख्यातस्य कर्त्रादिवाचकं कृतिमद्वाचकत्वं वारयति। **उच्यते**—तथाविधे व्यापारे शक्तिमत्त्वम्। शक्तिर्वृत्तिर्नित्या, पुरुषाऽनपेक्षणादिच्छाया असंभवात्। भावनां स्फुटयति—**भावना नामेति**। आख्यातसंज्ञा लिङ्संज्ञा चाऽनादिनी, नित्यत्वात्। व्याकरणेन तु साऽनुवादिता। भावनाऽपि अनादिनी नित्या कर्त्रभावात्। मीमांसया तु साऽनुवाद्यते शिक्षणार्थम्। **भवितुरिति**। स्वरूपलक्षणं व्यापारविशेष इति। **भवितुः**—उत्पद्यमानस्य, **भवनानुकूलः**—उत्पत्त्यनुकूलः, **भावयितुः**—उत्पादयितुः, प्रयोजकस्य, **व्यापारः**—प्रवर्तनारूपः णिजन्तेन भावनाशब्देनोच्यते। शब्दस्य प्रत्ययस्य नित्यत्वात्तन्निष्ठाभावना नित्या। उत्पद्यमानस्यौदनस्य उत्पत्त्यनुकूलः पाचकस्य व्यापारो भावना। उत्पद्यमानायाः शिष्यस्य प्रवृत्तेरुत्पत्त्यनुकूलः प्रवर्तकगुरोः अभिप्रायो भावना। 'यजेत स्वर्गकाम'इत्यत्रोत्पद्यमानस्य यजनस्य स्वर्गस्य वोत्पत्त्यनुकूलो यजनकर्तुः स्वर्गकामस्य व्यापारः, उत्पद्यमानायाश्च स्वर्गकामप्रवृत्तेरुत्पत्त्यनुकूलो लिङो व्यापारो भावना। अन्योत्पादनानुकूलो भावुकस्य व्यापारो धात्वर्थाऽतिरिक्तः सर्वधात्वर्थसम्बद्धाकारेण भासमानो व्यापारो भावनासामान्यपदार्थः। अन्योत्पादनानुकूलस्वरूपा साध्यरूपिणी भावना व्यापारः। अथ (१।१।५) भाष्यं—'व्यापारः प्रवृत्तिर्वा—यः स्वयं पश्यति न ततोऽन्यः पुरुषः—इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते'। अथ—(१।१।५) भाष्यं—'तदाऽसौ पुरुषः

पूर्वेद्युः सामिकृतानामर्थानां प्रतिसमाधाने शेषाऽनुष्ठाने च यतते ऽतः प्रवृत्त्याऽवगम्यते—नूनमसावनित्यान्नित्यमवगच्छतीति । अथ ( १।१।७ ) भाष्यं—'तदभिधीयते पदधर्मोऽयम्' । अथ ( १।१।२५ ) सूत्रं—'तद्भूतानां क्रियाऽर्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' । अथ टीका—'क्रिया साध्यसाधनेतिकर्तव्यताविशिष्टा भावना' । अर्थः—प्रयोजनम्, तथा च 'तादृशविशिष्टक्रियाप्रतीतिरूपप्रयोजनोद्देशेति' । तथा च सूत्रार्थः—'लोकसिद्धेषु पदार्थेषु वर्तमानानामेव पदार्थानां विशिष्टक्रियारूपवाक्यार्थज्ञानोपायत्वान्न पृथग्वाक्यस्य वाचकत्वम् । वाक्यार्थो हि शब्दार्थमूलकः । अथ ( १।१।७ ) भाष्यं—'पदानि हि स्वं पदार्थमभिधाय निवृत्तव्यापाराणि अभिधा व्यापारः पदार्थेष्वेव'। 'प्रयुज्यमानानां स्वस्वार्थमात्रप्रतिपादकानां पदानाम् अभिधा व्यापारः पदार्थेषु पर्यवस्यति' । 'पदानां विशिष्टभावनारूपवाक्यार्थगतिरूपप्रयोजनोद्देशः' । 'पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थं इति (१।१।८।२६) भाष्यम् ।। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'सोमेन यजेत' इतिवाक्यानि साध्यसाधनेतिकर्तव्यताविशिष्टाऽर्थभावनविषयकविधिनिषेधप्रतिपादकानि भवन्ति' । अथ—( १।१।८।३२ ) भाष्यं—'विनियुक्तं हि दृश्यते परस्परेण सम्बन्धार्थम्, कथम् ?, 'ज्योतिष्टोमेन' इत्यभिधाय 'कर्तव्य' इत्युच्यते । केनेत्याकांक्षिते—सोमेनेति । किमर्थमिति—स्वर्गायेति । कथमिति—इत्थमनया इतिकर्तव्यतयेति । एवंपदार्थैः पिण्डतो वाक्यार्थो भवति । अथ (१।२।१।७) भाष्यं—'सकलस्य तावद्भेदस्य 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनभावना विधीयते, तत्र किं भावयेत् ?, अध्ययनम् इत्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेनाऽपुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेस्तदंशान्निराक्रियते, ततश्चाऽध्ययनेनेत्यविरोधात् सन्निधेश्च करणांऽशे निविशते, तेन किमित्यपेक्षिते यच्छक्यते इत्युपबन्धाद् अक्षरग्रहणमित्यापतति, तस्याऽप्यपुरुषार्थत्वात् तेन किमितिपदावधारणमित्युपतिष्ठते, तेनाऽपि पदार्थज्ञानं तेन वाक्यार्थज्ञानं तेन चाऽनुष्ठानम् अनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकांक्षी भवति । एवं सर्वेषां भावनाऽन्तर्गतिः ।।

लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते शब्दात्मिका चाऽर्थात्मिका च । परिस्पन्दपरिणामविलक्षणः पुरुषप्रवृत्त्यात्मकाऽर्थभावनोत्पत्त्यनुकूलो लिङादिशब्दस्य व्यापारविशेषः शब्दभावना । धात्वर्थक्रियापरिस्पन्दपरिणामोऽर्थभावना, धात्वर्थंव्यतिरेकेण एषा न लभ्यतेऽतः सर्वधात्वर्थसामान्याऽऽर्थीभावना । वस्तुतः—पदार्थनिष्ठा परिस्पन्दक्रिया व्यापृतिः प्रवर्तना प्रवृत्तिः यत्न। योजनाऽर्थभावना । अर्थेष्वेषा गम्यतेऽर्थसम्पादनस्वरूपा । यथा—

**तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना । स च लिङंशेनोच्यते । लिङ्श्रवणेऽयं मां प्रवर्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः । यद् यस्माच्छब्दान्नियमतः प्रतीयते तत् तस्य वाच्यम्, यथा गामानयेत्यस्मिन् वाक्ये गोशब्दस्य**

---

ओदनगता पाचकस्य भावना विक्लित्तिपरिणामक्रियारूपा, एषा वासना इच्छा प्रवृत्तिरित्यादिभावभवनरूपा भावना लोके कल्प्यते । 'घटं कुर्यादि'ति-प्रवर्तकस्येच्छाऽभिप्रायस्तात्पर्यमाशयो भावना प्रवर्त्यस्य कुर्यामिति क्रिया-व्यापारभावनाऽऽख्याततत्वांऽशेनोच्यते ।।

शाब्दीं भावनां व्युत्पादयति—**तत्र पुरुषप्रवृत्त्यनुकूल इति** । तत्र तयोः शब्दभावनाऽर्थभावनयोर्मध्ये, प्रयोज्यपुरुषप्रवृत्त्यात्मकाऽर्थभावनाया उत्पत्त्य-नुकूला लिङादिशब्दनिष्ठा लिङादिशब्दस्य व्यापाररूपा लिङ्त्वादिना लिङाद्यर्थरूपा भावयितुः प्रयोजकस्य प्रवर्तकस्य लिङः वाच्या व्यापृतिरूपा शाब्दीभावना प्रोच्यते । **सा चेति** । शाब्दीभावना लिङंशशब्दवाच्या । तत्राऽनुभवं प्रमाणयति—**लिङ्श्रवणे इति** । यजेत कुर्यादित्यादिलिङ्प्रयोग-श्रवणे, अयं लिङ् मां प्रवर्त्यं श्रोतारं यजनादिक्रियां प्रति प्रवर्तयति प्रेरयति, मम प्रवर्त्यस्य श्रोतुः, या प्रवृत्तिः यजनाद्युत्पत्त्यनुकूला प्रवर्तना, तत्प्रेरको भावना गुणो लिङ्शब्दनिष्ठः । 'पुरुषप्रवृत्त्यनुकूलव्यापारो लिङ्शब्दनिष्ठः लिङ्शब्दान्नियमेन प्रतीयमानत्वात्' 'पुरुषप्रवृत्त्यनुकूलव्यापारो लिङ्प्रत्यय-वाच्यः लिङान्नियमेन प्रतीयमानत्वात्, यो यस्मात्प्रतीयते स तस्य वाच्योऽर्थः, स एव भावनाख्योऽर्थः । अत्र व्याप्तिं दर्शयति—**यद्यस्मादिति** । यत् एकत्वं यस्मात् सुप्रत्ययान्नियमतः प्रतीयते बुद्ध्यते तत् एकत्वं सुप्रत्ययस्य वाच्यं शक्यार्थः भाव्योऽर्थः स्त भावना लिङ्वाच्या । उदाहरति—**यथेति** । गाम् आनयेत्यत्र गोशब्दस्य गोत्वे जातावेव शक्तेः गोत्वं वाच्यम्, सुप्रत्ययस्य एकत्वं वाच्यम्, आपूर्वकनिवातोः आनयनक्रिया वाच्या, लोटः आज्ञा वाच्या, अभिप्राय इच्छा इति पुरुषनिष्ठा लोके, वेदे तु प्रवर्तना लिङादिवाच्या पुरुषप्रवृत्तिहेतुः । प्रैषाः पुरुषाऽऽशयाः विधिवाच्याः । प्रवर्तनात्वं प्रवृत्त्यनुकूल-व्यापारत्वम्, अनुकूलत्वं जनकत्वादिरूपम् । लोके प्रवर्तना पुरुषाऽऽशय-निष्ठा । वेदे तु पुरुषाऽभावात् पुरुषाऽऽशयभिन्ना लिङादिशब्दनिष्ठा व्यापार-रूपा प्रवर्तना सा भावना । भावनां लौकिकशब्दस्थां दर्शयति—**स च व्याप्यारविशेष इति** । लौकिकवाक्ये 'गामानये'त्यादौ प्रयोजकवृद्धोक्तशब्द-निष्ठोऽभिप्रायो व्यापारस्तात्पर्यमिच्छा, सा विषयतया शब्दगता सतो

गोत्वम् ॥ स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्राय-विशेषः । वैदिकवाक्ये तु पुरुषाऽभावाल्लिङादिशब्दनिष्ठ एव । अत एव

---

शक्त्यादिरूपाऽर्थप्रतीतिजनिका, न्यायमते सा तिप्रत्ययार्थः कृतिः प्रयत्नः । अभिधावृत्तिरित्यपि वर्ण्यते । वक्त्रिच्छारूपं तात्पर्यं वा सा ॥

अथ लौकिके वाक्ये प्रयोगः—'ओदनं पचेदि'त्यत्र—ओदनपचनम् इष्ट-साधनम्, अत्र प्रवर्ततामित्याकारकाऽऽप्तेष्टप्रवृत्तिविशेषविषयत्वात्, यन्नैवं तन्नैवं यथा 'गगनं खादे'दितिप्रतारणवाक्योपस्थितं गगनखादनम् । अत्र पुरुषनिष्ठो व्यापारविशेषः प्रवृत्तिविषयः प्रवृत्तिजनकोऽभिप्रायविशेषः । लौकिकोऽयमभिप्रायः प्रैषोऽतिसर्गः प्रेषणा आज्ञा अध्येषणा अनुज्ञा अनुमति-रभिप्राय इति बहुविधो भवति । तत्र सर्वत्र शब्दार्थतावच्छेदकमेव वाच्यं व्यक्त्यर्थभानं तु अर्थाद्भवतीति भावनाऽपि वाच्यार्थात् सिद्ध्यति । प्रमाणा-न्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैषः । कामचारित्वम् अतिसर्गः कामनावत्पुरुषनिष्ठः । उत्कृष्टकृतनिकृष्टप्रवर्तना प्रेषणाऽऽज्ञा पुरुषनिष्ठा । निकृष्टकृता उत्कृष्टप्रवर्तना प्रार्थनाऽध्येषणा । समानयोर्मिथः प्रवर्तनाऽनुज्ञा । औदासीन्येन निर्लेपत्वेन कृता प्रवर्तनाऽनुमतिः । एते एषणाकामनाद्या इच्छा-विशेषाः, आज्ञाऽनुज्ञाऽनुमतिरिति ज्ञानविशेषाः । सर्वे चेतनधर्माः, स्वीयो-च्चारणविषयत्वसंसर्गेण शब्दे स्थिताः कार्यप्रवर्तकाः भावनाख्याः । पुरुषस्या-ऽऽशयविशेषा अभिप्रायविशेषास्तात्पर्यविशेषाश्च । त एव लोके 'वाक्यपदस्था'-लिङाद्यर्थाः । वेदे च व्यापाराः प्रवर्तना भावना नित्यलिङादिवाच्यार्थाः । वाच्यतावच्छेदकं सामान्यं सर्वत्र प्रैषादौ भावनायां च व्यापारत्वं शक्यताव-च्छेदकम्, तदेव प्रवर्तनात्वम् । तत्र लौकिके लिङादिपदोपस्थाप्यैतत्प्रवृत्ति-हेतुभूतेष्टसाधनताद्यनुमितिजनकं पुरुषाशयविशेषे प्रवृत्तिप्रयोजकव्यापारत्वम् । वेदे तु लिङादिश्रवणोत्तरं जायमाना 'यागादिप्रवृत्तिः व्यापाराख्यप्रवर्तना-ज्ञानपूर्विका अन्यप्रेरितप्रवृत्तित्वात् चैत्राशयज्ञानजन्यमैत्रगवानयनप्रवृत्तिवत्'-इत्यलौकिकव्यापारमनुमाय तत्प्रतीतेर्लिङादिज्ञानाऽन्वयव्यतिरेकानुविधायि-त्वेन परिकल्पितव्यापारे बालोऽपि प्रवृत्तिप्रयोजकव्यापारत्वं प्रतिपद्यते । लोकेऽपि उत्तमवृद्धोक्तविधिवाक्यश्रवणोत्तरजायमानां मध्यमवृद्धप्रवृत्तिमुपलभ्य बालोऽपि—'उत्तमवृद्धोक्तश्रवणोत्तरमध्यमवृद्धप्रवृत्तिः प्रवर्तनाज्ञानपूर्विका अन्यप्रेरितप्रवृत्तित्वात् मद्रोदनप्रेरितमन्मातृप्रवृत्तिवत्' । 'प्रवर्तना ज्ञानम् उत्तमवृद्धवाक्यजन्यं तदन्वयव्यतिरेकानुविधायित्वात् दण्डान्वयव्यतिरेकानु-विधायिघटवत्' । 'यस्माच्छब्दाद् यत्प्रतीयते तत्तद्वाच्यं घटपदवाच्यघटत्ववत्'-

शाब्दीभावनेति व्यवह्रियते ।

---

इत्युत्तमवृद्धस्य मुग्धाकारां शक्तिं व्यापाराख्यप्रवर्तनायामवधार्य विधिशक्तिमपि ग्रहणवर्जनादिपरीक्षणेन बालादिः प्रवर्तनायामेवाऽवधारयति । तस्मात् लोकवेदसाधारणं व्यापारत्वं शक्यतावच्छेदकम् अन्यूनाऽनतिरिक्तवृत्तिरूपम् । अथ शक्ततावच्छेदकं तु लिङ्त्वलेट्त्वलोट्त्वादिकं ज्ञातव्यम् ।।

अथ 'घटवद्भूतलमि'तिशाब्दप्रतीतौ घटभूतलसंयोगाद्याश्चक्षुषा त्वचा वा प्रत्यक्षाः प्रकारता वृत्तिता संसर्गता विशेष्यता अन्ययोग्यपदार्थाश्चापि अवयवाद्या आकारश्च प्रत्यक्षादिप्रतीता भवन्ति । तथा लिङादिपदाद् व्यापारमात्रोपस्थितावपि भावनाया अन्वयादेरर्थापत्त्या प्रवृत्तिप्रयोजकत्वाऽन्यथाऽनुपपत्त्यादिना प्रमाणान्तरेण विशेषप्रतीतिर्विशेषव्यापारप्रतीतिः संसर्गादिप्रतीतिश्च भवति, अतस्तत्र तत्र सावकाशे प्रमाणान्तराणि सार्थकानि । एवं लिङ्शब्दप्रामाणिकभावनाभावितक्रियास्थले प्राग्यल्लिङादिपदज्ञानं तदुत्पादितं प्रेरणाज्ञानं तदुत्पादितमिष्टसाधनतानुमितिज्ञानं तत्प्रयोज्यत्वात्मकसंसर्गावच्छिन्ना प्रवर्तना व्यापारवती आकांक्षाभास्यसंसर्गवती मानसगोचरसंसर्गादिमति आधाराऽऽधेयतावती वाच्यवाचकभाववती च प्रमाणान्तराऽवगतपरिकरवती भावना भवतीति प्रमाणान्तराणां श्रुतिबोध्याऽर्थेऽपि सावकाशत्वं श्रुतिशब्दश्रवणे कर्णसन्निकर्षादिः साक्षात्साध्यतावत् भवतीति भावनामार्गणे विचारा अपेक्ष्यन्ते सप्रमाणा इति । लोके वेदेऽपि च लिङादिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य भावनारूपस्य व्यापारविशेषस्य व्यापारत्वसामान्येन प्रतीतिः । लोके तु शक्तिग्रहाद् विशेषरूपेण प्रतीतिरजहल्लक्षणया । वेदे तु प्रैषादिरूपस्य वक्त्राशयरूपस्याऽसंभवादेव लिङादिशब्दनिष्ठः प्रेरणाख्यो विशेषव्यापारो लिङाद्यर्थः ।।

अथ मण्डनमिश्रस्तु—प्रवर्तनात्वेन लिङाद्यर्थं इष्टसाधनत्वं वदति । पार्थसारथिस्तु—अर्थभावनानुकूलाया लिङादिशक्तेरभिधानाम्न्याः प्रवर्तनात्वेन लिङादिवाच्यत्वम् , अभिधाज्ञानस्य प्रवृत्तिकारणत्वं च वेदे कल्प्यते—इति वदति । तत्र सर्वत्र लिङादिश्रवणाऽनन्तरमेव प्रवृत्तिदर्शनात् प्रवृत्तिसामग्रीजननद्वारा लिङादिज्ञानं प्रवृत्तावुपयुज्यते । सामग्री तु इष्टसाधनत्वादिः । कृतिसाध्यत्वप्रकारकेच्छा चिकीर्षा स्वरूपसती कारणम् , सा लिङादिज्ञानेऽनुपयोगिनी, अपि तु स्वकारणीभूते ज्ञाने बलवदनिष्टाननुबन्धित्वज्ञाने कृतिसाध्यत्वज्ञाने इष्टसाधनत्वज्ञाने चोपयोगिनी । वस्तुतस्तु आशयविशेष एव लिङादिवाच्यः, न तु इष्टसाधनत्वादिज्ञानम् । अन्यप्रेरितकार्ये प्रवर्तकत्वव्यवहाराऽनुपपत्तेः । नापि भावनाभिधानानुकूला वा संख्या-

सा च भावनाऽशत्रयमपेक्षते साध्यं साधनमितिकर्तव्यतां च, किंभावयेत् केन भावयेत् कथं भावयेदिति । तत्र साध्याऽऽकांक्षायां वक्ष्यमाणांऽशत्रयोपेता आर्थीभावना साध्यत्वेनाऽन्वेति, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः, संख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न

---

भिधानाऽनुकूला शक्तिर्लिङादिवाच्या, विनिगमनाविरहात् । नापि बलवदनिष्टाऽननुबन्धित्वादिज्ञानं लिङादिवाच्यं, शक्तित्रये गौरवात् । तस्माद् बलवदनिष्टाननुबन्धित्वज्ञानं प्रतिबन्धकं तदभावः स्वरूपसन् कारणमिति मीमांसकाः । तस्माद् व्यापारो लिङाद्यर्थः सर्वत्र, न त्विष्टसाधनत्वादिः । अभिधा भावनैव शाब्दीभावनेति मतेनाऽऽह—**अत एवेति** । शब्दनिष्ठत्वादेव साऽभिधा, अभिधीयतेऽनेनेति व्युत्पत्त्याऽभिधाशब्दः, तस्य व्यापारविशेषो भावना, तां स्वनिष्ठाम् अर्थभावनाभिन्नां भावनां लिङादयः प्राहुः । आत्मनिष्ठसंस्कारो भावनेति तार्किकाः । भावयति अभिप्रैति आत्मा स्थिरीकरोति स्वस्मिन् ज्ञप्त्युत्तरं यद्रूपं स संस्कारो भावना ।

अथ मानवादिचेतनं विना लिङादिनिरुत्थानो व्यर्थः, चेतनाऽभिप्रायक्लृप्तिमन्त एव लिङाद्या लब्धस्वरूपाः प्राप्तार्थाः प्राप्तफलाश्च, नाऽन्यथा, अतो भावना संस्कारः स्मरणकारणम् , स्मृत्वा जनः प्रयतते, प्रवर्तनोत्पद्यते, **सा च** विमर्शमिश्रिता नादध्वनिवाणीरूपाऽर्थगोचरा शब्दनिष्ठा विरमिता भावना वा इच्छा वा ज्ञप्तिरित्यादिरूपा वा । 'अस्मात्पदादयमर्थो बोद्धव्य' इति भावना एषणास्वरूपा मीमांसकैर्मता । इच्छा संस्कारो यत्नः प्रवृत्तिर्व्यापृतिः प्रेरणाऽऽज्ञा तात्पर्यं शक्तिर्लक्षणाऽभिप्राय इत्याद्या लोके आत्मनिष्ठा अपि परम्परया शब्दनिष्ठास्ते वेदे तु साक्षाच्छब्दनिष्ठा भावनायामन्तर्भाविता मीमांसकैः । सति भावयितरि भावना त्रिविधामाकांक्षामवलम्बते, साध्यसाधनेतिकर्तव्यतांऽशत्रयवती सती प्रवर्तिका भवतीति दर्शयति—**किमित्यादिना** । किं साध्यं कार्यं फलं भावयेत् ?, प्रयोजनम् अर्थात्मकं कार्यं फलं स्वर्गं भावयेत् ।। यजिधातोरर्थो यागस्तं स्वरूपव्यूहात्मकं साधनं चापि भावयेत् , **केनेति** । किंकरणकं किंसाधनकं तद् भावयेत् ?, यज्यर्थयागसाधनकं च तद्भावयेत् , साधनकरणकत्वं भावयेत् , यागसाधनकं फलमपि भावयेत् ।। **कथमिति** । कैः कैः प्रकारैर्भावयेत् ?, कर्मरीतिभिः इतिप्रकारेण इत्येवंप्रकारेण एतत्प्रकारेण तत्तदङ्गादिप्रक्रियाप्रकर्तव्यताप्रकारसम्पादनेन तद्भावयेत् तत्तदङ्गप्रक्रियाकर्तव्यताकसुसम्पादितयागसाधनकस्वर्गं भावयेत् , एतन्मुख्यं त्रयं, तदितरदपि भवति निर्विघ्नं भावयेत् सश्रद्धं भावयेत् काम-

साध्यत्वेनाऽन्वयः। साधनाकांक्षायां लिङादिज्ञानं करणत्वेनाऽन्वेति। तस्य च करणत्वं न भावनोत्पादकत्वेन, तत्पूर्वमपि तस्याः शब्दे सत्त्वात्। किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा। इतिकर्तव्यताकांक्षायाम्—अर्थवादज्ञाप्यप्राशस्त्यमितिकर्तव्यतात्वेनाऽ-

---

पूरकं भावयेत् तदुत्थाऽपूर्वं भावयेत् अवभृथादि भावयेत् एवमपि सर्वं त्रिविध-भावितेऽन्तर्भावनीयम्। यच्च नाऽन्तर्भवितुमर्हं, तत् फलस्वर्गात्मकसाध्यार्थ-भावनायामन्तर्भावनीयम्, अर्थभावनाऽपि साध्या सा शब्दभावनायाम् अन्तर्भावाऽन्वयमेति, शब्दभावनासाध्याऽर्थभावना भवति, शब्दभावनाऽर्थ-भावना च एकलिङादिप्रत्ययगम्ये उभे भवतः, एकलिङादिप्रत्ययशब्दात्मकस्य समानाभिधानश्रवणस्य एकनामश्रवणस्य एकपदश्रवणस्य सत्त्वात् उभेऽपि भावने लिङ्प्रत्ययगम्ये। यागस्तु एकपदश्रवणगम्यो नैकप्रत्ययश्रवणगम्यस्ततो न साध्यतया गम्यः। **एकप्रत्ययगम्यत्वेन**—लिङ्मात्रप्रत्ययगम्यत्वेन। **समा-नाभिधानश्रुतेः**—एकप्रत्ययमात्रशब्दश्रवणात्। शब्दभावनाऽर्थभावनयोरेका-भिधानलिङ्प्रत्ययमात्रश्रवणगम्यत्वेन द्वयोर्निकटाऽन्वयो विवक्षितो भवति॥ **संख्यादीनामिति**। लिङेकवचने एकत्वं द्विवचने द्वित्वं बहुवचने बहुत्वम्, आदिना भविष्यत्कालादिः, उत्तममध्यमप्रथमपुरुषादिः, कर्तृत्वादिश्च साक्षा-त्परम्परया वा लिङ्वाच्याः कथं वा स्युरित्यत्राह—**एकप्रत्ययगम्यत्वेऽपि**—तत्तदर्थकस्वप्रत्ययगम्या अपि, **अयोग्यत्वात्**—अपुरुषार्थत्वात् तत्तदीयसाधन-ताकत्वशून्यत्वात् साध्यत्वात्मकफलयोग्यताऽनाश्रयत्वात्, फलयोग्यत्वं—कदाचिदपि फलजनकतावच्छेदकधर्माऽवच्छिन्नत्वम्। शब्दभावनाया भाव्य-साकांक्षत्वात् मुख्यभाव्यान्तरस्य चाऽदर्शनात्, अर्थभावानायास्तु विधिप्रयोज्य-त्वात् पुरुषार्थानुबन्धित्वाच्च एकपदश्रवणत्वाच्च शब्दभावनाभाव्यत्वं भवति। शब्दभावनायामेव अर्थभावनायाः समानाभिहारः स्वीकृतः। संख्यादि-भावनानां साध्यत्वेनाऽनन्वयः, इष्टत्वेन फलरूपत्वेनाऽनुपस्थानादेवाऽवाच्य-त्वम् अभाव्यत्वं चेति। करणात्मकसाधनांऽशं लिङादिविधिशब्दज्ञानं दर्श-यति—**साधनाकांक्षायामिति**। स्वर्गस्य किं साधनमित्यपेक्षितेच्छायां सत्याम्, लिङ्लेट्लोडादिज्ञानं शब्दभावनायां करणत्वेन साधनतयाऽन्वयं लभते, करणं व्यापारवत्कारणं यागादिसाधनम्, करणसहकारसत्त्वे एव लिङादि-व्यापारः पुरुषप्रवृत्तिजनकः, अतो न सर्वदा प्रवर्तको लिङादिव्यापारः। तथा च सकरणकसाध्यव्यापारो भावनेति। शब्दभावनाया नित्यत्वात्, पुरुषनिष्ठस्य लिङादिज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन सदा शब्द-

श्चेति । प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थीभावना । सा चाऽऽख्यातत्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात् ।

---

भावनायां सहकाराऽभावात् । लिङादिज्ञानमिति । लिङ्लेट्लोडादिज्ञानम् आदिना लिङादिधर्मस्य भावनारूपस्याऽपि ज्ञानं लिङ्तद्भावनोभयज्ञानं शब्दभावनायां करणं साधनम् , लिङ्ज्ञानेन लिङ्भावना जायते, व्यापारज्ञानेन व्यापारो जायते, स्वज्ञानस्यैवाऽत्र स्वज्ञापकत्वात् । लिङादिशब्दव्यापारो भावना पुरुषप्रवृत्तिलक्षणाऽर्थभावनालक्षणभाव्यनिष्ठा स्वज्ञानकरणिकैव । स्वज्ञापकत्वं स्वप्रकाशकत्वम् । लिङ्तद्धर्मभावनाया ज्ञाने सत्येव पुरुषप्रवृत्तेरुत्थानाद् भावनाज्ञानस्य पुरुषप्रवृत्तिसम्पादकतया शब्दभावनायां करणत्वं भवति ॥

विधिशब्द एव पुरुषप्रवृत्तिरूपाऽर्थभावनाज्ञानहेतुव्यापारवाचकशक्तिमत्तया ज्ञानद्वारा प्रवृत्तिजनको ज्ञानकरणकव्यापारस्य स्वस्य ज्ञानं शक्तिज्ञानं शक्तिविशिष्टव्यापारज्ञानं चेत्याद्यन्यतरं शब्दभावनात्मकं तृतीयं तत्र करणमिति चापि सङ्गमयन्ति ॥

अथ—करणत्वेनाऽन्वेतीति । भावनायां भावनाज्ञानं करणं, घटे मानसं घटज्ञानं करणमिव । लिङ्भावनाज्ञानकरणिका लिङ्भावनेत्यन्वयप्रबोधः । तस्य चेति । लिङादिज्ञानस्य लिङ्भावनाज्ञानस्य च लिङ्भावनायां करणत्वं न भावनाया उत्पत्तिजनकतया करणत्वं सम्भवति । तत्पूर्वमपीति । तस्माल्लिङादिज्ञानात्प्रागपि सर्वदा शब्दभावनाया नित्याया नित्ये लिङादिशब्दे विद्यमानत्वात् तदुत्पादकत्वाऽसम्भवात् । तस्याः—शब्दभावनायाः । किन्त्विति । भावनाज्ञापकत्वेनेति । लिङादिज्ञानस्य प्रागपि सत्याः शब्दभावनायाः तद्भाव्यार्थभावनासम्पादकत्वेन करणत्वं भवति । ज्ञापकत्वं ज्ञप्तिजनकत्वम् । प्राशस्त्यज्ञानेन फले रागेण चापि प्रवृत्तिरिति न सर्वेषां प्रवृत्त्यापत्तिः । शब्दभावनेति । शब्दभावनया भाव्या प्रकाश्या याऽर्थभावना तत्सम्पादकत्वेनाऽपि वा शब्दभावनाज्ञानं करणं भवति । अर्थभावनायाः सम्पादकत्वस्य शब्दभावनाज्ञानं विनाऽन्यत्राऽसत्त्वेन तत्संग्रहार्थं वा—इत्यपि स्वीकृतिः । अर्थभावना शब्दभावनामवलम्बतेऽतः शब्दभावनामवलम्ब्य स्थिता भाव्या भवितुं योग्या स्यातुं योग्या सम्पादनयोग्याऽर्थभावना, तस्या निर्वर्तकं सम्पादकं लिङादिज्ञानमिति । अथ कर्मप्राशस्त्यज्ञानवान् फलरागवांश्च प्रवृत्तिमान् भवतीति कथमाकांक्षां विशदयति—इतिकर्तव्यतेति । इतिशब्दोऽत्र प्रकारवाची, कर्तव्यस्य प्रकार इतिकर्तव्यं, तस्य भावः । प्रकारश्च विशेषरूपः । कर्तव्यस्य विशेषः प्रकारोऽत्राऽऽकांक्ष्यते—कस्तादृशप्रकार इति ।

**साऽप्यंशत्रयमपेक्षते--साध्यं साधनमितिकर्तव्यतां च, किं भावयेत् केन भावयेत् कथं भावयेदिति ।**

---

उत्तरं—**प्राशस्त्यमिति** । प्रशंसा भाव्यते, कर्तव्यविशेषप्रकारः प्रशस्तः । लिङादिज्ञानेन भावयेत् कथमित्याकांक्षायां कर्मप्राशस्त्यविशिष्टेन लिङादिज्ञानेन भावयेत् इत्येवं कर्मविशेषप्राशस्त्यं लिङादिज्ञानं प्रकारोऽन्वितः, एतस्य प्राशस्त्यविशेषप्रकारस्य ज्ञापकोऽर्थवादः चतुर्विधः । विधिशेषोऽर्थवादश्चतुर्धा—प्रशंसा-निन्दा-परकृति-पुराकल्प-भेदात् । निषेधशेषश्च । अथवा त्रिविधः—गुणवादोऽनुवादो भूतार्थवादश्चेति एतद्ग्रन्थप्रान्ते वर्णिताः ।

'शोभतेऽस्य मुखं य एवं वेद' इतिवेदने प्रशंसा, न तु मुखशोभा । अर्थवादज्ञाप्यं प्राशस्त्यम् इतिकर्तव्यत्वम् । प्राशस्त्यरूपकर्तव्यविशेषः शब्दभावनायामन्वयं लभते । साध्यम् आर्थीभावना, साधनं शाब्दीभावनायाः स्वज्ञानम् , इतिकर्तव्यत्वं च प्राशस्त्यम् , प्रशंसावाग्विषयत्वं स्वरूपसम्बन्धेन, भावनाज्ञानविषयत्वं स्वरूपसम्बन्धेन आर्थीभावनाविषयत्वं स्वरूपेण शब्दभावनायामस्ति, तथा च प्रशस्ता स्वज्ञानज्ञाप्या अर्थभावनानिर्वर्तिका शब्दभावना लिङाद्यर्थो व्यापार इति ॥

अथ प्राशस्त्यं नाम—विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वे सति क्रियाजन्यदुःखाऽपेक्षयाऽधिकेष्टजनकत्वम् , विध्यर्थवादेष्वेतादृशमेव । निषेधार्थवादेषु तु—निषेध्यतावच्छेदकसामानाधिकरण्येन क्रियाफलाऽपेक्षयाऽधिकदुःखसाधनत्वम् अप्राशस्त्यं लक्ष्यते । सर्वत्र वाक्येषु लक्षणैव । अर्थवादस्थे पदे पदसमुदाये लक्षणा, इतरपदानि तात्पर्यग्राहकाणि । तत्प्राशस्त्यम् इतिकर्तव्यतात्वसंसर्गेण शब्दभावनायामन्वेति, स्वरूपसम्बन्धेन धात्वर्थेऽन्वेति, स्वविषयकज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसम्बन्धेन प्रवृत्तावन्वेतीति । अप्राशस्त्यं तु—स्वविषयकज्ञानजन्याऽनिष्टविषयकोत्कटद्वेषप्रयोज्याऽभावप्रतियोगित्वसम्बन्धेन प्रवृत्तावन्वेतीति । तथा च—पुरुषप्रवृत्तिलक्षणाऽर्थभावनाभाव्यको लिङादिज्ञानकरणकः स्व(व्यापारः)ज्ञानकरणको वा स्तुतिनिन्दाऽर्थवादबोधितप्राशस्त्यादीतिकर्तव्यताको लिङादिशब्दस्य व्यापारविशेषो शब्दभावना लिङादिशब्देन लिङ्त्वांऽशेनोच्यते ॥ तत्र—अर्थवादबोधितप्राशस्त्यादिना उपकारं सम्पाद्य लिङादिज्ञानेन पुरुषप्रवृत्तिरूपामर्थभावनां भावयेत् यागविषयकप्रवृत्तिलक्षणां कुर्यादिति 'यजेते'त्यस्य बोधः । अर्थभावनासाध्यको लिङ्भावनाज्ञानसाधनकः प्राशस्त्यविशेषकर्तव्यताको लिङ्शब्द इति संक्षेपार्थः ॥

आर्थीभावनां लक्षयति—**प्रयोजनेच्छेति** । प्रयोजनस्य स्ववृत्तितयेष्टस्य स्वर्गादिफलस्य येच्छा रागविशेषस्तेन जनितो यो यागादिक्रियाविषयः

तत्र साध्याऽऽकांक्षायां स्वर्गादिफलं साध्यत्वेनाऽन्वेति। साधना-

पुरुषस्य व्यापारविशेषः आर्थीभावना। स न केवलप्रयत्नः, न स्पन्दः, किन्तु स्वर्गादिफलेच्छाजनितो यागादिक्रियाविषयः प्रयत्न एव सव्यापारोऽर्थभावना। प्रयत्नोऽयमाख्यातसामान्येनोच्यते 'यजेत, गच्छति, पचती'त्यादौ आख्यात-श्रवणेन प्रयत्नः प्रतीयते, गच्छति गमनं करोतित्यादौ आख्यातस्य विवरणात् प्रयत्न एवाऽऽख्यातसामान्यार्थः॥

अन्योत्पादनानुकूलात्मा स व्यापारो वाऽर्थभावना, यस्मिन् व्यापारे कृते करणस्य फलोत्पादनसामर्थ्यं भवति तादृशो व्यापार आख्यातसामान्यस्यार्थः 'यजेत स्वर्गकाम' इत्यत्राऽऽख्यातश्रवणे यागेन तथा व्याप्रियेत यस्मिन् व्यापारे कृते यागः स्वर्गजननसमर्थो भवतीति बोधः। स च व्यापारोऽन्योत्पादनाऽनु-कूलत्वसामान्यरूपेणाऽऽख्यातादेवाऽवगम्यते, पश्चाद् विशेषरूपेण अग्न्यन्वा-धानादिब्राह्मणतर्पणान्तप्रवृत्तिरूपविशेषधर्मेणाऽवगम्यते। पश्चाज्जन्यज्ञानेच्छा-दिविषयः प्रयत्नाऽनुकूलव्यापार आख्यातगम्यः। अन्योत्पादनानुकूलव्यापार एवाऽऽख्यातसामान्यस्यार्थः। पश्चात् कोऽसौ व्यापार इतिवीक्षायां विशेष-रूपेणाऽवगतो भवति॥

किञ्च—स्वसाधनद्रव्यादिनिष्पादितेन धात्वर्थेन यागादिकरणेन स्वर्गादि-फलोत्पत्तौ अनुकूलव्यापारस्वरूपा कृतिपदाऽभिधेया फलोत्पादनाऽऽर्थीभावना सर्वधात्वर्थाऽनुगता प्रतिधात्वर्थं विलक्षणा यज्यादिधात्वर्थाद् विशेषरूपात् सामान्यरूपाच्च भिन्नैवाऽऽख्यातसामान्यार्थभूताऽऽर्थीभावनाऽऽख्यातत्वांऽ-शेनोच्यते, आख्यातसामान्यस्य अन्योत्पादनानुकूलव्यापारसामान्यवाचि-त्वात्॥

एषाऽऽर्थीभावना व्यापारविशेषात्मिका व्यापारविशेषाणां फलादिसापेक्ष-त्वात् साध्याद्यंशत्रयमपेक्षते—इत्येतत्स्फुटयति—**साऽप्यंशत्रयमपेक्षते—इत्यादिना**। किं भावयेत् ?, साध्यं स्वर्गम्, केन भावयेत् ?, यागादिना, कथं भावयेत् ?, इतिकर्तव्यत्वेन। **तत्रेति**। साध्यसाधनेतिकर्तव्यत्वात्मकत्रिमध्ये। **साध्याकांक्षायामिति**। आर्थीभावनायामर्थः प्रयोजनं फलं किं भाव्यं भाव-नीयमित्याकांक्षायां यत् पुरुषविशेषणं तत्साध्यं भाव्यं स्वर्गादिफलमर्थो भावनाविषयः, विषयितया भावनायामन्वयी भवति, आदिना यद्यत् फलतया काम्यं तत्सर्वमपि भाव्यं साध्यं पुरुषविशेषणमेव फलम्, अपुरुषार्थस्तु न फलमिति। **साधनाकांक्षायामिति**। आर्थीभावनायां विषयीभूतफलस्य किं साधनम् ? इत्याकांक्षायाम् आख्यातात्मकैकपदोपात्तः स्वयावदंगनिष्पादितो यागादिः धातुप्रकृत्यर्थः स्वर्गं साधयितुं कर्तुं शक्त इति यागः साधनतया

ऽऽकांक्षायां यागादिः करणत्वेनाऽन्वेति । इतिकर्तव्यताऽऽकांक्षायां प्रयाजाद्यंगजातमितिकर्तव्यतात्वेनाऽन्वेति ।

---

भावनायां विषयितयाऽन्वयी भवति । आदिना काण्डो दानतीर्थजपतपोव्रताद्याः क्रियाव्यापाराः स्वर्गार्थं कृताः श्रुतिवाक्यनिर्दिष्टा ग्राह्याः । अपूर्वमपि द्वाररूपं सामानाधिकरण्येन साधनं ग्राह्यम् । करणत्वेन—साधनत्वेन विषयितासंसर्गेणाऽन्वेति । इतिकर्तव्यतेति । कथं कर्तव्यमिति कथंभावाऽऽकांक्षायाः पूरकत्वम् इतिकर्तव्यतात्वम् । प्रयाजेति । प्रयाजाऽनुयाजोपांशुयागादिभिरुपकारं सम्पाद्य अग्न्यन्वाधानाऽवघातप्रयाजादिभिः यथोदिताऽनुष्ठितैरुपकारं सम्पाद्य च महानुष्ठानं कर्तव्यम् । प्रयाजाद्यंगानि सम्पन्नानि अङ्गानि उपकारकाणि भूत्वा स्वानि स्वविशिष्टांऽगिविषयित्वसम्बन्धेन अर्थभावनायामन्वयीनि भवन्ति । 'यजेत स्वर्गकाम' इत्यत्र अग्न्यन्वाधानाऽवघातप्रयाजाऽनुयाजादिभिरुपकारप्राप्तसुसम्पन्नेन यागेन स्वर्गं भावयेत् स्वर्गं कुर्यात् इतिवाक्यार्थः । सुनिष्पन्नेन यागेन स्वर्गं कुर्यादित्येतत्फलवाक्येन यागस्य फलसाधनत्वं बोध्यते, विनश्वरयागेनाऽपूर्वं निष्पाद्य, अपूर्वमपि प्राच्योदीच्यांऽगविशिष्टयागाऽनुष्ठानप्रकारैर्मध्याऽपूर्वं परमापूर्वं च निष्पाद्य स्वर्गं साधयेदिति ॥

दर्शपूर्णमासयोरपूर्वमनेकधा—फलाऽपूर्वं समुदायाऽपूर्वमुत्पत्त्यपूर्वमंगाऽपूर्वं चेति । स्वर्गसाक्षाज्जनकत्वात् फलाऽपूर्वं परमाऽपूर्वमेव तत्र भोगाऽपूर्वमपि परमाऽपूर्वं भवति । फलाऽपूर्वजनकं समुदायाऽपूर्वम् , समुदायोऽमावास्यात्रियागानामेकः, पौर्णमास्यां त्रियागानामेकः । ताभ्यां भिन्नकालीनसमुदायाभ्यां जन्यम् अपूर्वद्वयं समुदायाऽपूर्वम् । अमावास्यायाम्, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायामि'तिविहितौ सान्नाययागौ तथा 'यदाग्नेयोऽष्टाकपाल' इतिविहित आग्नेयश्च, एतेषां त्रयाणां समुदायस्तज्जन्यं समुदायाऽपूर्वमेकम् । पौर्णमास्यां—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पूर्णमास्यां चाऽच्युतो भवतीत्याग्नेययागो विहितः, 'उपांशुयाजमन्तरा यजती'त्युपांशुयागः 'तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशुः पौर्णमास्यामि'तिवाक्यविहितः, एतत्त्रयसमुदायः । त्रयाणां त्रयाणामपि भिन्नक्षणवर्तिनाम् एकाऽपूर्वजननाऽयोगात् त्रीणि त्रीणि उत्पत्त्यपूर्वाणि कल्प्यन्ते, तेषां तेषामंगानामपि भिन्नक्षणवर्तिनाम् अङ्गाऽपूर्वाणि सन्निपत्योपकारकाणि कल्प्यन्ते, सन्निपत्योपकारकाणि अवघातप्रोक्षणादीनि द्रव्यदेवतासंस्कारद्वारेण' यागस्वरूपस्यैवाऽतिशयजननेन यागोत्पत्त्यपूर्वोत्पत्तौ व्याप्रियन्ते, उत्पत्त्यपूर्वद्वारा च फलाऽपूर्वे व्याप्रियन्ते, सन्निपत्योपकाराऽङ्गापूर्वं यागोत्पत्त्यपूर्वं प्रयोजकम्,

फलाऽपूर्वमेव सर्वाऽपूर्वप्रयोजकम्, अनागताऽवस्थस्यापि मोक्षस्येव तदुपकारकपूर्ववर्तिनामपि प्रयोजकत्वं भवति । आरादुपकारकाणि तु प्रयाजादीनि यागोत्पत्त्यपूर्वोत्पन्नफलाऽपूर्वे साक्षाज्जनकानीति । इत्येवमपूर्वोत्पत्त्यनुग्राहकाणि सर्वाण्यंगानि इत्थंभावात्मकेतिकर्तव्यतापदग्राह्याणि । आग्नेयाद्याः षडपि स्वस्वोत्पत्त्यपूर्वद्वारा सर्वांगसाहित्योपपादकाः, प्रयाजादयोऽपि स्वस्वोत्पत्त्यपूर्वद्वारा सर्वप्रधानसाहित्योपपादकाः । साहित्यं सहितत्वं वैशिष्ट्यं विहितमिति चोक्तं भवति । एकाऽपूर्ववाचकमेकपदम् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'चित्रया यजेत पशुकामः' 'उद्भिदा यजेत पशुकामः' 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिवाक्येषु अपूर्ववाचकं पदमाख्यातान्तमेकमेव, पदान्तराणि कर्मनामधेयादीनि तु आख्यातान्तगुणतयान्वयवन्ति भावार्थसामानाधिकरण्यादिबोधपराणीति । 'सोमेन यजेत' 'हिरण्मयम् आत्रेयाय ददाति तस्मात् सुवर्णं हिरण्यं धार्यम्' 'दाक्षिणानि जुहोती'त्यादिषु प्रतिधात्वनुषक्ता आख्याता भिन्ना एव स्वस्वभावनावाचकाः, यागदानहोमभावना मिथो भिन्नाः, भावनाभेदकारका भावार्था अपि भिन्ना एव । 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती'तिदर्शादिप्रकरणे पञ्चप्रयाजेषु पञ्चकृत्वःश्रुतेः यजतिपदेऽपि अभ्यासोक्ते भिन्ना भावना भिन्ना भिन्नाः कर्माण्यपि भिन्नान्येव, 'शब्दान्तराऽभ्याससंख्यासंज्ञागुणभेदप्रकरणान्तरैः कर्मभेदः 'तिस्र आहुतीर्जुहोती'त्यादौ तु जुहोत्यर्थे होमे त्रित्वसंख्यान्वयात् होमा अपि त्रयो भावना अपि तिस्रः । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'त्यत्राऽथशब्देन त्रयो यागा भिन्ना भावना अपि भिन्नाः । सहस्रदक्षिणागुणविधानमेतत् ज्योतिष्टोमे यागत्रये समस्तं दर्शितम् । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मित्यत्र घनीभूतः पयःपिण्ड आमिक्षा, जलं तद् वाजिनम्, आमिक्षाद्रव्यभाजो वाजिनामकविश्वेदेवाः, तदर्थं वाजिनद्रव्यं गुणो विधीयते, वाजोऽन्नमामिक्षारूपमेषामस्तीति वाजिनो विश्वदेवाः । आमिक्षारूपो गुणो वैश्वदेवयागस्योत्पत्तिवाक्ये एव शिष्यते विधीयते इत्युत्पत्तिशिष्टः, वाजिनगुणस्य तु उत्पन्ने कर्मणि विधिः कल्प्यते इत्युत्पन्नशिष्टः, तत्रोत्पत्तिशिष्टः पूर्वमेव कर्मोत्पत्तिकाले प्रमितः प्रबलः, उत्पन्नशिष्टस्तदनन्तरं प्रमितो विलम्बितो दुर्बलः, अतो वाजिपदेन वायुरूपदेवतान्तरमापाद्य तद्देवत्यकर्मान्तरं वाजि च द्रव्यान्तरम्, द्रव्यदेवतातत्तत्कर्मभेदात् भावना भिन्ना । 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'त्येतत् आजीवनं यन्नित्यम् अग्निहोत्रं कर्म ततो भिन्न-

**अथ को वेद ? इति चेत् , उच्यते,—अपौरुषेयं वाक्यं वेदः, स च विधि-मन्त्र-नामधेय-निषेधार्थवादभेदात्पञ्चविधः। तत्र—अज्ञातार्थज्ञापको वेदभागो विधिः, स च तादृशप्रयोजनवदर्थविधानेनाऽर्थ-**

---

मेव मासमग्निहोत्रं कर्म, नित्याग्निहोत्रप्रकरणाद्भिन्नं यत् कुण्डपायिनामयन-रूपं प्रकरणं तत्र पठितत्वात् , अयनमारभ्याऽधीतत्वात् ॥

वेदस्य प्रमेयोऽर्थस्त्रिविधः—क्रत्वर्थः पुरुषार्थः उभयार्थश्च। प्रयाजादिः प्रोक्षणादिश्च केवलक्रत्वर्थः। फलं स्वर्गं तत्साधनं यागादिश्च पुरुषार्थः। 'दध्ना जुहोती'ति दध्यादि क्रत्वर्थम्, 'दध्नेन्द्रियकामस्य जुहुयादि'ति दध्यादि पुरुषार्थम् , क्रत्वर्थे क्रतुः प्रयोजकः, पुरुषार्थे फलं प्रयोजकम् , प्रयोजकत्वम् , अनुष्ठापकत्वम् , विधिर्यदर्थं यदनुष्ठापयति स तत्र प्रयोजकः। प्रयाजादीन् दर्शाद्यर्थम् अनुष्ठापयतीति दर्शादिः प्रयाजादिषु प्रयोजकः, दर्शादिविधिः स्वर्गार्थं दर्शादिकमनुष्ठापयतीति स्वर्गादिर्दर्शादौ प्रयोजकः, दध्यानयनविधिश्च दध्यानयनमामिक्षार्थमनुष्ठापयतीति आमिक्षा दध्यानयने प्रयोजिका, न तु वाजिनद्रव्यं, पश्चान्निष्पद्यमानत्वात् ॥

प्रयोजनवदर्थाऽवबोधको वेदो धर्मे प्रमाणं, विशेषतस्तु विध्यादिविभागेन प्रमाणमिति प्रतिपादयितुमुपक्रमते—**अथ को वेद** इति। इति जिज्ञास्यते चेत् !, **उच्यते**—लक्षणेन दर्श्यते—**अपौरुषेयमिति**। वेदो लक्ष्यः, अपौरुषेय-वाक्यत्वं लक्षणम्। भारतादिव्यावर्तकम् अपौरुषेयमिति, आत्मादिव्यावर्तकं वाक्यमिति। प्रमाणान्तरेणाऽर्थानुपलभ्य विनिर्मितत्वं पौरुषेयत्वम् , तद्भिन्न-त्वम् अपौरुषेयत्वम्। परमेश्वरोऽपि नित्यं पूर्वसिद्धं वेदमस्मिन् कल्पे उपदिशति, न तु जनयतीति। 'वेदाध्ययनं गुर्वध्ययनपूर्वकम् वेदाध्ययन-त्वात् वर्तमानवेदाध्ययनवत्'। वेदो ज्ञानं नित्यं, नित्यशब्दो वेदः। स वेदः पञ्चधा मीमांसया चिन्तितः। **विधिमन्त्रेति**। अज्ञाताऽर्थज्ञापको वेदभागो विधिः। प्रयोगसमवेताऽर्थस्मारका मन्त्राः। विधेयार्थपरिच्छेदकाऽभिधानत्वं नामधेयत्वम। पुरुषस्य निवर्तकं वाक्यं निषेधः। प्राशस्त्यनिन्दाऽन्यतरपरं वाक्यमर्थवादः। वेदत्वं विध्यादिपञ्चान्यतमत्वव्याप्यमिति लाभाय पञ्च-विधत्वोक्तिः।

विधिं लक्षयति—**तत्राऽज्ञातार्थेति**। पञ्चविधवेदभागेषु मध्ये। अज्ञातस्य प्रयोजनवतोऽर्थस्य यागादिनामकस्य ज्ञापकत्वं विधित्वम्। स विधिर्यादृशः प्रमाणान्तरेणाऽप्राप्तो भवति तादृशार्थं विधत्ते, तेन च अज्ञातप्रयोजनवदर्थ-विधानेनाऽर्थवान् वेदभागो विधिः। यादृशमर्थमिति सामान्ये नपुंसकम्।

वान् यादृशं चाऽर्थं प्रमाणाऽन्तरेणाऽप्राप्तं विधत्ते—यथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति विधिर्मानान्तरेणाऽप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते, अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः। यत्र कर्म मानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते, यथा 'दध्ना जुहोती'-त्यत्र होमस्याऽग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्र-

---

**यथेति**। **'अग्निहोत्रं जुहुयात् स्वर्गकाम'** इतिविधिवाक्यम्। **मानान्तरेण**—श्रुतिभिन्नप्रमाणेनाऽप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते। तद्बोधमाह—**अग्निहोत्रहोमेनेति**। स्वर्गकामनावान् अग्निहोत्रनामकहोमकर्मणा स्वर्गं भावयेत्—इतिवाक्यर्थबोधः। गुणविधिमाह—**यत्र कर्मेति**। गुणविधिस्तु मानान्तरेणाऽप्राप्तं गुणमात्रं विधत्ते, मानान्तरप्राप्तप्रधानकर्मणस्तु गुणविधिरनुवाद एव। 'अग्निहोत्रं जुहुयादितिश्रुतिरूपप्रमाणान्तरेण प्राप्तं होमादिकर्म, तद्धोममुद्दिश्य होमे गुणरूपं साधनं दधि 'दध्ना जुहोती'तिविधत्ते, दध्ना होमं भावयेदिति बोधः। **यत्र त्विति**। विशिष्टविधिस्तु प्रधानं गुणं चेत्युभयम् अप्राप्तं शेषशेषिलक्षणं तत्र शेषविशिष्टं शेषिणं विधत्ते—**'यथेति' 'सोमेन' यजेते'**-त्यत्र सोमरसो द्रव्यं न यागः, यागो हवनादिर्न सोमरसः, द्वयोः पृथक्पृथक्तया केनापि अप्राप्तिः, तमप्राप्तमर्थद्वयं तद्विशिष्टं कृत्वा विधत्ते यः स विशिष्टविधिः, सोमपदस्य सोमवति अजहल्लक्षणा, तदन्वयो वैशिष्ट्यं यागे, सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः। 'शेषः परार्थत्वात्' (३।१।२।२)। परार्थत्वेन लक्षित आकारः स्वरूपं शेषः, इतरव्यावृत्त्या बोधक आकारो लक्षणम्। स एव च हेतुः। द्रव्यगुणसंस्कारेषु शेषतेति बादरिः, कर्माण्यपि फलार्थत्वात् शेषाणीति जैमिनिः, फलं चापि शेषं पुरुषार्थत्वात्, 'पुरुषोऽपि शेषः, कर्माऽर्थत्वात्' इतिमतेषु जैमिनिमतं मुख्यम्॥

**न चोभयेति**। उभयविधाने वाक्यभेदो भवति, स दोषोऽत्र विशिष्टविधाने **न चाऽस्ति**, प्रत्येकमुभयस्य प्रधानस्य विधाने वाक्यभेदात्, शेषशेषिभावे प्रत्येकमुभयस्याऽविधानात्। किन्तु विशिष्टस्यैव विधानात्॥

वाक्यभेद इत्थं ज्ञातव्यः—'व्रीहिभिर्यजेत यवैर्वा' इत्यत्रोभयप्रधानविधाने, प्रथमप्रयोगे व्रीह्यनुष्ठाने यवानुष्ठानप्रामाण्यस्य त्यागः, अननुष्ठानाऽप्रामाण्यस्य स्वीकारः, द्वितीयप्रयोगे यथानुष्ठाने यवशास्त्रप्रामाण्यस्य स्वीकारः, स्वीकृताऽप्रामाण्यस्य त्यागः। इति यवशास्त्रे चत्वारो दोषाः। प्रथमप्रयोगे यवानुष्ठाने व्रीहिशास्त्रप्रामाण्यस्य त्यागः, स्वार्थाऽननुष्ठापकाऽप्रामाण्यस्य

विधानं दध्ना होमं भावयेदिति। यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते—यथा 'सोमेन यजेते'त्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्ट-यागविधानम्।

सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थ-बोधः, न च उभयविधाने वाक्यभेदः, प्रत्येकमुभयस्याऽविधानात्, किन्तु

---

स्वीकारः, द्वितीयप्रयोगे व्रीह्यनुष्ठाने परित्यक्तव्रीहिशास्त्रप्रामाण्यस्य स्वीकारः, स्वीकृतस्य तदप्रामाण्यस्य परित्यागश्चेति चत्वारो दोषाः। इत्यष्ट-दोषदुष्टो विकल्पो भवति॥

उभयविधाने सोमेन वा यागेन वा स्वर्गं भावयेदित्यत्र प्रथमप्रयोगे सोमानुष्ठाने यागशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वस्य त्यागः, स्वार्थाऽन-नुष्ठापकत्वरूपाऽप्रामाण्यस्य स्वीकारः, ततो द्वितीयप्रयोगे यागानुष्ठाने पूर्वपरित्यक्तयागशास्त्रप्रामाण्यस्य स्वीकारः, स्वीकृताऽप्रामाण्यत्यागश्चेति चत्वारो दोषाः स्युः। तथा प्रथमप्रयोगे यागानुष्ठाने सोमशास्त्रप्रामाण्यस्य त्यागः, स्वार्थाऽननुष्ठापकाऽप्रामाण्यस्य स्वीकारः, ततो द्वितीयप्रयोगे सोमाऽ-नुष्ठाने पूर्वपरित्यक्तसोमशास्त्रप्रामाण्यस्य स्वीकारः, ततो द्वितीयप्रयोगे सोमानुष्ठाने पूर्वपरित्यक्तसोमशास्त्रप्रामाण्यस्य स्वीकारः, स्वीकृतस्य तद-प्रामाण्यस्य परित्याग इति सोमशास्त्रे चत्वारो दोषाः स्युः, एवमष्टदोषाः विकल्पे उभयविधाने स्युः। अत्र गुणविधिमात्रेण नोभयविधानं साधु, किन्तु गुणविशिष्टविधानं साधु न च विशिष्टमपि विपरीतं कर्तुं शक्यम्, साधनस्य गौणत्वध्रौव्यात् विधिलग्नितधात्वर्थस्यैव मुख्यत्वात्॥

**किञ्च—वाक्यभेद इति**। यागेनेष्टं भावयेत् सोमेन च यागं भावयेत् इत्यावृत्त्याऽपि उभयविधौ व्यापारभेदेन आवृत्तिलक्षणोऽपि वाक्यभेदः—वाक्यद्वयता स्यात्॥ यदि तु युगपत्तन्त्रेण,—तन्यते विस्तार्यते बहूनामुप-कारो येन सकृत्प्रवर्तनेनेति तन्त्रं तेन, सिद्धान्तेन शास्त्रेण 'यागेनेष्टं भावयेत् सोमेन यागं भावयेदित्युभयविधानं तदा **विरुद्धत्रिकद्वयप्रसङ्गः** स्यात्, तथाहि—भावनाभाव्ये—उपादेयत्वं विधेयत्वं साध्यत्वं स्वर्गे, अनुवाद्यत्व-मुद्देश्यत्वं सिद्धत्वं च सोमे, तेषां त्रयाणां त्रयाणां द्विकं द्विकं विरुद्धम्—उपादेयत्वमनुवाद्यत्वं, विधेयत्वमुद्देश्यत्वम्, साध्यत्वं सिद्धत्वं च, यागे विरुद्धत्रिकयोर्द्वयवत्त्वापत्तिः। अन्येऽपि दोषा यथा—उभयविधाने तु गुणे गुणत्वत्यागः प्रधानत्वारोपश्चाऽपूर्वानुत्पादको व्युत्क्रमश्च। प्रधाने वैशिष्ट्य-

विशिष्टस्यैव विधानात्। न च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति-विधिप्राप्तयागोद्देशेन सोमरूपगुणविधानमेवाऽस्तु, सोमेन यागं भावये-दिति किं मत्वर्थलक्षणेति वाच्यम्। एतस्याऽधिकारविधित्वेनोत्पत्ति-विधित्वाऽसंभवात्। ननु 'उद्भिदा यजेत पशुकाम' इत्यस्येव 'ज्योति-ष्टोमेने'त्यस्याऽप्युत्पत्त्यधिकारविधित्वमस्त्विति चेत्, न। दृष्टान्ते उत्पत्तिवाक्यान्तराऽभावेनाऽन्यथाऽनुपपत्त्या तथात्वाऽऽश्रयणात्। किञ्च—ज्योतिष्टोमेनेत्यस्योभयविधित्वेऽनेनैव यागस्तस्य फलसम्ब-न्धोऽपि बोधनीय इति सुदृढो वाक्यभेदः। तद्वरं सोमपदे मत्वर्थ-लक्षणया विशिष्टविधानम्।

---

त्यागोऽवैशिष्ट्यप्रसंगोऽपूर्वानुत्पादको व्युत्क्रमश्चेति। सभत्वे एकत्र गुणत्व-प्रधानत्वयोर्विरोधः। इत्येवं प्रसंगोऽनिष्टापत्तिश्चेति ॥

अथ गुणविधानमेवाऽस्तु न तु लक्षणेति शंकते—**न च ज्योतिष्टोमेनेत्या-दिना**। 'सोमेन यजेते'त्यत्र 'ज्योतिष्टोमेन स्वर्गकामो यजेते'तिविधिप्राप्त-यागोद्देशेन सोमरूपगुणविधानमेवाऽस्तु, सोमेन यागं भावयेदिति बोधः। सोमेन यजेतेति गुणविधिरेवाऽस्तु, सोमयागस्वरूपविधिस्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्ययमेव भवतु, मत्वर्थलक्षणा न कार्येति। समाधत्ते—**एकस्येति**। अधिकारिणः फलसम्बन्धबोधको विधिरधिकारविधिः 'ज्योति-ष्टोमेन स्वर्गकामो यजेते'ति। एकस्य वाक्यस्य, उत्पत्तिविधित्वाऽभावात्, कर्मस्वरूपमात्रबोधकविधेरेवोत्पत्तिविधित्वम्, उत्पत्तिविधिविहितकर्मणः फलविशेषेण सह सम्बन्धमात्रमधिकारविधिः करोति। उत्पत्तिविधौ गुण-विधानं स्यात्, नान्यथा, अधिकारविधौ नोत्पत्तिविधित्वं न सोमरूपगुण-विधानं च। अत एव विशिष्टविधिः 'सोमेन यजेते'ति ॥

ननु 'उद्भिदा यजेत पशुकामः' इतिविधेः उद्भिन्नामककर्मरूपबोधकत्व-रूपोत्पत्तिविधित्वं पशुरूपफलसम्बन्धबोधकत्वरूपाऽधिकारविधित्वमिव 'ज्यो-तिष्टोमेन स्वर्गकामो यजेते'त्यस्योभयविधित्वमस्त्वित्याह—**ननु उद्भिदेती'-त्यादिना**। उत्पत्तिविधित्वमधिकारविधित्वं चास्त्विति चेन्न। **दृष्टान्ते इति**। कर्मस्वरूपबोधकोत्पत्तिवाक्यान्तराऽभावेन, कर्मणः **अन्यथा**—स्वरूपबोधन-मन्तरेण, **अनुपपत्त्या**—फलसम्बन्धबोधनाऽनुपपत्त्या एकस्यैव तस्य वाक्यस्यो-भयविधित्वाश्रयणात्। **किञ्चेति**। तुल्ययुक्त्या 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति वाक्यस्योत्पत्तिविधित्वाऽधिकारविधित्वोभयविधित्वमस्तु 'सोमेन

**विधिश्चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, यथा 'अग्निहोत्रं जुहोती'ति । अत्र विधौ कर्मणः करणत्वेनाऽन्वयः, अग्निहोत्रहोमेनेष्टं भावयेदिति। ननु यागस्य द्वे रूपे द्रव्यं देवता च, तथा च रूपाऽश्रवणेऽग्निहोत्रं जुहोतीति कथमुत्पत्तिविधिः, अग्निहोत्रशब्दस्य तु तत्प्रख्यन्यायेन नामधेयत्वादिति चेन्न । रूपाऽश्रवणेऽप्यस्योत्पत्तिविधित्वात् ।**

---

यजेते'ति मत्वर्थलक्षणां विना गुणमात्रविधायकमस्तु—इत्याशंकां परिहरति—**अनेनैवेति**। 'ज्योतिष्टोमेन स्वर्गकामो यजेते'तिवाक्येनैव यागः तस्य स्वर्गसम्बन्धश्च बोधनीयः। तथा सति 'श्रौतव्यापारनानात्व'रूपं सुदृढं गौरवं दूषणं विध्यर्थद्वयकल्पनं क्रियाफलद्वयकल्पनं चेति 'ज्योतिष्टोमेन स्वर्गं भावयेत् ज्योतिष्टोमेन यागं भावयेत्' इतिवाक्यभेदः वाक्यद्वयापत्तिः स्यात् 'सोमेन यजेते'ति तु अनुवादकं स्यात् ।। ननु 'सोमेन यजेते'त्यत्राऽपि गुणविधाने यागविधाने च गुणं भावयेत् यागं भावयेदिति वाक्यभेदः स्यादिति चेन्न। विशिष्टविधौ विशेषणस्य गुणस्याऽर्थात् सिद्धस्य पृथगविधेयत्वात् वाक्यभेदाऽभावात् । वाक्यभेदाऽपेक्षया लक्षणायाः पदेऽल्पदोषत्वेनाऽङ्गीकारात्, वाक्यभेदस्य तु वाक्यदोषत्वेन त्याज्यत्वात् । **तद्वरमिति**। सोमपदे मत्वर्थलक्षणया विशिष्टविधित्वं वरमुत्कृष्टम् ।।

विधेश्चातुर्विध्यमाह—**उत्पत्तिविधिरित्यादिना**। विधित्वं चतुष्ट्वव्याप्तमिति व्याप्तिलाभाय चतुःपदम् । कर्मस्वरूपमात्रबोधकविधित्वम् उत्पत्तिविधित्वम्, अंगप्रधानसम्बन्धबोधकविधित्वं विनियोगविधित्वम्, कर्मजन्यफलस्वाम्यबोधकविधित्वम्, अधिकारविधित्वम्, प्रयोगप्राऽऽशुभावबोधकविधित्वं प्रयोगविधित्वम् ।।

उत्पत्तिविधिं लक्षयति—**तत्र कर्मेति**। मात्रपददानेन कर्मस्वरूपेतराऽबोधकत्वे सति कर्मस्वरूपबोधकविधित्वं लक्षणम् । उत्पत्तिविधेः कर्मणः फलादिना सह सम्बन्धबोधकत्वं नास्ति । उदाहरणमाह—**यथेत्यादिना**। 'अग्निहोत्रं जुहोती'त्युत्पत्तिविधौ, अग्निहोत्रहोमेन कर्मणा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यधिकारविध्यवगतं सिद्धस्वभावं स्वसाधननिष्पादितम् इष्टं फलं स्वर्गं भावयेदिति अग्निहोत्रकर्मणः करणत्वेन साधनत्वेनाऽन्वयः सम्बन्धः, अग्निहोत्रकर्मसाधनकफलभावनाव्यापारः पुरुषनिष्ठ इति बोधः ।

अन्यथा रूपश्रवणात् 'दध्ना जुहोती'त्ययमेवोत्पत्तिविधिः स्यात्। तथा च—'अग्निहोत्रं जुहोती'तिवाक्यमनर्थकं स्यात्॥ अङ्गप्रधान-सम्बन्धबोधको विधिर्विनियोगविधिः, यथा 'दध्ना जुहोती'ति। स हि तृतीयया प्रतिपन्नाऽङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते—'दध्ना होमं भावयेदि'ति।

---

कर्मस्वरूपं तदाद्यन्तकाण्डः। कर्मस्वरूपस्योत्पत्तिः क्लृप्तिस्तदावेदकत्वाद् वाक्यस्योत्पत्तिविधिर्नाम। पुरुषप्रवर्तकत्वाऽनुरोधेन विधेरिष्टाऽऽक्षेपकत्वम्। यत्र फलं न श्रूयते पूर्वसिद्धफलं च नास्ति तत्र नित्ये नैमित्तिके काम्ये च कर्मणि स्वर्गः सुखं पापक्षयादिकमिच्छानिवृत्तिर्वा प्रयोजनं स्वीकर्तव्यम्॥

विधिशब्दो लिङादिशब्दवचनस्तदर्थवचनश्च, अर्थो व्यापारो भावना, यद्वा नियोगाख्यम् अपूर्वम्, लोकवद् वेदेऽपि लिङा नियोगस्य प्रतीतौ तस्य जीवनवदधिकारिणि सम्बन्धो होमादिविषये च सम्बन्धः, होमादिविषयो नियोगः कृतिसाध्यः, उत्पत्तिविधौ कर्म करणत्वेनाऽन्वेति॥

यागो द्रव्यदेवतापूजनात्मकः, तत्र द्रव्यं देवता चेति मुख्यं द्वयं यागस्य रूपम्, द्रव्याणि हव्यादीनि, देवता अग्निसोमवाय्वादयो विभिन्नाः, 'अग्नि-र्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती'ति देवता 'यदग्नये सायं जुहोती'ति देवता। 'चतुर्गृहीतमाघारमि'ति द्रव्यं क्षरद्धृतम् आघारम्। 'अग्निहोत्रं जुहोती'त्यत्राऽग्निहोत्रं कर्मनामधेयम्, द्रव्यं देवता न श्रूयेते, तथा च कथं यागत्वम्?, कथं चोत्पत्तिविधित्वम्? 'तत्प्रख्यं चाऽन्यशास्त्रमि'ति (१।४।४) तस्य अग्निदेवतारूपगुणस्य प्रख्यापकस्य प्रकर्षेण प्रापकस्याऽन्यस्य शास्त्रस्य 'यदग्नये च प्रजापतये च सायं जुहोति' 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति' इति श्रुतिः अन्या शास्त्रम्, तस्य तत्र मन्त्रे वर्णस्य मान्त्रवर्णिकस्य देवताविशेषस्य, वर्णः शब्दः, अग्निरितिपदस्य मन्त्रवर्णस्य देवतावाचकपदस्य मन्त्रे वर्णितस्य देवतायाश्च विहितमन्त्रेण प्राप्तत्वात् अग्निसूर्यदेवताकस्य सायंप्रातःकाल-योर्नियमेनाऽनुष्ठेयस्य कर्मणः 'अग्निहोत्रमि'ति यौगिकं नामधेयम्। अग्नि-देवताको होमो यस्मिन्निति अग्निहोत्रनामकं कर्मेति। यस्मिन् कर्मणि नैर्ऋतीं दिशमारभ्यैशानीं दिशमवधिं कृत्वा सन्तत्या धारया घृतं क्षार्यते तस्य कर्मणो नाम—आघारमिति च। अग्निहोत्राऽऽघारशब्दौ दर्विहोमो-पांशुयाजयोर्गुणसंस्कारविधायिनौ न भवतः, किन्तु कर्मान्तरयोर्नामनी। एवं कर्मस्वरूपमात्रबोधकत्वाऽभावान्नोत्पत्तिविधित्वमपीति **पूर्वपक्षः**। 'तत्प्रख्य-

**न्यायेन**' 'यत्प्रख्यं चाऽन्यशास्त्रम्' ( १।४।४ ) इति निर्णीतन्यायेन नामधेय-मात्रमिति ॥

उत्तरति—**रूपाऽऽश्रवणेऽपीति**। रूपस्य द्रव्यस्य देवतायाश्च 'अग्निहोत्रं जुहोती'ति विधाश्रवणेऽपि, **अस्य**—विधिवाक्यस्य । **उत्पत्त्यविधित्वादिति**। जुहोति होमं करोति होमं भावयति होमं भावयेत् इति विधेः, **अन्यथा**—स्वरूपं विना, **अनुपपत्त्या**—असिद्धेरेव, सिद्धयर्थं रूपं सामान्यतो द्रव्यदेवता-त्मकं विशेषतो गुणविधिमन्त्रवर्णाभ्यामवगम्यमानं भवति । 'द्रव्यदेवतात्मक-कर्मरूपस्याऽश्रवणेऽपि होमरूपकर्मस्वरूपबोधकत्वमुत्पत्तिविधित्वं सम्भवति । एतदाह—**रूपस्याऽश्रवणेऽपीति** ॥ कर्मरूपाऽश्रवणेऽपि, होकर्मरूपस्वरूपमात्र-बोधकत्वरूपमुत्पत्तिविधित्वमस्ति । विपक्षे बाधकमाह—**अन्यथेति**। 'अग्नि-होत्रं जुहोती'त्यस्य रूपाऽश्रवणमात्रेणोत्पत्तिविधित्वाऽनङ्गीकारे, विपक्षे रूपस्य दध्नः श्रवणे सति 'दध्ना जुहोती'त्यस्यैवोत्पत्तिविधित्वं स्यात् दधि-द्रव्यश्रवणात् । तत्तु गुणवाक्यम् । **तथा चेति**। एवं विपरीतत्वे सति, 'दध्ना जुहोती'त्यस्याऽग्निहोत्रकर्मोत्पत्तिविधित्वे सति 'अग्निहोत्रं जुहोती'त्यस्य अग्निहोत्रकर्मोत्पत्तिविधित्वे आनर्थक्य स्वार्थेऽप्रामाण्यं स्यात् । 'अग्निहोत्रं जुहोती'त्यस्य होमोत्पत्तिविधित्वे तु 'दध्ना जुहोति, पयसा जुहोती'त्यादि-वाक्यानां खलेकपोतन्यायेन युगपद्दध्यादिगुणविधायकतया नाऽनेकाऽदृष्ट-कल्पनाप्रसंगः । अन्यथा तु 'दध्ना जुहोती'त्यस्योत्पत्तिविधित्वे 'पयसा जुहोती'त्येतत्कर्माऽनुवादेन न पयो विधातुं शक्येत, उत्पत्तिशिष्टद्रव्य-वरोधात् , उत्पत्तिशिष्टगुणाऽवरुद्धे हि न गुणान्तरं विधीयते, आकांक्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात् , अतस्तेनाऽपि विशिष्टं कर्मान्तरं विधेयम् , तथा चाऽनेकाऽदृष्टकल्पनागौरवं स्यादिति । अतोऽग्निहोत्रं जुहोतीत्यय-मुत्पत्तिविधिः, पयसा जुहोतीत्यादयस्तु गुणविधयः, सोमेन यजेतेति तूत्पत्तिविधिः । अग्निहोत्रं जुहोति, सक्तून् जुहोतीत्यादौ कर्म तृतीयार्थं लक्षयति साध्यत्वेनाऽन्वेति, अग्निहोत्रसाध्यहोमेनेष्टं भावयेत् , सक्तुसाध्य-होमेनेष्टं भावयेदिति ॥

शेषशेषिभावनिरूपणार्थं विनियोगविधिं लक्षयति—**अंगप्रधानेति**। अंगानां द्रव्याणां देवतानां च वाक्यान्तरविहितैः प्रधानैः सह सम्बन्धस्य शेषत्वस्य बोधको विधिः—विनियोगविधिः । उदाहरणम्—'दध्ना जुहोती'ति, पयसा जुहोतीत्यादिविधिः, तृतीयया विभक्त्या साध्यत्वेन प्रतिपन्नाऽङ्गभावस्य दध्यादेरग्निहोत्रं जुहोतीति विहितहोमसम्बन्धं विधत्ते । विनियोगः सम्बन्धः । प्रतिपन्नो ज्ञातः प्रसिद्धः प्राप्तः । दधिसाध्यं होमं भावयेदिति ॥

**गुणविधौ च धात्वर्थस्य साध्यत्वेनैवाऽन्वयः, क्वचिदाश्रयत्वेनाऽपि ।**

---

ननु **दध्ना होमं भावयेत्** होमनेष्टं भावयेदि'ति दधिसाध्यहोमो होमकरणकमिष्टमित्येवं होमाऽन्वयः, एवं च सति विरुद्धत्रिकद्वयप्रसंगः, तथाहि—'दध्ना जुहोती'त्यत्र सकृदुच्चरितस्य जुहुतीत्याख्यातस्य दधिगुणे इष्टे चोभयत्र, **तन्त्रेण**—सकृदुच्चरितस्योभयत्र सम्बन्धस्तन्त्रसम्बन्धस्तेन, सकृत्प्रवर्तनेन येन बहूनामुपकारस्तत् तन्त्रं तेन, सम्बन्धांगीकारे सति होमे उपादेयत्वं विधेयत्वं गुणत्वं चेत्येकं त्रिकम् , उद्देश्यत्वम् अनुवाद्यत्वं प्राधान्यं चेत्यपरं त्रिकं सम्पद्यते, तत्र फलमुद्दिश्य होमः उपादीयते, फलमनूद्य होमो विधीयते, फलं प्रधानं होम उपसर्जनं गुणो भवतीति च । एवं होममुद्दिश्य दधि उपादीयते, होममनुद्य दधि विधीयते, होमः प्रधानो दधि उपसर्जनं गुणः, इत्येवं होमे फलाऽपेक्षयोपादेयत्वं विधेयत्वं गुणत्वं च, दधिगुणाऽपेक्षया चोद्देश्यत्वम् अनुवाद्यत्वं प्राधान्यं च सम्पद्यते । यत्र साध्यत्वेन । करणत्वेन चैकस्योभयार्थप्रयोजकेन तन्त्रेण युगपत्सम्बन्ध आशंक्यते तत्र विरुद्धत्रिकद्वयप्रसक्तिः । 'वाजपेयेन स्वाराज्यकामो यजेते'त्यत्र वाजपेयशब्दस्य पेयसुराद्रव्यवाचितया गुणविध्याशंकया मत्वर्थलक्षणाप्रसंगस्तेन 'वाजपेयवद्यागेनेष्टं भावयेदि'ति-विशिष्टविधानबोधः स्यात् । तन्न । तत्र तन्त्रेणोभयसम्बन्धबोधकेन युगपत्स्वाराज्यफलवाजपेयगुणसम्बन्धो यागस्येति **पूर्वपक्षः** । विरुद्धत्रिकद्वयप्रसंग आक्षिप्तः । ततो द्रव्यनिमित्तेन वाजपेयशब्दो नामधेयमिति सिद्धान्तितम् । फलमुद्दिश्य याग उपादीयेत, फलमनूद्य यागो विधीयेत, फले प्रधाने याग उपसर्जनं गौणश्चेति एकं त्रिकम्, यागमुद्दिश्य वाजपेय उपादीयेत, यागमनूद्य वाजपेयो विधीयेत, यागे प्रधाने सति वाजपेयं उपसर्जनं गौण इति द्वितीयं विरुद्धं त्रिकम् । फलस्योद्देश्यत्वं नाम मानसाऽपेक्षो विषयत्वाकारः, यागस्योपादेयत्वं नामाऽनुष्ठीयमानत्वाकारः, एतावुभौ मानसशरीरौपाधिकधर्मौ, अनुवाद्यत्वविधेयत्वे शब्दौपाधिकौ धर्मौ, अनुवाद्यत्वं मानान्तरज्ञातस्याऽनुवाद्यत्वम्, विधेयत्वं त्वज्ञातस्याऽनुष्ठेयत्वेन प्रतिपाद्यमानत्वम्, साध्यत्वेन फलस्य प्राधान्यम्, साध्यत्वेन यागस्य गौणत्वम्, यागस्योद्देश्यत्वं नाम मानान्तरसिद्धस्य विधेयान्वयितया निर्देश्यत्वम्, अन्यत् यथोक्तमेव । होमस्य साध्यत्वेनाऽन्वयात् न होमे विरुद्धत्रिकद्वयप्रसंगः । यत्र साध्यत्वेन करणत्वेन चैकस्य युगपत्तन्त्रेण सम्बन्ध आशंक्यते तत्रैव विरुद्धत्रिकद्वयप्रसंगः । पृथग्घोमावृत्त्या सम्बन्धे सति तु 'दध्ना होमं भावयेत् होमेन चेष्टं भावयेदि'ति वाक्यद्वयरूप-

**'दध्नेन्द्रियकामस्य जुहुयादि'त्यत्र दधिकरणत्वेनेन्द्रियं भावयेत्, तच्च किंनिष्ठमित्याकांक्षायां सन्निधिप्राप्तहोम आश्रयत्वेनाऽन्वेति ।**

---

गौरवात्मकभेदप्रसंगः स्यात् ॥ दधिसाध्यो होमः होमकरणकं स्वर्गमिति, होमे साध्यत्वं साधनत्वमुभयं तु विरुद्धत्रिकद्वयापादकं स्यात् ॥

दधिसाध्यहोमे साध्यत्वेनैवाऽन्वयेन होमस्य उद्देश्यत्वम् अनुवाद्यत्वं प्रधानत्वमेवेत्येकमेव त्रिकं, न तु तत्र उपादेयत्वं विधेयत्वं गुणत्वं चेति । अतो न विरुद्धत्रिकद्वयप्रसंगः । एतदाह—**गुणविधाविति** । यागदानहोमादिधात्वर्थानां साध्यत्वेनैवाऽन्वयो गुणविधौ 'दध्ना जुहोती'त्यादौ भवति । दधिगुणस्तत्साध्यो होमो धात्वर्थः । एवाऽर्थः साधनत्वेनाऽन्वयनिवारकः । साधनत्वेनाऽन्वयस्तु धात्वर्थस्य उत्पत्तिविधौ 'अग्निहोत्रं जुहोती'ति, अधिकारविधौ च 'यजेत स्वर्गकाम' इत्यादौ भवति । न तु 'दध्ना जुहोती'त्यादिगुणविधौ ॥

अथ 'दध्ना इन्द्रियकामस्य जुहुयादि'तिगुणविधौ होमस्य साध्यत्वेनाऽन्वये फले इन्द्रिये साधनत्वेनाऽनन्वये 'दध्ना होमं भावयेदिन्द्रियकामस्ये'तिवाक्यार्थः स्यात्, इन्द्रियस्याऽफलत्वाऽऽपत्तिः स्यात्, होमस्य साध्यत्वसाधनत्वोभयरूपेणाऽन्वये 'दध्ना होमं भावयेत् होमेन चेन्द्रियं भावयेदि'तिवाक्यभेदः स्यात् । दध्ना होमं भावयेद्धोमेनेन्द्रियं भावयेदिति साध्यत्वेन साधनत्वेन होमाऽन्वये विरुद्धत्रिकद्वयप्रसंगः स्यात् । अतस्तृतीययोपात्तस्य दधिकरणत्वस्य होमनिरूपितत्वेन फलभावनायां करणत्वविधानमिति दर्शयितुमाह—**क्वचिदाश्रयत्वेनाऽपीति** । क्वचित्—यत्र दध्यादिगुणकरणत्वस्य फलभावनायां करणत्वत्वेन विधानं तत्र, नतु गुणविधौ । **आश्रयत्वेनेति** धात्वर्थस्य होमस्य, आश्रयत्वेन—निरूपितकरणकत्वेन, निरूपितत्वेन वा, दध्नेति तृतीयार्थः करणकत्वं, करणत्वं वा, दधिकरणत्वं दध्यादिगुणकरणत्वं, करणत्वं साधनत्वं प्रत्ययार्थः, आर्थीभावनांऽशः आख्यातार्थः, तथाच—होमनिरूपितं दधिकरणत्वं, होमाश्रयं यद् दध्यादिगुणकरणत्वं, होमनिरूपितदध्यादिगुणकरणत्वेन इन्द्रियं भावयेत्, होमनिरूपितं यद्दध्यादिगुणसाधनकत्वं तेन इन्द्रियं भावयेत्, तृतीयोपात्तस्य दधिकरणत्वस्य होमनिरूपितत्वेनाऽवच्छेदकेन धर्मेण फलभावनायां करणत्वं विधीयते, अतो नोक्तदोषाः । इन्द्रियकामः पुरुषः, निष्ठत्वं षष्ठ्यर्थः, पुरुषनिष्ठः होमनिरूपितं यद्दधिकरणकत्वं तदवच्छिन्नः इन्द्रियफलकव्यापार इति बोधः, इन्द्रियसम्बन्धः प्रधानः । **तच्चेति** । दध्नेतितृतीयान्तोपात्तदधिकरणकत्वं च, किंनिष्ठमित्या-

एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि,—श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि । एतत्सहकृतेनाऽनेन विधिना-ऽङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्याऽपरपर्यायं ज्ञाप्यते ।

---

कांक्षायाम् । फलस्याऽसन्निधानात् **सन्निधिप्राप्ते**—योग्यताप्राप्तेऽर्थे होमे, अनुष्ठानकालप्राप्ते होमे, अद्वारप्राप्ते होमे, उपस्थितिप्राप्ते होमे, सन्निधिः सामीप्योपलब्धिः, तथोपलब्धे होमे । **आश्रयत्वेन**—स्वरूपसम्बन्धेन, अवच्छेद्यत्वविधया होमे । **अन्वेति** । अन्वितभावं लभते ॥

अत्र कर्तृव्यापारव्याप्यं हि करणम्, केवलदध्नः कर्तृव्यापाराऽनाविष्टत्वान्न करणत्वं, होमस्य 'दध्ना जुहोती'तिवाक्यान्तरप्राप्तत्वात् तयोर्न विधित्वम्, होमस्य गुणसम्बन्धविधाने फलपदाऽऽनर्थक्यम्, फलसम्बन्धविधौ गुणपदाऽऽनर्थक्यम्, फलगुणोभयसम्बन्धविधौ वाक्यभेद इति दोषापत्तिभयेन तृतीयोपात्तदधिकरणत्वस्य होमनिरूपितत्वेन इन्द्रियात्मकफलभावनायां करणत्वविधानमत्र स्वीक्रियते इति गुणस्याऽपि प्रधानोपलक्षणत्वं कर्मणो द्रव्याद्युपलक्षणत्वं, 'दशापवित्रेण ग्रहं संमार्ष्टी'त्यत्र (३।१।७।८ । ग्रहैकत्वाऽधिकरणे) ग्रहं पात्रं द्रव्यं तत्र कर्मणः सम्मार्गस्य गुणत्वम्, प्रतिप्रधानं गुण आवर्तनीयः, यावन्तो ग्रहास्ते सम्मार्जनीयाः, सम्मार्जनीयग्रहेत्ताया अबुभुत्सितत्वम् उद्देश्यगतमेकत्वम् अविवक्षितम्, न च जातिः सम्मार्ज्या, तस्या अमूर्तत्वात्, जातिद्वारा द्रव्यलक्षको गुणशब्दः, तत्राऽऽवृत्तिरुक्ता, सर्वेग्रहाः सम्मार्जनीया इति । ग्रहः पात्रं पात्रे द्रव्यं च । गुणस्य कर्मणो द्रव्योपलक्षकत्वम् ॥

अथ गुणस्य प्रधानोपलक्षणत्वं 'वारवन्तीयाऽधिकरणे (२।२।१२) चरितार्थं, तत्र वारवन्तीयादीनां कर्मान्तरताऽधिकरणे—रेवत्यधिकरणे (२।२।१२) 'एतस्यैव रेवतीषु वारवन्तीयम् अग्निष्टोमसाम कृत्वा 'पशुकामो ह्येतेन यजेत्'इत्यत्र पशुकामस्य 'रेवतीर्नः सधमादः'इत्यादिषु रेवतीषु ऋक्षु वारवन्तीयं साम गायेत्, रेवतीनाम् ऋचां वारवन्तीयनामकेन साम्ना सम्बन्धः पशुफलायाऽग्निष्टुतिगुणो विधीयते 'एतस्यैवे'तिप्रकृतपरामर्शकैतच्छब्देन, अन्यव्यावर्तकैवकारेण अग्निष्टुतः समर्प्यमाणत्वात् । इति पूर्वपक्षः । तन्न । रेवत्यृगाधारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वं चेत्युभयस्य शास्त्रैकबोध्यत्वाद् दुर्वारो वाक्यभेदः । तेन पशुफलकं रेवत्यृगाधारकवारवन्तीयगुणविशिष्टं कर्मान्तरमत्र विधीयते, न प्रकृते गुणः । एतच्छब्दः एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयः ।

तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा-विधात्री, अभिधात्री, विनियोक्त्री च। तत्राऽऽद्या लिङाद्यात्मिका। द्वितीया व्रीह्यादिश्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। साऽपि-त्रिविधा-विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति। तत्र विभक्तिश्रुत्या अंगत्वं यथा 'व्रीहिभिर्यजेते'तितृतीयाश्रुत्या व्रीहीणां यागांऽगत्वम्। तदपि पुरोडाशप्रकृतितया। यथा पशोर्हृदयादिरूप-

---

एतच्छब्दो बुद्धिस्थनिकटपरामर्शकः, एवकारः अयोगव्यवच्छेदको वा उपपन्नो भवति। 'समेषु कर्मयुक्तं स्यादि'ति ( २।२।२७ ) सूत्रम्॥

लक्षितस्य विनियोगविधेर्विनियोगे षट् प्रमाणानि सहकारीणि दर्शयति—**एतस्येति**। विनियोगविधिसहकारिप्रमाणत्वं षडन्यतमत्वव्याप्तमिति। प्रमाणानां श्रुतिलिङ्गादीनां विनियोगविधिसहकारित्वं,—विनियोगविधिकृतविनियोगांऽगत्वाऽवबोधकत्वम्। अंगत्वं विभिन्नरूपं साध्यत्वं पारार्थ्यमित्यादि। **एतस्य**—लक्षितस्य विनियोगविधेः, अंगप्रधानसम्बन्धबोधकविधेः, अंगप्राधान्यबोधकानि सहकारीणि अंगप्रधानसम्बन्धबोधकानि सहकारप्रदानि प्रमाणानि न्याययुक्तयः शब्दवाक्यतदर्थन्याययोजनानि षड्विधानि मीमांसकैः स्वशास्त्रत एवाऽऽप्तानि प्रयुक्तानि च अंगसम्बन्धप्रमाबोधकानि वर्तन्ते इति। नाम्ना श्रुत्यादीनि॥

श्रुतिः—प्रमाणान्तरनिरपेक्षः शब्दः श्रुतिः। लिङ्गम्—शब्दसामर्थ्यं रूढिशक्तिः। वाक्यं—शेषशेषिपदसहोच्चारणात्मकसमभिव्याहारः। प्रकरणं—किं कथमित्युभयाकांक्षा। स्थानं—क्रमः देशसामान्यं—समानदेशत्वम्। समाख्या—यौगिकः शब्दः। एभिरन्यतमैः सहितेनाऽनेन विनियोगिविधिनाऽङ्गानि विनियोज्यन्ते उपकारकाणि भवन्ति। अंगत्वं ज्ञाप्यते। अंगत्वं लक्षयति—**परोद्देशेति**। परं स्वर्गादिरूपमुत्कृष्टं साध्यं फलं, तदुद्देशेन संकलनेन मनसिसिद्धवत्करणेन, तत्साधनयागादिषु प्रवृत्तस्य पुरुषस्य कृतिसाध्यत्वरूपं शेषत्वम् अंगत्वम्, दर्शाद्युद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वं प्रयाजादीनां भवतीति प्रयाजादीनामंगत्वम्। स्वर्गस्य साक्षात्कृतिसाध्यत्वाऽभावेऽपि यदा पुरुषः स्वस्वर्गोद्देशेन दर्शादिषु प्रयतते तदाऽपूर्वद्वारेण कालान्तरे स्वर्गो जायते इति पुरुषप्रकृतिव्याप्यत्वं स्वर्गस्य, स्वर्गफलोद्देशेन वा प्रवृत्तः पुरुषो यदैव तदनुष्ठानानुकूलं स्वं प्रयत्नेन सम्पादयति तदैव कर्म निष्पद्यते कर्मणः प्रयाजाऽनुयाजाऽवघातप्रोक्षणादीनां पुरुषकृतिव्याप्यत्व-

हविःप्रकृतितया यागांगत्वम्। 'अरुणया एकहायन्या गवा सोमं क्रीणाती'त्यस्मिन् वाक्ये आरुण्यस्यापि तृतीयाश्रुत्या क्रयांऽगत्वम्। तदपि गोरूपद्रव्यपरिच्छेदद्वारा, न तु साक्षात्, अमूर्तत्वात्। 'व्रीहीन्

---

मिति। अंगत्वस्य द्वितीयः पर्यायः—**पारार्थ्यम्**—परार्थत्वम्, परो दर्शादिस्तत्प्रयोजनम् अर्थः स्वरूपसम्पादनं फलसम्पादनं च तदर्थं पारार्थ्यम् अंगत्वमिति। पारार्थ्यमेव निर्दुष्टशेषत्वलक्षणम्, पारार्थ्यं च शब्दगम्यम्, अन्वये शेषशेषिभावे पारार्थ्यं व्युत्पद्यते, गुणप्रधानभावादेवाऽन्वयः, क्रियाकारकान्वयादिवत् शेषशेषिभावोऽपि शब्दगम्योऽन्वयः। 'प्रयाजाऽनुयाजप्रोक्षणादयः, शेषाः, पारार्थ्यात्, भृत्यादिवदितिहेतुनाऽपि शेषत्वंमोयते। पारार्थ्यं हेतुत्वं साध्यं च भिन्नमेव, गृहीतव्याप्ति हि सहायीकृत्य बोधकत्वं हेतुत्वम्, इतरव्यावृतिबोधकत्वं लक्षणम्, अन्वीय निश्चितविशेषणत्वं पारार्थ्यम्, परोपकृतिशीलत्वं पारार्थ्यम्, मुख्याधीनजीवनत्वं शेषत्वम्, हेतुनिरूपितसिद्धिविषयत्वं साध्यत्वम्, इत्येवं भेदान्न हेत्वाभासदोषादिः॥

श्रुतिं लक्षयति—**तत्र निरपेक्षो रव इति**। षण्णां श्रुत्यादीनां प्रमाणानां मध्ये, स्वीकरणीये शेषत्वबोधे प्रमाणान्तरनिरपेक्षशब्दत्वं श्रुतित्वम्। वाक्येऽतिप्रसंगवारणाय—निरपेक्ष इति। सर्वथा निरपेक्षस्याऽलोकपदार्थस्य वारणाय—रव इति। वैदिकशब्द इति। श्रुतिं विभजते—**त्रिविधेति**। सा निरपेक्षरवात्मिका श्रुतिः त्रिविधा, एतादृशश्रुतित्वं त्र्यन्यतमत्वव्याप्तम्। विधात्री विधानकर्त्री। अभिधात्री अभिधानकर्त्री। विनियोक्त्री विनियोगकर्त्री चेति त्रिधा। तत्राऽऽद्यामाह—**तत्राऽऽद्येति**। त्रिसृणां श्रुतीनां मध्ये आद्या विधानकारिणी लिङ्लोट्लेडादिस्वरूपा विधिप्रत्ययस्वरूपा। द्वितीयां दर्शयति—**व्रीह्यादिश्रुतिरिति**। अभिधानबोधिका व्रीहिप्रभृतिनामबोधिका श्रुतिः। अग्निहोत्रमिति कर्मनामबोधिकेति। श्येनेन यजेतेति श्येनयागकर्मनामबोधिकेति। तृतीयां विनियोगकर्त्रीं लक्षयति—**यस्य चेति**। परस्परमन्वयिनोर्विशेषणविशेष्ययोः शब्दयोः श्रवणमात्रादेव विनियोज्यविनियोजकभावः शेषशेषिभावः सम्बन्ध आकांक्षागम्यः प्रतीयते सा शब्दात्मिका श्रुतिर्**विनियोक्त्री** अन्वयकारिणी बोध्येति। तत्राऽन्वयकारिणीं दुर्बोधां त्रिविधां दर्शयति—**सापि त्रिविधेत्यादिना**। संक्षेपात् त्रिविधत्वं चाऽस्या बोध्यम्। **विभक्तिरूपा**—प्रथमाद्वितीयादिविभक्तयः। **एकाभिधानरूपेति**। एकनामविनियोजिका श्रुतिः। **एकपदरूपेति**। 'पशुना' इत्येकपदात्मकश्रुतिः एकत्वपुंस्त्वबोधिका। विनियोक्त्र्या अंगत्वाऽवबोधकत्वेऽपि

**प्रोक्षती'ति प्रोक्षणस्य व्रीह्यंगत्वं द्वितीयाश्रुत्या। तच्च प्रोक्षणं न विधिस्वरूपार्थम्, तस्य तेन विनाऽप्युपपत्तेः। किन्त्वपूर्वसाधनत्व-प्रयुक्तम्। व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वाऽनुपपत्तेः। एवं सर्वेष्वपूर्व-**

---

तदंशविभक्तिश्रुतेरंगत्वबोधकत्वमुदाहरति—**तत्र विभक्तिश्रुत्येत्यादिना।** तिसृणां विनियोक्त्रीणां मध्ये विभक्तिश्रुत्या विभक्तिपदेन प्रत्ययेनाऽङ्गत्वं बोध्यते—**यथा व्रीहिभिरिति।** तृतीयाविभक्त्या यजनांगत्वं व्रीहीणां बोध्यते, पुरोडाशप्रकृतयो व्रीहयो यागांगानि, पुरुषनिष्ठो व्रीह्यङ्गकयागव्यापार इति बोधः। **तदपीति।** अंगत्वमपि पुरोडाशप्रकृतितयेति व्रीहीणां पिष्टकहविरिति पुरोडाशः 'पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च। रसे सोमलतायाश्च हुतशेषे च कीर्तितः'इत्यमरः। पुरोडाशो द्रव्यं हविः व्रीहिपिष्टकृतम्। अंगप्रकृतिरपि अंगमुच्यते उपादेयोपादानैक्यात्। तत्र दृष्टान्तमाह—**यथा पशोरिति।** 'अग्नीषोमीयं पशुमालभेते'ति पशुर्यज्ञीयोऽजादिः, तस्य 'अथ हृदयस्याऽग्रेऽवद्यति अथ वक्षसः इतिशास्त्रात् हृदयादिरूपहविरुपादानतया पशोर्यागांऽगत्वम् उपादानोपादेययोरैक्यादंगांगिनोरैक्यात् अथवा पश्व-वयवतया हविष्ट्वम्, न तु साक्षात्पशोः, तद्वत् व्रीहीणामपि पिष्टकहविर्द्वारा यागांगत्वम्। अथवा पात्नीवतयागे पशोराग्नेयस्य जीवत एवोत्सर्गः क्रियते सः साक्षाद् यागांगम्, तद्वत् व्रीहयः साक्षात् होमद्रव्याणीति साक्षादंगानि। 'पर्यग्निकृतं पत्नीवन्तमुत्सृजन्ती'तिवाक्यात् पशूत्सर्ग एव यज्ञनिमित्तकः, न तु मारणं, स पशुरपि अंगमुच्यते, यद्वा यत्र पशोर्विशसनं हृदयाद्यवदानं तत्र हृदयादिरेव पशुः हृदयादिप्रकृतिरेव पशुः। अथ तृतीयाविभक्तिरूपाया उदाहरणमाह—**अरुणयेति।** ज्योतिष्टोमप्रकरणे 'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाती'तिवाक्ये श्रुतस्याऽरुणिमगुणस्याऽऽरुण्याऽरुणा-शब्दार्थस्य गुणिगोविषयतया प्रयुक्तस्याऽपि 'नाऽगृहीतविशेषणा विशिष्ट-बुद्धि'रितिन्यायेन गुणबोधकत्वात्। पिङ्गाक्षीशब्दस्य पिङ्गलवर्णविशिष्टाऽ-क्षिमद्द्रव्यवाचकत्वाद् एकहायनीशब्दस्य एकसम्वत्सरविशिष्टगोद्रव्यवाचक-त्वात्, विशेषणद्वयभेदात् शब्दद्वयप्रयोगः, शब्दद्वयमपि युगपत्प्रवृत्तं सत् धर्म-द्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विधत्ते, तत्राऽरुणशब्दः सोमक्रयणसाधनी-भूतगोद्रव्यपरिच्छेदकत्वेन सोमक्रयणसाधनम् अरुणिमानं गुणमंगम् विदधाति, पश्चात्परस्परं पार्ष्णिकान्वयो भवति—एकहायनी गौः, सा पिङ्गाक्षी अरुणा चेतिरीत्या क्रयांऽगमारुण्यम्। करणविभक्तिभिः सोम-क्रयणेऽङ्गत्वेनाऽऽरुण्यादेः सोमक्रयणसाधनगोद्रव्यपरिच्छेदकत्वेन पार्ष्णि-

अयुक्तमंगत्वं बोध्यम्। एवम् 'इमामगृभ्णन् रसनाऽमृतस्येत्यश्वाऽभिधानीमादत्ते' इत्यत्र द्वितीयाश्रुत्या मन्त्रस्याऽश्वाऽऽभिधान्यंगत्वम्।

---

काऽन्वयात् क्रयांऽगत्वम्। न तु साक्षादिति। अमूर्तस्याऽऽरुण्यस्य साक्षात् क्रयसाधनत्वाऽसंभवात् न गोरूपद्रव्यक्रयणसाक्षादंगत्वम्। अमूर्तत्वादिति। क्रियावत्त्वं गुणवत्त्वं वा मूर्तत्वम्, आरुण्ये तदभावात् अमूर्तत्वमिति। पराश्रयव्यतिरेकेणाऽपि यथेष्टविनियोगाऽर्हत्वं मूर्तत्वम्।

द्वितीयाविभक्तिरूपाया विनियोक्त्र्या उदाहरणमाह—'व्रीहीन्प्रोक्षती'ति। द्वितीयार्थोऽगत्वम्, व्रीह्यंगं प्रोक्षणमिति। तच्चेति। एतत्प्रोक्षणं न व्रीहिद्रव्यस्वरूपार्थं, तस्य—व्रीहिस्वरूपस्य, तेन—प्रोक्षणेन विनाऽपि, उपपत्तेः—सिद्धत्वात्। अपूर्वसाधनत्वप्रयुक्तं प्रोक्षणमित्याह—किन्त्वित्यादिना। किन्तु—किमर्थं तर्हीति। अपूर्वेति। प्रोक्षणेन व्रीहिषु अपूर्वसाधनत्वम् उपपाद्यते। व्रीहीनप्रोक्ष्येति। अप्रोक्षितव्रीहिद्रव्यकयागानुष्ठानेऽङ्गाऽपूर्वाऽनुत्पत्तेर्मध्याऽपूर्वाऽनुत्पत्तेश्च परमाऽपूर्वाऽलाभात् फलहान्यापत्तेः। प्रोक्षणे सिद्धमपूर्वप्रयुक्तं व्रीह्यंगत्वमन्यत्राऽप्यतिदिशति—एवं सर्वेष्विति। दर्शपूर्णमासप्रकरणसहकृतया व्रीहिनितिद्वितीयाश्रुत्या प्रोक्षणस्य तण्डुलनिष्पत्तिप्रणालिकया व्रीहीणामपूर्वसाधनत्वप्रयुक्तांगत्वमिव सर्वेषु अवघाताद्यंगेष्वपि अपूर्वसाधनत्वप्रयुक्तमेव यथापेक्षमंगत्वं ज्ञातव्यम्॥

द्वितीयारूपाया विनियोक्त्र्याः श्रुतेरुदाहरणान्तरमाह—एवमित्यादिना। द्वितीयाश्रुत्या व्रीह्यंगं प्रोक्षणमितिवत्। इमामगृभ्णन्निति। अमृतस्य—सत्यफलस्य सत्यफलसम्बन्धिनीम् इमां रशनांबन्धनरज्जुं गलरज्जुं, मुखरज्ज्वास्तु रथाश्ववारवाहनवहनादिक्रियागतिनियमार्थमुपयोगः, सा तु गौणा, पादरज्ज्वा अपि तथा नियमनार्थकत्वाद्गौणत्वम्। अगृभ्णन्—गृहीतवन्तः यज्ञीयविप्राः। इतिमन्त्रमुच्चारयन् शृण्वन् अधिकारी एको द्विजस्ताम् अश्वाभिधानीनाम्नीं रशनाम् आदत्ते गृह्णाति, रशनामिति द्वितीया श्रुतिः अश्वाभिधानीमिति द्वितीयाश्रुतिः, इत्यन्तं मन्त्रोच्चारणं रशनां च कुक्षीकृत्य सम्पद्यते, ततो तन्मन्त्रगर्भकपूर्णमन्त्रस्याऽश्वाभिधानीमिति विषयीकृत्याऽऽदानपर्यन्तं तद्ग्रहणविधानपरत्वं, तथा च बहुकर्तृकग्रहणमन्त्रः एककर्तृकग्रहणतो लटादिभेदाच्च तथैव श्रवणाच्च कस्य मन्त्रस्वरूपस्य कस्या रशनाया अंगत्वमिति तदाकांक्षानिवृत्त्यर्थम् अनुपयुक्तरशनानिवारकं पर्यायपदमेव रशनाया अश्वाभिधानीमिति, ततोऽश्वाऽभिधान्या अंगं मन्त्र इति दर्शयितुमाह—अश्वाभिधान्यंगत्वमिति। पूर्णमन्त्रस्य

'यदाहवनीये जुहोतीत्याहवनीयस्य होमांऽगत्वं सप्तमीश्रुत्या। एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः।

'पशुना यजेते'त्यत्र एकत्वपुंस्त्वयोः समानाऽभिधानश्रुत्या कारकांऽगत्वम्, यजेतेत्याख्याताऽभिहितसंख्याया भावनांगत्वं समानाभिधानश्रुतेरेव, पदश्रुत्या च यागांगत्वम्। न चाऽमूर्तायास्तस्याः

---

अश्वाभिधान्या अश्वरशनाया अंगत्वम्। अंगप्रधानसम्बन्धबोधकोऽयं विनियोगः। अश्वाभिधान्यंगत्वेऽपि रशनांगत्वं दुर्वारम्, पूर्णवाक्यात् लिङ्गयोगस्य वलीयस्त्वात्। मन्त्रः ऋतफलसाधनभूतस्याऽश्वस्य रशनां गृहीतवन्त इति अश्वरशनाप्रकाशकोऽतः शब्दसामर्थ्यात्मकलिंगसहकृताऽश्वाभिधानीमादत्ते इतिवाक्यात् मन्त्रोऽश्वरशनाऽऽदाने विनियोगपरः। **इति**—इतिमन्त्रेणाऽश्वाभिधानीमादत्ते—**इति-अश्वाभिधानीमिति**। शब्दसामर्थ्यात्मकलिंगेनाऽश्वरशनाऽऽदानविधानात् मन्त्रस्याऽश्वरशनाप्रकाशकत्वमश्वरशनाऽऽदाने विनियोगत्वम्। **द्वितीयाश्रुत्या**—द्वितीयाविभक्तिश्रवणेन। **रशनामित्य**श्वरशनाप्रकाशकत्वम्। अश्वाभिधानीमित्याद्यश्वरशनाऽऽदाने विनियोग इति॥

सप्तमीविभक्तिरूपां विनियोक्त्रीं श्रुतिमुदाहरति—**यदाहवनीय इति**। आहूयते हविरत्र, आहवनमर्हतीति वा आहवनीयः, आहवनीयनामकाऽग्नेर्होमांऽशत्वं सप्तम्याश्रुत्या बोध्यते। **एवमन्योऽपीति**। दध्नाजुहोति पयसा जुहोतीत्यादौ होमानुवादेन दध्यादेरंगत्वेन तृतीयाश्रुत्या **विनियोगः**। एकाभिधानरूपा एकपदरूपा च श्रुतिः विनियोगकर्त्री श्रुतिरेका **'पशुना यजेते'ति**। अत्र पशुनेत्येकपदश्रुत्या एकत्वपुंस्त्वयोः पशुद्रव्यांगत्वम्, एकाभिधानं पशुनेति-टाप्रत्ययः तच्छ्रुत्या च एकत्वपुंस्त्वयोः कारकांगत्वं तृतीयाकारकांगत्वम्। **'यजेते'**त्यत्राऽऽख्याताऽभिहितसंख्याया एकत्वरूपायाः, **समानाभिधानश्रुतेरेव**। तृतीयार्थे पञ्चमी, एकाभिधानश्रुतेरेव, एकशब्दरूपप्रत्ययश्रुत्यैव अर्थभावनांऽगत्वम्, अभिधीयतेऽनेन शब्देनेति व्युत्पत्त्याऽभिधानं शब्दः, अत्र सः प्रत्ययरूपो गृह्यते। **पदश्रुत्येति**। 'यजेते'त्येकपदश्रुत्या च, आख्याताऽभिहितसंख्याया यागांऽगत्वं भवतीति। पशुना यजेतेत्यत्र यागं प्रति पशोर्विधेयत्वेन एकवचनेन प्रतीयमानं विधेयगतमेकत्वं विवक्षितम्, एवं लिंगसंख्याविशेषितस्यैकपदोपात्तस्य पशुद्रव्यरूपकारकस्य विधेयपशुद्वारा तत्तल्लिङ्गसंख्यादेरपि क्रियांगत्वादेकत्वादिकं विवक्षितम्, एवं तृतीयया विभक्त्याऽभिहितयोर्लिंगसंख्ययोर्विभक्त्यभिहिततया करणकारकशक्त्यात्मसात्कृतयोः प्रातिपदिकार्थपशुद्रव्येण सह सम्बन्धमनादृत्य पशुवदेव साक्षाद्

कथं भावनांऽगत्वमिति वाच्यम् । कर्तृपरिच्छेदद्वारा तदुपपत्तेः । कर्ता चाऽऽक्षेपलभ्यः । आख्यातेन हि भावनोच्यते । सा च कर्तारं विनाऽनुपपन्नेति तमाक्षिपति ।

सेयं श्रुतिलिङ्गादिभ्यः प्रबला । लिङ्गादिषु न प्रत्यक्षो विनियोजकः शब्दोऽस्ति किन्तु कल्प्यः । यावच्च तैर्विनियोजकशब्दः

---

यागक्रियांऽगत्वेन विधौ पश्चात्परस्पराऽन्वयात् 'यो यागांऽगत्वेन विहितः पशुः स एकः पुमांश्चेति' सर्वथा पश्वेकत्वादिकं विवक्षितं यागक्रियांऽगत्वम् ।

अथ यो गुणस्तस्य निष्क्रियत्वाद् अद्रव्यत्वाद् अमूर्तत्वाच्च नाऽवयवत्वमत एव नांऽगत्वमिति शंकते—**न चाऽमूर्ताया इति** । न च···वाच्यमिति । यजेतेत्यत्र अमूर्ताया निर्गुणाया निष्क्रियाया अद्रव्यायास्तदीयाया एकत्वसंख्याया कथं कया रीत्या न्याययुक्त्या भावनाया यागस्य चांऽगत्वमिति ? उत्तरमाह—**कर्तृपरिच्छेदद्वारेति** । कर्तुः अर्थभावनारूपव्यापारवतो यागकर्तुरधिकारिणः, एकत्वसंख्यया, **परिच्छेदः**—परिच्छित्तिः— पृथक्तया प्रतिपत्तिः, एकत्वसंख्यातमेकं कर्तारम् अन्येभ्यः परिच्छिनत्ति, पृथक्त्वेन स्थापयति, ज्ञापयति, एककर्तृकभाव्योऽत्र यागव्यापार इति, नाऽधिककर्तृकभाव्यः, 'यजेते'त्येकवचनप्रयोगात् । कर्तुरेकत्वे एकवचनात्मको लकारः, द्वित्वे तु द्विवचनात्मको लकारः, बहुत्वे तु बहुवचनात्मको लकारः, इत्यस्मिन्नर्थे व्याकरणस्मृतयः प्रमाणम् , तिङाख्यातवाच्या भावना नियमेन कर्त्रा सम्बद्धा भवति, अतः सा भावना प्रथमं कर्तारमाक्षिपति, आख्याताऽभिहिता संख्या कर्त्रा सम्बद्ध्यते, तस्य कर्तुराक्षेपात् प्रथममुपस्थितिः, आख्यातवाच्याभावना कर्तारं विनाऽनुपपन्ना कर्तारमाक्षिपति, आक्षेपादेव कर्तुः प्रतिपत्तिः । कर्तृ प्रथमाया अभिहितकारकविभक्तित्वेन लिंगसंख्याप्रतिपत्त्यर्थमावश्यकत्वान्न्याय्यत्वाच्च, तत्राऽऽख्याताभिहिता संख्या कर्त्रा सम्बद्ध्यते, आक्षिप्तो लक्षितः कर्ता एकत्वेनाऽन्वेति, फलं व्यापारो भावना कर्तरि सम्बद्ध्यते, इत्येवं कर्तुः परिच्छित्तिद्वारा भावनांगत्वं संख्याया उपपद्यते, समानाभिधानश्रुत्या आख्यातार्थसंख्या कर्तर्येव सम्बध्यते, कर्ता चाक्षेपलभ्यः, इत्येनमर्थमाह—**कर्ता चाऽऽक्षेपलभ्य इति** । कर्ता व्यापाराश्रयः, भावनाश्रयः, स चाऽऽक्षेपेणाऽनुमानेनाऽर्थापत्त्या वा, **लभ्यः**—अनुमेयः कल्प्यो वा भवति । तथाहि—'भावना साश्रया गुणत्वाद् व्यापारविशेषत्वाच्च । सम्प्रतिपन्नगुणवत् तादृशव्यापारविशेषवच्च । लोके व्यापारविशेषस्य निराश्रयस्याऽसंभवात् भावनारूपो व्यापारविशेषोऽपि अन्यथाऽनुप-

कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्व-शक्तेर्व्याहतत्वात् ।

अत एव 'ऐन्द्र्या' लिङ्गान्नेन्द्रोपस्थापनार्थत्वम् । किन्तु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या गार्हपत्योपस्थानाऽर्थत्वम् ॥

---

पद्यमानः स्वाश्रयं कर्तारमाक्षिपतीत्यर्थापत्तिः । अचेतनस्य नाऽऽक्षेपः, अनधिकारात्, भावनाक्षिप्ते च कर्तरि आख्यातस्य लक्षणायाः शक्यसम्बन्धरूपायाः स्वीकारान्न शाब्द्याः संख्याया अशाब्देन कर्त्राऽन्वयाऽनुपपत्तिः; कर्तुरपि लक्षणया शाब्दत्वात्, शब्दगम्यत्वस्य शाब्दत्वात् । न तु कर्तुराख्यातवाच्यत्वम्, वाच्यवाचकभावस्य 'अनन्यलभ्यः शब्दार्थ'इतिन्यायसहकृताऽन्वयव्यतिरेकगम्यत्वात् । द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनमि'ति सूत्राभ्यां सह 'लः कर्मणि च भावे चाकर्मकेभ्यः' इतिस्मरणस्यैकवाक्यत्वेनैव 'कर्तुरेकत्वे एकवचनात्मको लकारो द्वित्वे द्विवचनात्मको बहुत्वे बहुवचनात्मको लकारो भवेदि'त्यस्मिन्नर्थे प्रमाणत्वात् । कर्तृधर्मस्य भावनारूपस्याऽऽख्यातवाच्यत्वं तु स्फुटमेव ॥ तदेव दर्शयति—**आख्यातेनेति** । आख्यातेन तिप्रत्ययेनाऽत्र हि निश्चितोऽर्थो भावनोच्यते । **सा** चाऽर्थभावना स्वयं कर्तारं भावयितारं विनाऽनुपपन्नाऽनाश्रया भवतीति स्वाश्रयं भावयितारं चेतनं कर्तारमाक्षिपति सा कर्तृव्यापाररूपाऽर्थभावना स्वयमनाश्रिता सती अस्वरूपा स्यादतः स्वरूपं निर्वाहयितुं स्वाश्रयं कर्तारमाक्षिपति । भावनाव्यापारः कर्तृवृत्तिरितिबोधयति ॥

श्रुतिः विभक्तिश्रवणं प्रमाणान्तरनिरपेक्षविनियोजकमिति प्रदर्शितम् ; श्रुतेः लिङ्गवाक्यप्रकरणस्थानसमाख्याभ्यः तत्तत्प्रसंगे प्रबलत्वमित्याह—**सेयं श्रुतिरिति** । प्रमाणान्तरनिरपेक्षा विभक्त्यादिश्रुतिः लिङ्गादिभ्यः प्रमाणेभ्यः पञ्चभ्यो विनियोजने विधानादौ अन्वयादौ, **प्रबला**—प्रथमचरितार्थताबलवतीति । स्वभावादेव प्रत्ययश्रवणं बलवत् , तद्विना बोधाऽनुपपत्तेः । तदाह—**लिङ्गादिष्विति** । श्रुतिः विभक्तिप्रत्ययशब्दाः प्रत्यक्षाः सन्ति, लिंगादिषु विनियोजकाः सामर्थ्यादिशब्दाः प्रत्यक्षाः विशेषेण प्रयुक्ता न भवन्ति, अतो विनियोजकाः शब्दाः प्रकल्प्यन्ते । यावच्च लिंगादिभिर्विनियोजकः शब्दोऽर्थप्रकाशनादिना कल्प्यते, तावत्तु प्रत्यक्षोपलब्धया श्रुत्या शेषिणा शेषसम्बन्धबोधस्य रचितत्वेन लिङ्गादीनां विनियोजकश्रुतिकल्पनद्वारेण विनियोजकशक्तेः व्याहतत्वं भवति ॥

शब्दसामर्थ्यं लिङ्गम्। यथाऽऽहुः—'सामर्थ्यं सर्वशब्दानां लिङ्ग-मित्यभिधीयते' इति। सामर्थ्यं रूढिरेव, तेन समाख्यातोऽस्या भेदः,

---

लिङ्गाच्छ्रुतेः प्राबल्यादेव दुर्बलवाक्यादिभ्योऽपि श्रुतेः प्राबल्यं सिद्धयतीत्येतद्वर्णनार्थमाह—अत **एवेति**। लिंगादिभ्यः श्रुतेः प्रबलत्वादेव। **ऐन्द्या—इति**। 'नेन्द्र सश्चसि' इतीन्द्रप्रकाशनसमर्थाया अपि ऋचः 'ऐन्द्याः' इतिषष्ठचन्तशब्देन ग्राह्यत्वं, तथा च 'कदाचनस्तरीरसि—नेन्द्र सश्चसि दाशुषे' इत्यैन्द्री ऋक्, तत्र इन्द्रस्य प्रकाशनं 'भो इन्द्र, कदाचिदपि न सश्चसि—घातको न भवसि किन्तु आहुतिं दत्तवते यजमानाय प्रियसे' इति तस्या अर्थः। तत्र इन्द्रप्रकाशनसामर्थ्यरूपात् **लिंगात्** इन्द्रशब्दसामर्थ्यात् रूढशब्दसामर्थ्यात्; न इन्द्रोपस्थानाङ्गत्वम्। उक्ताया **ऐन्द्याः—ऋचः** ऋग्वाक्यस्य, लिंगाद्रूढिशक्तिसामर्थ्यात् प्रमाणात्, न इन्द्रोपस्थानांगत्वम्, सा ऐन्द्री ऋक् न इन्द्रोपस्थानांगम्, इन्द्रपदरूढिसामर्थ्यादपि न सा ऋक् इन्द्रोपस्थितेरंगं भवति। ऋक् मन्त्रः लिंगात् इन्द्रविषयक्रियासाधनमिति गम्यते। एतन्मन्त्रकरणकक्रियां प्रति इन्द्रः प्रधानमिति एतादृशबुद्धयुत्पादनं लिंगविनियोगः। का सा क्रियेति जिज्ञासायाम् 'ऐन्द्या उपतिष्ठते' इत्यनेनाऽविरुद्धपदद्वयरूपेण वाक्येन उपस्थानक्रियायां पर्यवसानं क्रियते, तेन ऐन्द्रमन्त्रेण 'इन्द्रमुपतिष्ठेत' इत्यर्थः पर्यवस्यति॥

अथ तर्हि तस्याः ऐन्द्याः ऋचः केन प्रमाणेन कुत्रांऽगत्वमित्याकांक्षायांमाह—**किन्तु ऐन्द्या इति**। 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति श्रूयते, तत्र ऐन्द्या ऋचा मन्त्रेण, ऐन्द्रमन्त्रेण—'गार्हपत्यमुपतिष्ठेत'॥ तत्र गार्हपत्यमितिद्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते; तच्च गुणभूतां यत्किञ्चित्करणकक्रियामन्तरेण न सम्भवति, ततस्तादृशीं यत्किञ्चित्क्रियां प्रति गार्हपत्यः प्रधानमितिबुद्धयुत्पादनं श्रुतिविनियोगो भवति, 'ऐन्द्योपतिष्ठते' इतिपदद्वये मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति, तथा सति ऐन्द्रमन्त्रेण गार्हपत्यमुपतिष्ठते इत्यर्थो भवति, ऐन्द्रमन्त्रस्य गार्हपत्यनामकेऽग्नौ मुख्यवृत्त्या सामर्थ्याऽभावेऽपि गौणवृत्त्या गुणवृत्त्या सामर्थ्यस्योक्तत्वात् सामर्थ्याऽभावकृतप्रतिबन्धस्याऽभावात् निर्विघ्ना श्रुतिराशु विनियुंक्ते, लिङ्गं तु विलम्बेन विनियुंक्ते, तथाहि—तत्र प्रथमं मन्त्रपदानि स्वाभिधेयार्थं प्रतिपादयन्ति, ततो मन्त्रस्याऽर्थप्रकाशनसामर्थ्यं निरूप्यते, ततस्तत्सामर्थ्यवशात् साधनत्ववाचिनी प्रधानत्ववाचिनी च श्रुतिः कल्प्यते, सा श्रुतिः ऐन्द्रमन्त्रेण इन्द्रमुपतिष्ठेतेति विनियुंक्ते, तत्र मन्त्रपदाऽभिधेयप्रतिपादनस्य विनियोगस्य

यौगिकशब्दसमाख्यातो रूढ्यात्मकलिङ्गशब्दस्य भिन्नत्वात् । तेन 'बर्हिर्देवसदनं दामी'तिमन्त्रस्य कुशलवनांगत्वं, न तूलपादिलवनांऽगत्वम् । तस्य 'बर्हिर्दामी'तिलिङ्गात् तल्लवनं प्रकाशयितुं समर्थत्वात् । एवमन्यत्राऽपि लिङ्गाद्विनियोगो द्रष्टव्यः ॥

---

च मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ भवतः । प्रत्यक्षश्रुतिविनियोगपक्षे तु मन्त्रपदाभिधेयप्रतिपादनमात्रेण श्रुतेः विनियोजकत्वसम्भवात् तौ मध्यवर्तिनौ व्यापारौ न भवतः, अतः श्रुतेः प्राबल्यात्तया लिङ्गं बाध्यते, भविष्यत्प्राप्तिप्रतिबन्धकत्वमत्र बाधत्वम् । बाधो द्वेधा—प्राप्तबाधोऽप्राप्तबाधश्च । दशमेऽध्याये चोदकप्राप्तानां प्राकृतानां कुशानां 'शरमयं बर्हिरि'तिप्रतिकूलशराऽम्नानात् बाधः । अवघातप्रयोजनस्य वैतुष्यस्य लोपात् कृष्णलेष्ववघातस्य बाधः । पित्र्येष्टौ 'न होतारं वृणीते'तिहोतृवरणस्य बाधः । अप्राप्तबाधस्तु—तृतीयाऽध्याये कथितः, तथाहि—यावत् दुर्बलप्रमाणेन विनियोगः कर्तुमारभ्यते तावत्प्रबलेन प्रमाणेन विनियोगस्य कृतत्वादेव बाधः दुर्बलकृतविनियोगबाधः । अत्र कथञ्चित्प्राप्तभाविप्रवृत्तिप्रतिबन्ध एव बाधोऽयम् ॥

तस्माद् गार्हपत्यमुपतिष्ठते'इत्यत्र गार्हपत्यमिति **द्वितीयया श्रुत्या** विनियुक्तो मन्त्रः पुनर्नियोगाऽनाकांक्षः सन् विनियोजकलिङ्गप्रमाणप्राप्त्यभाववान् भविष्यति, अतो गार्हपत्योपस्थाने एव मन्त्रः ऋक् प्रत्यक्षश्रुत्यैव विनियुज्यते ॥

एवम्—अग्निचयनप्रकरणे समाम्नाता 'निवेशनः संगमनः'इत्यादिः ऋक् ऐन्द्री भवति, 'निवेशनः संगमनः······इन्द्रो न तस्थौ'इति सापि 'निवेशनः संगमनः वसूनाम् ऐन्द्रया गार्हपत्यमुपतिष्ठते'इति ब्राह्मणे तृतीयया ऐन्द्रया इतिश्रुत्या गार्हपत्योपस्थाने विनियुज्यते, तस्याः गार्हपत्योपस्थापनसामर्थ्यवत्त्वात् । गार्हपत्यप्रकाशने समर्थमेव मन्त्रम् 'ऐन्द्रया'इतितृतीयाश्रुतिर्गार्हपत्योपस्थाने विनियुंक्ते । 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् (३।३।७।१४) ॥ गार्हपत्योपस्थानार्थत्वम्—ऐन्द्रया इति ऋचः गार्हपत्योपस्थानांऽगत्वम् ॥ श्रुतेर्लिंगस्य दौर्बल्यवल्लिंगाऽऽदेः पूर्वस्मात्परस्य वाक्यादेः एकविनियोज्यविषयत्वेन विरोधे सति दौर्बल्यम्, स्वार्थाऽवबोधने परस्य पूर्वव्यवधानेन प्रवृत्तिमत्त्वात ॥

अथ लिंगं लक्षयति—**शब्दसामर्थ्यमिति** । सामर्थ्यं रूढिः, शास्त्ररूढिः, लोकरूढिरपि शास्त्रमूला चेत्सा सामर्थ्यम् , शक्तिः समुदायनिरूप्या, सर्व-

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । अत एव 'स्योनन् ते सदनं कृणोमी'तिमन्त्रस्य पुरोडाशसदनकरणाङ्गत्वं सदनं कृणोमीति लिङ्गात्,

---

शब्दानां मन्त्रगतानामेका रूढिरवगम्यते यत्रोपपादने, तत्सामर्थ्यम्, लीनमर्थमस्फुटपदार्थं गमयतीति लिङ्गमिति संज्ञाप्रमाणम्, शब्दानां सामर्थ्यमिति तादात्म्येन लक्षणम् । शक्तिपदार्थेऽतिप्रसक्तिवारणाय—शब्देति । लिंगे हेतावतिव्याप्तिवारणाय—सामर्थ्यमिति । लिंगं लक्ष्यम्, शब्दसामर्थ्यत्वं लिगत्वं वा लक्षणम् । रूढया मीमांसकरीत्या लिङ्गपदवाच्यत्वम्, तेनाऽन्यरीत्या लिगे नाऽतिप्रसक्तिः । शब्दगतसामर्थ्यमेतदुक्तम्, न त्वर्थगतम्, अर्थगतं सामर्थ्यं त्वबाधत्वम्, तदेव योग्यतारूपम्, शब्दे तु समुदायशक्तिरूपम्, तत्र वृद्धवचनमाह—**यथाहुरिति**। वृद्धमीमांसकाः प्राहुः, **सामर्थ्यमिति**। सामर्थ्यं रूढिशक्तिरिति या सा ऋग्गतानां यावतां शब्दानां शास्त्ररूढयाऽवगता भवतीति तदेव रूढिरूपं लिङ्गं विशेषशक्तिः सा लीनार्थविनियोगकर्त्री भवति ॥ अर्थगतं सामर्थ्यं तु 'स्रुवेण अवद्यती'ति स्रुवस्य घृतहोमपात्रस्य समर्पणात्मकाऽवदानसामान्यशेषत्वाऽवगमेऽपि सामर्थ्यरूपालिगाद् रूढेः आज्यसान्नादिद्रव्यद्रव्याऽवदानविशेषांगत्वं निर्णीयते । लिंगं समुदायशक्तिः रूढिशक्तिः, समाख्या यौगिकी शक्तिः अवयवांगशक्तिरिति । **तेनेति**। समुदायसामर्थ्यत्वेन यौगिकसामर्थ्यत्वावच्छिन्नस्य यौगिकशब्दसमाख्याप्रमाणतः । **अस्याः**—रूढिसामर्थ्यरूपायाः शक्तेः । **भेदः**—पार्थक्यम्, स्वरूपपार्थक्यम् । यौगिकशब्दरूपा समाख्या, ततो रूढश्च लिंगशब्दः स्वरूपतोऽर्थतः फलतश्च भिन्न एव । **तेन बर्हिरिति**। स्वाऽनुप्रमाणेभ्यो बलवत्तरेण लिङ्गप्रमाणेन 'बर्हिर्देवसदनं दामी'तिमन्त्रस्य 'पुरोडाशसदनभूतं बर्हिः खण्डयामी'तिश्रुतपदसामर्थ्यात् कुशकाशादिरूपाणां मुख्यबर्हिषां लवनांगत्वम्, न तु समाख्यातो दर्भस्थानीयतया मतानां सप्तदर्भात्मकानां गौणबर्हिषाम् उलपादिरूपतृणविशेषाणां लवनांगत्वम् । सशाखविस्तृतवल्ली उलपः । 'उलपस्तु गुल्मिनीतृणभेदः' इत्यमरटीका । मुख्यबर्हिस्थाने 'कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दराः । गोधूमा व्रीहयो मुञ्जा एते दर्भाः प्रकीर्तिताः' । (स्मृत्यर्थसारे) । अथ 'कुशाऽभावे तथा काशान् दूर्वाव्रीहियवानपि । तदभावे तु नीवारान् श्यामाकान् वा नियोजयेत्' (शंखः) । नभोमासस्य दर्शे ये कुशाः शुद्धा उपाहृताः । अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः ॥ कुशः प्रादेशमात्रः स्याद् द्विगुणो दर्भ उच्यते । हस्तमात्रो भवेद् वज्रो गोपुच्छस्तृणमुच्यते ॥ श्राद्धकाले कुशः श्रेष्ठो दानेषु दर्भ उच्यते । आवसथ्ये भवेद् वज्रो गोपुच्छः प्रेतकर्मणि ॥ पाणिनैकगुणं प्रोक्तं दर्भैः शतगुणं तथा । अक्षय्यं

न तु वाक्यात् ॥ समभिव्याहारो वाक्यम् । समभिव्याहारश्च साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि । वस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम् । यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' । अत्र पर्णताजुह्वोः समभिव्याहारादेव पर्णताया जुह्वङ्गत्वम् ।

---

खड्गपात्रेण पितृणां तर्पणं भवेत् ॥ (सत्संगिजीवनं पंचमप्रकरणं अध्यायः ६, श्लोकाः—२८ तः ३२ ) ॥

मुख्यबर्हिषां लवनांगत्वे हेतुमाह—**तस्येति** । 'बर्हिर्देवसदनं दामी'तिमन्त्रस्य 'बर्हिर्दामी'तिसमुदितसामर्थ्याद् । रूढेः । 'बर्हिर्देवसदनं दामी'तिसमुदायशक्तेः बलात् , प्रसिद्धपदानां । सामर्थ्याद् बर्हिर्दर्भलवनांगम् 'बर्हिर्देवसदनं दामी'तिमन्त्रः ॥ एवम्—**अन्यत्राऽपि** । 'अग्नये जुष्टं निर्वपामी'ति मन्त्रः निर्वापादिप्रकाशनसामर्थ्यरूपाल्लिंगबलात् निर्वापे विनियोगः,—निर्वापांऽगम् । निर्वपामि निदधामि । यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य मन्त्रस्य तदंगत्वमिति । **द्रष्टव्यः**—मन्त्रो विनियोजयितव्यो लिंगादिति ॥

रूढिसामर्थ्यात्मकलिङ्गस्य बलवत्त्वं समुदितवाक्येन दर्शयति—**तदिदमित्यादिना** । तत्—विनियोजितं लक्ष्ये यत् , इदम्—उदाहरणेन निकटे एव प्रमाणीकृतम् , लिङ्गम्—समुदायशक्तिप्रमाणं, वाक्यप्रकरणस्थानसमाख्यात्मकप्रमाणेभ्यो बलवत्, बलं—विनियोगे सति प्राथम्येनांऽगत्वसाधकत्वम् । दुर्बलकृतविनियोगबाधकत्वं प्रबलत्वम् । **अत एवेति** । लिंगस्य वाक्यादिभ्यो बलवत्त्वादेव हेतोः । 'स्योनन्! ते सदनं कृणोमि, घृतस्य धारया सुषेवं कल्पयामि तस्मिन् सीद अमृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः'—इतिमन्त्रः । भोः पुरोडाश !, ते—तव, स्योनं—समीचीनं, सदनं-स्थानं, कृणोमि-करोमि, तच्च स्थानं घृतस्य धारया, सुषेवं सुष्ठु सेवितुं योग्यं, कल्पयामि, भो व्रीहीणां मेध व्रीहिसारभूत !, त्वं सुमनस्यमानः समाहितमनस्कः सन्, तस्मिन्नमृते समीचीने स्थाने, सीद उपविश प्रतितिष्ठ, तत्र स्थिरो भवेत्यर्थः । अत्र मन्त्रे—'तस्मिन्नि'ति मध्ये प्रकृतवाचकं सर्वनाम स्थितम् तत्पूर्वं वाक्यं स्थानकरणविनियोजकम् , उत्तरार्धं वाक्यं पुरोडाशस्थापनाविनियोजकम् , 'तस्मिन्नि'तिसप्तम्यन्तेन पूर्वोत्तरार्धयोरेकवाक्यत्वमेककार्यकैकविषयकविनियोजनपरत्वात्, मन्त्रद्वयस्याऽभावात्, सर्वोऽप्ययं मन्त्रः स्थानकरणस्यांऽगं पुरोडाशस्थापनस्य चाप्यंगं भवति, तत्र विनियोजिका श्रुतिरेवं कल्पनीया भवति—'सर्वेणाऽनेन मन्त्रेण स्थाने पुरोडाशः स्थाप-

नीयः'। तथाच सदनकरणपुरोडाशस्थापनयोः एतन्मन्त्रस्य विकल्पः समुच्चयो वा कल्पयितुं न शक्यः, पूर्वोत्तरार्धयोः सम्पन्नमेकवाक्यम् उत्तरार्धस्य सदनकरणे शक्तिमकल्पयित्वा सकलमन्त्रं सदने विनियोक्तुं नार्ऽहति, न वा पूर्वार्धस्य पुरोडाशस्थापने शक्तिमकल्पयित्वा कृत्स्नं मन्त्रं विनियोक्तुं प्रभवति, ततो लिंगं शक्तिरूपं द्वयं कल्पितं सत् व्यवधानरूपं श्रुतिवाक्यप्रमाणयोर्मध्ये बलवद् व्यवतिष्ठते, तेन श्रुतिं प्रति व्यवधानेन वाक्यं विप्रकृष्यते दूरायते, लिंगद्वयं तु श्रुतिं प्रति न दूरायतेऽव्यवधानात्, तथा च लिंगद्वयेन प्रबलेन वाक्यस्य निर्बलस्य बाधात् मन्त्रस्यार्ऽर्धद्वयं सदनकरणस्थापनयोर्विनियुक्तं व्यवस्थितमिति **'सदनं कृणोमी'ति** सदनकरणप्रकाशनसामर्थ्यरूपलिंगात् 'स्योनं ते सदनं कृणोमी'तिमन्त्रस्य पुरोडाशसदनस्थापनरूपार्थकरणांगत्वं, न तु सदनस्थापनलक्षणशेषशेषिरूपार्थप्रतिपादकात् 'सदनं कृणोमि तस्मिन् सीदे'तिसहोच्चारणरूपाद्वाक्यादिति ॥

अथ वाक्यप्रमाणं निर्वक्ति—**समभिव्याहारो वाक्यमिति**। वाक्यप्रमाणस्य लक्षणं समभिव्याहारत्वं शेषशेषिरूपार्थप्रतिपादकशब्दव्यूहत्वं सहोच्चारणगोचरपदव्यूहत्वं कारकक्रियाद्यन्वितार्थबोधकप्रमाणत्वं वैदिकविनियोगजनकसहोच्चरितपदव्रातत्वं वा वाक्यत्वं, क्रमसुसमुदितोच्चारणं समभिव्याहृतिः आनुपूर्व्यवच्छिन्नसाकांक्षक्रमितविनियोजितयथापेक्षितपदव्याहृतिः समभिव्याहृतिः, तद्वत्त्वं वाक्यत्वम्। व्याहृतिः उच्चारणम्। आख्यातं सविशेषणं वाक्यम्। कारकान्वितक्रियाबोधकशब्दजाते वाक्ये पदाध्याहाराः क्वचित्क्वचित्स्थानं लभन्ते। वाचा ईयते तद्वाक्यम्। एतदभिप्रायेणोच्चारणात्मकसमभिव्याहृतिगोचरता वाक्ये दर्शिता। अथ किं वाक्यं नाम?, संहत्य अर्थमभिदधति पदानि वाक्यम्। 'कदाच नस्तरीरसि'इदमपि वाक्यम्। 'निवेशनः संवेशनः'इदमपि वाक्यम्। **साध्यत्वादीति**। साध्यत्वं कर्मत्वं तद्वाचिका द्वितीया विभक्तिः, आदिना साधनत्वं करणत्वं तद्वाचिका तृतीया विभक्तिः, आदिना साधनत्वं करणत्वं तद्वाचिका तृतीया विभक्तिः। तादृशविभक्त्यभावेऽपि, यत्र पदयोः पदानां समभिव्याहाराः सहोच्चारणं तद्गोचरत्वं वाक्यत्वमत्राऽभिप्रेतम्। अतो नाऽत्राऽव्याप्त्यादिः। अन्यानि चापि निर्वचनानि न खण्डयन्ते, तानि यथा—तिङन्तानां चयः, सुबन्तानां चयः, कारकान्वितक्रियाबोधकं शब्दजातम्, एकतिङ्, तिङ्सुबन्तचयः, आख्यातं सविशेषणम्; प्रयुज्यमानमप्रयुज्यमानं व्याख्यातं, प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं, वा वाक्यमितिनिरुक्तीनां न विरोधः॥ एतत्सर्वम् अपिना सूच्यते। मीमांसायां विचारे समुपयोगिवाक्यत्वप्रयोजकं

**न चाऽऽनर्थक्यम्, अन्यथापि जुह्वाः सिद्धत्वादिति वाच्यम्। जुहूशब्देन तत्साध्याऽपूर्वलक्षणात्।**

**तथा च वाक्यार्थः—पर्णतया अवत्तहविर्धारणद्वारा जुह्वपूर्वं**

---

लक्षणमाह—**वस्तुत इति**। वस्तु—मीमांसकीयप्रामाणिकार्थेषु अन्वित-पदार्थाः, तदभिप्रायात्तु। **शेषशेषिवाचकपदयोरिति**। शेषशेषिवाचकपदयोः शेषशेषिलक्षणयोः सहितमुच्चारणम् आनुपूर्व्यनुक्रमितमुच्चारणम्, सान्निध्ये-नोच्चारणम्, तादृशोच्चारणविषयत्वं वाक्यत्वम्। तद् दृष्टान्तेन समन्व-यति—**यथेति**। येन प्रकारेण सन्निधिक्रमितसहोच्चारणं तेन प्रकारेण। **यस्य पर्णमयीति**। यस्य वाजिनः यज्ञीयतरूणां पिप्पलप्लक्षपलाशादिमयी जुहूर्हवनीः होमसाधनिका भवति स याजी पापं दुरितसंभृतां श्लोकं कीर्ति न शृणोती'ति, अत्र वाक्ये मन्त्रे पर्णतायाः विशेषणरूपायाः जुह्वाः विशेष्य-रूपायाश्च सहोच्चारितत्वादेव 'पर्णमयी जुहूरि'तिवाक्यादेव प्रमाणात्प्रबला-द्विनियोजकात् पर्णताया जुह्वंगत्वं बोध्यते। शंकते—**न च वाच्यमिति**। अन्यथापि—काष्ठान्तरेण जुह्वोः होमसाधनदर्व्याः सिद्धत्वादेव पर्णताया आनर्थक्यं स्यादिति शंका। आनर्थक्यं होमानुपयोगित्वम्, स्वार्थेऽप्रामाण्यम्। सार्थक्यमुत्तरयति—**जुहूशब्देनेति**। जुहूसाध्यं यत् अपूर्वमंगाऽपूर्वं स्वल्पाऽ-पूर्वम्, तत्र लक्षणया प्रवृत्तेरंगीकारात्, पर्णमयीजुहूसाध्याऽपूर्वमित्यज-हल्लक्षणया तत्सार्थक्यात् 'यदि जुहूः पर्णतयैव क्रियते तथैवोपयुज्यते तदैव जुह्वाऽपूर्वं जन्यते तज्जुहूकृतहोमेन तस्यां घृतधारणादिना हवनेन अंगापूर्वमु-पकारकं जन्यते, नान्यथा, इति न पर्णताया वैयर्थ्यम्। फलितमाह—**तथा च वाक्यार्थ इति**। 'यस्य पर्णमयी शृणोती'तिवाक्यस्य ऋचोऽर्थः। **पर्णतयेति**। पर्णत्वेन जुहूः कर्तव्या न तु काष्ठत्वेनेति। **पर्णतया**—पर्णत्वाव-च्छिन्नजुह्वा पर्णतात्मकजुह्वा अवद्यते संस्क्रियते आलोडनादिना भ्राम्यते यद्घृतं हविस्तत्, अवत्तं संस्कृतं संस्कारीकृतं पवित्रमपि पत्रालोडनेन होम-योग्यं कृतं हविर्घृतं, तस्य स्वोदरपुटे पत्रजुहूदरे धारणद्वारा, होमार्थमुद्धृतं सत् हवने विनियुक्तं च सत् यद् घृतं तद्धारणेन जुह्वपूर्वं भावयेत्। फलं साध्यं पापाऽश्रवणम् अपापश्रवणम्, अपापम् अपूर्वं पुण्यमिति। तदेव जुह्वपूर्वम्। **यस्य, सः**—इति यत्तदोः सम्बन्धादेकं वाक्यम् ऋक्। वाक्यार्थस्पष्टीकरणे-नाऽऽनर्थक्यशंकां निवारयति—**एवं चेति**। जुह्वपूर्वभावनायां विनियोगात्। **पर्णतयेति** तृतीया, पर्णत्वेनेति। पर्णतायाः जुह्वंगत्वं वाक्यबलेन। **तत्साध्य-मिति**। पर्णमयीजुहूसाध्यं तदुत्पाद्यम्। अपूर्वं नाम्ना जुह्वपूर्वम्।

भावयेदिति। एवं च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नाऽन्यथेति गम्यते इति न पर्णताया वैयर्थ्यम्।

अवत्तहविर्धारणद्वारेति चाऽऽवश्यं वक्तव्यम्। स्रुवादिष्वपि पर्णतापत्तेः, सेयं पर्णता अनारभ्याऽधीताऽपि सर्वप्रकृतिष्वेवाऽन्वेति न विकृतिषु। तत्र चोदकेनाऽपि तत्प्राप्तिसम्भवात् पौनरुक्त्यापत्तेः।

---

**नाऽन्यथेति**। पर्णताया जुह्वंगत्वं विना। अपूर्वं नोत्पद्यते, अतः पर्णताया जुह्वंगत्वं सार्थकम्। **न वैयर्थ्यम्**, नाऽनर्थक्यम्। अवत्तेत्यादेर्व्यावृत्तिमाह—**अन्यथेत्यादिना**। अन्यथा, वाक्यार्थे अवत्तहविर्धारणद्वारेत्यनुपादाने। स्रुक्स्रुवादिभिराज्यहविर्धारणद्वारा एवोपाक्रियते, एवं सति स्रुक्स्रुवाद्या अपि पर्णतापदग्राह्याः सन्तः प्रकृते जुह्वनंगास्ते जुह्वपूर्वाऽजनकाः स्युरित्यापत्तेः।

ननु तर्हि पर्णताया यागमनारभ्य वाक्यादावेवाऽधीतत्वात् अनारभ्यविधेश्च कर्मारम्भं मन्त्रं विना कथितस्य सामान्यविधित्वात् पर्णतायाः सर्वेषु प्रकृतिविकृतियागेषु समन्वयेन विकृतिष्वप्यन्वयात् पौनरुक्त्यापत्तेरप्रामाण्यं स्यादित्याशंकां निवारयति—**सेयमिति**। 'पर्णमयी जुहूर्भवती'ति यागाऽनारम्भे वाक्यारम्भे एवाऽऽदावधीता सामान्यवाक्ययोगवती भवत्यपि सर्वप्रकृतिष्वेवाऽन्वयाऽर्हा। एवकारेण विकृत्यन्वयो निवार्यते। एवकारव्यावर्त्यं दर्शयति—**न विकृतिष्विति**। पूर्वपदार्थं धर्तुमाह—**तत्रेति**। विकृतिषु। **चोदकेनाऽपीति**। 'प्रकृतिवद्विकृतिः कर्तव्येति' चोदकशब्दिताऽतिदेशवाक्येनाऽपि प्रेरकवाक्येनाऽपि। **तत्प्राप्तिसंभवात्**—पर्णताप्राप्तिसंभवात्। **पौनरुक्त्यापत्तेरिति**। 'प्रकृतौ वाऽद्विरुक्तत्वादि'तिन्यायविरोधः स्यात्। चोदकप्राप्तस्य, अनारभ्याऽधीतस्य, विकृतिषु प्राप्तेः, द्विवारं प्राप्तेः, पुनः प्राप्तिर्वाक्येन स्याच्चेत् पुनरुक्तत्वं दूषणं स्यात्, निरर्थकत्वं स्यात्॥

अथ प्रसंगात् प्रकृतिविकृतिलक्षणे तदीयस्वरूपे च दर्शयति—**यत्र समग्रांगोपदेश इति**। यस्मिन् यागादौ क्रियायां समग्राणामंगानामादितोऽन्तपर्यन्तमनवशेषाणामुपदेशो वर्णनं सा समष्टियागक्रिया **प्रकृतिः**। प्रकृष्टा श्रेष्ठा मूर्धन्या कृतिः सर्वान्वयिनी मातृतुल्या सर्वांऽगिसंस्था सा प्रकृतिः, समग्रांऽगोपदिष्टसंस्थात्वं प्रकृतित्वम्। एकमप्यंगं न्यूनं चेन् अन्यतः प्राप्तं, तर्हि सा न प्रकृतिः, सर्वांऽगित्ववैधुर्यात्। उपदेशः—शब्दैर्निरूपणम्। दृष्टान्तं लक्ष्यं प्रकृतिं दर्शयति—**यथा दर्शपूर्णमासादिः**। दर्शपूर्णमासादियागप्रकरणे दर्शयोगाऽमावास्यातिथिकर्तव्यो यागः। पूर्णमासो यागः पूर्णमास्यामनुष्ठातव्यो यागः : उभयोः कृतदारोऽधिकारी, प्रत्येकं दिनद्वयाऽनुष्ठेयं कर्म, पौर्णमास्यां

यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यथा दर्शपूर्णमासादिः ।

---

प्रातरारम्याऽमावास्यायां च प्रातरारम्य तदुत्तरप्रतिपत्पूर्वाह्णयोः समापनीयम् । वसन्तर्ताविग्न्याधानं पवमानेष्ट्यनुष्ठानं सायमग्निहोत्रारम्भः, ततः प्रतिदिनं सायंप्रातरग्निहोत्राऽनुष्ठानं, पौर्णमास्याम् अन्वारम्भणीयेष्ट्यनुष्ठानम्, पौर्णमासयागः, अनन्तरममावास्यायागः, चत्वारः ऋत्विजः—अध्वर्युः ब्रह्मा होता आग्नीध्रश्च । पौर्णमास्यां त्रीणि प्रधानानि—१. अग्निदेवताकः पुरोडाशद्रव्यको यागः । २. विष्णुप्रजापत्यग्नीषोमाऽन्यतमदेवताकः उपांशुयाजः । ३. अग्निषोमदेवताकः पुरोडाशद्रव्यको यागः । अन्ये तत्प्रकरणपठिता यागहोमाद्यास्तदंगभूताः, प्रधानस्य फलोत्पादनयोग्यताजननार्थमंगानुष्ठानम् ॥ आमावास्यायां त्रीणि प्रधानानि—१. आग्नेयः पुरोडाशयागः, २. ऐन्द्रो दधियागः, ३. ऐन्द्रः पयोयागः । प्रयाजादयोऽगानि त्रितयोद्देशेन सकृदनुष्ठेयानि । यागा तिष्ठता होतव्याः । होमा उपविष्टेन होतव्याः । अंगानि यथासंभवमनुष्ठेयानि । यागे 'वौषट्'उक्त्वा हविप्रक्षेपः, होमे 'स्वाहा' उक्त्वा हविर्दानम् । 'यजति'ना विहितो यागः । 'जुहोति'ना विहितो होमः । दर्शपूर्णमासौ नित्यौ च काम्यौ च । अननुष्ठाने प्रत्यवायान्नित्यत्वम् । फलोद्देशेनाऽनुष्ठानात् काम्यत्वम् । उभौ पर्वसु अनुष्ठेयौ । व्रीहीणां वा यवानां प्रकृतीनां पुरोडाशो द्रव्यम् । अभिलषितं वा स्वर्गं फलम् । पूर्वस्मिन्पर्वणि कर्मारम्भः, पर्वप्रतिपत्सन्धौ प्रधानयागारम्भः । पशुयागप्रकृतिभूताऽग्नीषोमीयपशुयागस्यापि दर्शपूर्णमासौ प्रकृतिभूतौ । अध्वर्युणा यजुर्वेदमन्त्राः, होत्रा ऋग्वेदीयाः, मन्त्रा याज्यापुरोनुवाक्यारूपास्त एवोभयत्र पठनीयाः ॥ इतियागस्वरूपम् ॥

**अनुष्ठानप्रकारः**—यजमानः पौर्णमास्यां प्रातरग्निहोत्रं हुत्वा कुण्डाभ्याम् आहवनीयदक्षिणाऽग्नी निष्कास्य, दर्शपूर्णमासार्थं गार्हपत्याऽग्नेः तावग्नी प्रणीय त्रिष्वग्निषु अन्वाधानं कुर्यात्, कुण्डात् कुण्डान्तरे स्थापनं प्रणयनं कुण्डस्य परिसमूहनं गोमयोपलेपनं प्रागुत्तराऽऽयत—तिसृतिसृ—रेखाकरणम् पांस्वादिदूरीकरणं प्रोक्षणं चेति पञ्चधा कुण्डभूमिसंस्कारकरणम् । अग्निषु काष्ठाद्याधानमन्वाधानम् । यजमानस्य वपनं स्नानं ।कुशदर्भाणां समन्त्रकलवनाऽऽहरणं त्रिपञ्चसप्तनवादिकुशमुष्टिसहितदर्भानयनम् , एकविंशतिसमिदाहरणम् । प्रथमः कुशमुष्टिः प्रस्तरः । पञ्चदशकाष्ठानि सामिधेन्यर्थम् । तिस्रः समिधः परिध्यर्थाः, द्वे आधारसमिधौ, एकाऽनुयाजाऽर्था, एतावत्पौर्णमासीदिनकृत्यम् । रात्रौ अग्निहोत्रम्'वेणुतण्डुलश्यामाक–नीवाराऽ–रण्यगोधूमाऽ–रण्यमर्कटक–कुलत्थाऽन्यतमाऽऽरण्यकधान्यभोजनम् । अग्निगृहे

भूमौ शयनम्, जागरं वा। कृष्णप्रतिपदि प्रातर्नैत्यकस्नानादि अग्निहोत्रं च। उलपतृणैर्वेदिकास्तरणम्, आहवनीयस्य दक्षिणे ब्रह्मयजमानयोरासने। उत्तरस्यां कुशास्तरणं, कुशेषु अधोमुखयज्ञपात्राणां स्थानम्। पात्राणि—स्रुवः, जुहूः, उपभृत्, ध्रुवा, वेदः, पात्री, आज्यस्थाली, प्राशित्रहरणम्, इडापात्रं, प्रणीताप्रणयनम्, इति दश। गार्हपत्याऽग्नेरुत्तरे दर्भेषु—स्फ्यः, कपालान्येकविंशतिः, अग्निहोत्रहवणी, शूर्पं, कृष्णाऽजिनम्, शम्या, उलूखलम्, मुसलं, दृषत्, उपला, इति दश। पात्राणामुत्तरे—योक्त्रं, मदन्ती, मेक्षणम्, वेदाग्राणि, अन्वाहार्यस्थाली, अश्मा, उपवेषः, पिष्टलेपपात्रम्, फलीकरणपात्रम्, इत्येतानि स्थापयेत्।

तत्र यजमान्याः कटिबन्धनं मुञ्जनिर्मितं योक्त्रम्, पिष्टमिश्रणकृत्काष्ठदण्डदर्वी मेक्षणम्, दर्भमुष्टिविशेषो वेदः, तदग्राणि कुशाग्राणि, दक्षिणारूप ओदनः अन्वाहार्यः, पाकार्था अन्वाहार्यस्थाली, पात्र्यां लग्नः पिष्टलेपः, पिष्टलेपपात्रं, सूक्ष्मास्तण्डुलत्वचः फलीकरणानि, तदर्थं पात्रं च। अध्वर्युर्दारवं पात्रं जलपूर्णं दर्भोपरि स्थापयेत्, एतत् अपां प्रणयनम्। शकटस्थव्रीहियवादीनां पात्रे ग्रहणं हविर्निर्वाप उच्यते। पौर्णमास्याम् अग्नयेऽग्नीषोमाभ्यां च निर्वापः, पात्राणि जलेन त्रिः प्रोक्षेत्। कृष्णाऽजिनः सन् हविः उलूखलेऽवहन्यात्, फलीकुर्याच्च, तान् दृषदि उपलया पिष्यात्, पुरोडाशं श्रपयेत्, आग्नेया अष्टौ, अग्नीषोमीया एकादश कपालानि उपदध्यात्, उपरिघृताऽङ्गारैः श्रपणम् उष्णोदकैर्मिश्रीकरणं पिण्डद्वयकरणम् उल्मुकैः प्रतपनं ज्वलद्दर्भैः प्रज्वलनं भस्मनाऽऽच्छादनं तावेव पुरोडाशौ। संयवनपात्री प्रक्षालनजलस्य वेद्या त्रिरेखासु निनयनं, एकतः द्वितः त्रितः क्रमेण देवताः॥

वेदिं निर्मायात्, आग्नीध्रो योक्त्रेण पत्नीं सन्नह्यात्, पत्न्या हस्ते आज्यस्थालीं दद्यात्, अध्वयुर्यजमानो जुह्वां पूरयेत् घृतं चतुर्वारं क्षिपेत्, उपभृति अष्टवारम्, ध्रुवायां चतुर्वारम्, अद्भिः त्रिः प्रोक्ष्य दर्भान् वेदिं प्रोक्षेत्, दक्षिणोत्तरश्रोणिपर्यन्तं सन्ततधारयाऽऽघारं घृतस्रावं कुर्यात्। प्रस्तरं प्रथममुष्टिं यजमानाय दद्यात् स ब्रह्मणे दद्यात्, त्र्यावृतशलाकाभिर्वेदिं स्तृणुयात्। पात्राणि सादयेत्। होता सामिधेनीः पठेत्, अध्वर्युः काष्ठानि आहवनीये निदध्यात्, एकादशर्चः प्रथमामन्तिमां त्रिस्त्रिवारं पठेत्, प्रथमाऽऽघारमाज्यधारां स्रावयेत्, प्रजापतिर्देवता, दक्षिणपादं पूर्वं कृत्वा वेदिमतिलंघ्योदङ्मुखोऽध्वर्युराज्यधारां स्रावयेत् द्वितीयाघारेऽत्र इन्द्रो देवता॥ अथ—

प्रयाजाः यागाः। जुह्वा। आज्यमादद्यात्, अध्वर्युर्होतुरार्षेयं। ब्रूयात्, पञ्चप्रयाजाः—समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकारः,—इतिनामानः। देवता अपि तन्नामानः। पञ्चमस्य स्विष्टकृदाज्यभागप्रयाजाऽनुयाजदेवताः। प्रतिप्रयाजम् आश्रावण-प्रत्याश्रावण-प्रैषवचन-याज्यपाठा भवन्ति। याज्याया अन्ते होमाः। 'आश्रावये' 'अस्तु श्रौषट्' 'यज' 'येयजामहे' इति ततो मन्त्रपाठः याज्यापाठः। त्रीन्प्रयाजान्हुत्वा, चतुर्थश्चनौ प्रयाजात्रिष्ट्वा, पुरोडाशौ अभिघारयेत्, ततोऽग्निदेवतायै सोमदेवतायै आज्यभागं जुहुयात् ॥

प्रधानयागाननुतिष्ठेत्, पुरोडाशं प्रत्यभिघारयेत्, प्रैषं दद्यात्, हविरग्नौ। जुहुयात्, पुरोडाशखण्डमग्नौ प्रक्षिप्याऽऽज्यमवश्च्योतयत्, चतुर्वारमाज्यं दद्यात्, द्वितीयमुपांशुयाजनामकं यागमनुतिष्ठेत्, आज्यं द्रव्यम्, विष्णुः प्रजापतिः अग्नीषोमौ च देवताः। पुरोडाशखण्डमग्नीषोमाभ्यां जुहुयात्, एतावन्तः प्रधानयागाः। यजमानः। 'अग्नये। इदं न मम' इत्युच्चारयेत्, अध्वर्युः पार्वणं होमं जुहुयात्, पूर्णमासो देवता, नारिष्टहोमान् जुहुयात्, स्विष्टकृद्यागः—अध्वर्युर्हुतावशिष्टपुरोडाशभागम् अग्नये स्विष्टकृते जुहुयात् ॥ इडाभक्षणादि—पुरोडाशाद् व्रीहिप्रमाणं भागं ब्रह्मा भक्षयेत्, इडां भागं होता ब्रह्मा अग्नीध्रो यजमानश्च भक्षयेयुः, ततः सर्वे ऋत्विजः स्वस्वभागं भक्षयेयुः॥ ऋत्विग्दक्षिणा अनुयाजाश्च—ऋत्विग्भ्यः अन्वाहार्यमोदनं, प्रैषं दद्यात्, ब्रह्मा तृणसमिधमग्नौ प्रास्येत्। त्रीन् अनुयाजान् जुहुयात्, प्रस्तरमञ्ज्यात्, प्रस्तरमाहवनीये प्रक्षिपेत्, संस्रावहोमं कुर्यात्, ऋत्विजो हविःशेषं भक्षयेयुः॥ पत्नीसंयाजादिकम्—अध्वर्युर्होता आग्नीध्रः आज्येन पत्नीसंयाजाख्यान् होमान् कुर्युः। अध्वर्युर्जुहुयात्, सोमः, त्वष्टा, देवपत्न्यः, राका, सिनीवाली, कुहूः, अग्निर्गृहपतिरिति देवताः, उद्देशत्यागो यजमानेन पत्न्या च कर्तव्यः॥ इडाभक्षणादिः, स्रुवेण सपत्नीयहोमः, पिष्टानि आज्यं पिष्टलेपान्। होमचतुष्टयं कुर्यात्; पत्नी योक्त्रं हस्ताञ्जलौ स्थापयेत् अध्वर्युस्तत्र जलमासिञ्चेत्, तेन स्वमुखं पत्नी संमृज्यात्। इति पत्नीकर्म॥ होता घृतं हुत्वा संस्थाजपमन्त्रेण निःसरेत्। एतावद्धोतुः कर्म॥ होता प्रायश्चित्ताऽऽहुतीर्जुहुयात्। ध्रुवाऽऽज्येन होमत्रयं कुर्यात्, हवींषि आहवनीये प्रक्षिपेत्, कपालानि उद्वासयेत्। इत्याध्वर्यवं कर्म॥ याजमानम्—दक्षिणाद्रव्यं दद्यात्, फलानि कामयेत्, मन्त्रपठनम्, तत्तद्द्रव्यस्य तत्तद्देवताभ्यस्त्यागः, प्रैषाऽनुष्ठानम्, मन्त्रपाठाः, हविर्भक्षणम्, यज्ञविमोकं कुर्यात्, यज्ञं विसृजेत्। इति याजमानं कर्म॥

**तत्प्रकरणे सर्वाङ्गपाठात्। यत्र न सर्वाङ्गोपदेशः सा विकृतिः। यथा सौर्यादिः। तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात्।**

---

मध्ये मध्ये बहुविधान्यनुष्ठानादीनि सन्ति तानि तत्पद्धतिभिः कुर्यात्॥ **इतिपौर्णमासयागः**॥

अथ **दर्शयागे विशेषाः**—१. आग्नेयपौराडाशयागः, २. ऐन्द्रो दधिद्रव्यको यागः, ३. ऐन्द्रः पयोद्रव्यको यागः। दधिदुग्धे सम्मेल्य यागः क्रियते। एकदेवताकं सान्नाय्यद्रव्यं तत्। पूर्णमासप्रकरणेऽनुक्तं सान्नायविषयानुष्ठानमत्रोच्यते—वत्साऽपाकरणम्—अमायां प्रातर्नित्यकर्मोत्तरम् अग्निहोत्रं हुत्वा, अथ अग्नींश्च प्रणीयाऽन्वाधानं कुर्यात्। शाखाहरणं शमीपलाशशाखं चाऽऽहृत्य षड्गोवत्सान् पृथक् संरक्ष्य गाः वनं प्रेषयेत्, शाखाम् अग्न्यगारे रक्षेत्, दर्भानाहरेत्, अपराह्णे पिण्डपितृयज्ञमनुतिष्ठेत्, यजमानः सायमग्निहोत्रं यवाग्वा कुर्यात्, पात्राणि प्रोक्ष्य दोहनकुम्भीं पयःश्रपणकुम्भीं बहिरंगारेषु स्थाप्य त्रिगोदुग्धं कुम्भ्यां श्रपणार्थं निदध्यात्, कवोष्णे दुग्धे दध्यंशं दत्वा शिक्ये स्थापयेत्, एतदातञ्चनमुक्तम्, यजमानः कटे भूमौ शयीत। अमावास्यादिनकृत्यमिदम्। मध्ये मध्येऽन्यत्सर्वं पूर्णमासवत्॥ शुक्लप्रतिपद्दिनकृत्यम्—अध्वर्युः कृतनित्यकर्मा पूर्ववत् वत्सापाकरणं, गोदोहनं, पुरोडाशश्रपणं, दध्नोऽपि दुग्धवत् पर्यग्निकरणम्, दधिपयसोरभिघारणम्, प्रातर्दुग्धीयदध्नाऽभिघार्य इन्द्राय महेन्द्राय आश्रवणप्रत्याश्रवणादि कृत्वा जुहुयात्। सोमयाजिनः सम्वत्सरम् इन्द्रो देवता, तत ऊर्ध्वं महेन्द्रो देवता, द्वयोः द्रव्ययोः सान्नायेन सकृदेव होमः। पार्वणहोमोऽमावास्यादेवताकः। स्विष्टकृद्यागकाले दधिपयसोः सकृत्सकृदवदानम्, इडावदानं दधिपयसोरवदानं सूक्तवाकमन्त्रपठनम्। 'अग्निरिदं हविरजुषत' 'महेन्द्र इदं हविरजुषत' 'इन्द्र इदं हविरजुषत' इति होता प्रयुञ्जीत। प्रस्तरस्याऽग्नौ प्रहरणकाले पलाशशाखया प्रहरणम्। अन्यत्सर्वं पौर्णमासीयवदनुष्ठानम्। इत्यमावास्याऽनुष्ठानविशेषाः॥ इत्यतिसंक्षेपेण दर्शपूर्णमासौ यज्ञौ कथितौ॥

दर्शपूर्णमासयोः सर्वांगाऽन्वितयोः, **तत्प्रकरणे**—दर्शप्रकरणे पूर्णमासप्रकरणे च, तदीयतदीयाऽनुष्ठितिप्रकरणे, यजुर्वेदीयतैत्तिरीयशाखाप्रकरणे, आपस्तम्बीयश्रौतसूत्रे, बौधायनीयसूत्रे, यज्ञपद्धतिषु, कात्यायनसूत्रे, आश्वलायनश्रौतसूत्रे, च तत्र तत्र, प्रकृतिप्रकरणे, सर्वेषामंगानां पाठात्, उपदेशपाठात्॥ विकृतिं दर्शयति—**यत्र नेति**। यस्मिन् यज्ञीयप्रकरणे, यस्य यागस्य सर्वेषामंगानामुपदेशो नास्ति स यागपद्धतिः विकृतिपद्धतिः सम्मतः, असर्वां-

**अनारभ्यविधिः सामान्यविधिः तदिदं वाक्यं प्रकरणादिभ्यो बलवत्,**

---

गोपदिष्टयागत्वं विकृतियागत्वमिति। तदुदाहरति—**यथा सौर्यादिरिति।** 'वैश्वदेवेन यजेते'तिश्रुतौ वैश्वदेवेति कर्मनामधेयम्। चातुर्मास्ये चत्वारि पर्वाणि—वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयश्चेति। तेषु शुनासीरीये पर्वणि दश यागा विहिताः—१. आग्नेयमष्टाकपालं निर्वपति। २. सोम्यं चरुम्। ३. सावित्रं द्वादशकपालम्। ४. सारस्वतं चरुम्। ५. पौष्णं चरुम्। ६. ऐन्द्राग्नः पुरोडाशः। ७. वैश्वदेवीयं चरुम्। ८. शुनासीरीयं पयः। ९. वायव्यं श्वेतद्रव्यम्। १०. सौर्यं चरुं, निर्वपेत्। शुनः इन्द्रः, सीरो वायुः। तत्र तेषां नवानां यागानां सन्निधौ 'वैश्वदेवेन यजेते'त्याम्नातम्। 'सौर्यं चरुं निर्वपेत्' इतिसूर्यदेवताकचरुद्रव्यकनिर्वपनव्यापारे सौरयागे सौरीययागस्य कतिपयानामंगानां त्वतिदेशवाक्येभ्यः श्रुतिभ्यः अग्निमन्थनम् अग्निप्रणयनम् अग्न्यन्वाधानं द्रव्यादानं चरुनिष्पादनं हवनादि प्राप्तमनुष्ठातव्यं भवति, न तु 'सौर्यं चरुमि'त्यत्र सर्वांगोपदेशोऽस्ति, अतः सौर्ययजनकर्म विकृतिः॥ **सौर्यादि**रित्यादिना 'सौर्यं चरुम्' 'सावित्रं द्वादशकपालमि'त्याद्या यागा ग्राह्याः। तत्र तत्र समग्रांऽगोपदेशाऽभावात् तानि यागकर्माणि विकृतयो यागांगानि अन्याऽन्यमन्त्राऽतिदेशैर्वाक्यैः प्राप्तत्वादेव विकृतयो भवन्ति। सौर्ययागस्य आरम्भं प्रथमतः सर्वकाण्डाऽनुष्ठानादिकमप्रदर्श्य अनारभ्य मध्यत एव 'सौर्यं चरुमि'तिमात्रस्य सामान्यविधेर्निर्दिष्टत्वात्, अनारभ्यो विधिः अनारम्भविधानं सामान्यविधानम् अतिदेशवाक्यदर्शितांगसाकांक्षं विकृतिकर्मैव भवति, न तु प्रकृतिः, स्वांगनैराकांक्ष्याऽभावात्। एतदाह—**अनारभ्यविधिरिति।** यो ह्यनारभ्यविधिः सः सामान्यविधिरेव भवति, सामान्यविधेश्च सर्वांगव्यूहेऽनुष्ठानादौ अल्पत्वात् तस्य विशेषणाऽतिदेशादिनोपसंहारो भवति। दर्शितो हि—**अनारभ्यविधिः सामान्यविधिः**—सामिधेन्यृक्प्रकरणप्रसंगेन। तथा हि—देवतानां द्रव्याणि समिधः, अग्न्यर्थं पवित्रकाष्ठादीनि। समिधः, तन्मन्त्राः सामिधेन्यः ऋचः, होत्रा सामिधेनीनामृचां पाठे क्रियमाणेऽध्वर्युरिध्मकाष्ठान्याहवनीये निदध्यात्। तत्र ब्राह्मणप्रकरणे सामिधेनीसंज्ञकाः ऋचः एकादशाऽऽम्नाताः, तासां प्रथमाया अन्तिमायाश्च त्रिभिरावृत्त्या पञ्चदश सम्पादनीयाः, अन्तिमऋक्पाठे सति समिधो दत्वा वेदेनाऽग्निं त्रिर्वीजयित्वा प्रज्वलय्य स्रुवेण ध्रुवात् आज्यभागमादाय वेदेनोपयम्याऽध्वर्युरासीन एवाऽक्षुण्णामाज्यधारामग्नेरूर्ध्वां वायव्यकोणादारभ्याऽऽग्नेयकोणपर्यन्तां स्रावयेत्, अयं प्रथयाऽऽघारः, तत्र प्रजापतिर्देवता तां मनसा ध्यायेत्। एवं निर्ऋतिकोणादारभ्येशानकोणपर्यन्तायाज्यधारां स्रावयेत्। अयं

द्वितीयाऽऽधारः। तत्रेन्द्रो देवता। प्रजापतिदेवताकसामिधेनीकर्म मानस-मन्त्रस्मरणेन कर्तव्यम् ॥ किञ्च—

अनारभ्य श्रूयते—'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा' (१।८।१०।१५) इत्यत्र 'यदाहवनीये जुह्वति तेन सोऽस्याऽभीष्टः प्रीतः'। ज्योतिष्टोमे श्रूयते—'पदे जुहोति, वर्त्मनि जुहोति'। राजसूये श्रूयते—'वल्मीकवपाया-मुत्सृज्य जुहोति'। इति तत्राऽनारभ्यवादे। तथाऽन्यत्र श्रूयते 'गार्हपत्ये पत्नीसंयाजाञ्जुहोति'इति। तत्र—अनारभ्यवादे होमसामान्यमनूद्याऽऽहवनीयो विहितः। प्रकरणनियमितैः पदादिवाक्यैस्तदनुबद्धा होमा विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितः। तत्र होमसामान्य-स्याऽनुवादकं यच्छास्त्रं तत्सामान्ये मुख्यत्वात् होमविशेषानुवादे लाक्ष-णिकतया दुर्बलम्। विशेषशास्त्रे तु व्यावृत्त्या विधायकत्वात् प्रबलम्। प्रकरणनियमितत्वेन विशिष्टविधायकस्य सामान्याऽनुवादकत्वाऽयोगात्, प्रबलेन विशेषेण सामान्यं बाध्यते।

किञ्च—अनारभ्याऽऽम्नायते—( १।८।१०।१७ ) 'सप्तदशसामिधेनीरनु-ब्रूयात्'। तथा वैमृधेऽध्वरकल्पायां, पशौ चातुर्मास्येषु, मित्रविन्दायाम् आग्रयणेष्ट्यादौ, च पुनः साप्तदश्यं विहितम्। तत्र वैमृधादौ सामिधेन्यश्चो-दकप्राप्ताः, ता अनूद्य साप्तदश्यं विधीयते, तच्च वैमृधादिप्रकरणेषु आम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम्। अनारभ्यवादेन तु सर्वासु विकृतिषु। तत्राऽनारभ्यवादो विलम्बते। प्रथमं विधेयस्य साप्तदशस्य सामिधेनीसम्बन्धमवबोध्य, अन्यथाऽनुपपत्त्या क्रतुप्रवेशं परिकल्प्य, प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियते—इतिविलम्बः। प्राकरणिकैर्विधिभिः सामिधेनीसम्बन्ध एव बोध्यः। क्रतौ तद्विशेषे च प्रवेशो न कल्प्यः, प्रत्यक्षप्रकरणपाठेनैव तत्सिद्धेः। ततः साप्तदश्यस्य वैमृधादि-विकृतिविशेषसम्बन्धे सहसा प्रतिपन्ने सति तद्विरोधात् सम्बन्धो न कल्पयितुं शक्यः। अनारभ्यवादस्तु वैमृधादिषु प्राप्तस्य नित्याऽनुवादोऽस्तु। यद्वा—प्राकरणिकविधिर्वैमृध्यादिषु साप्तदश्यप्रापकः, अनारभ्यवादस्तु प्राप्तस्य पाञ्चदश्यस्य बाधकः॥ सर्वथाऽपि चतुर्धाकरणवदुपसंहारवचनत्वान्नाऽऽज्य-भागवत् अपूर्वं कर्म ॥ किञ्च—

अनारभ्य श्रूयते ( १।८।१०।२० ) 'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते'। दर्विहोमविशेषे श्रूयते—'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा' तत्र पूर्वं 'दत्त'मित्यर्थे स्वाहाकारः, पुरस्तात् स्वाहाकारा अन्ये देवाः, उपरिष्टात्स्वाहाकारा अन्ये देवाः, तत्र 'पृथिव्यै स्वाहा'इत्यैव नियम्यते।

**अत एव—'इन्द्राग्नी इदं हविः' इत्यादेरेकवाक्यत्वाद् दर्शाङ्गत्वं, न तु प्रकरणाद् दर्शपूर्णमासाऽङ्गत्वम् ।**

---

होमान्तरेषु चाऽनारभ्य विहितयोर्वषट्कारस्वाहाकारयोर्विकल्प इति सुस्थिर इति । अविधित्वविधित्वयोरुपसंहाराऽभावात् ।।

एकदा वाङ्मनसोर्देवेभ्योहव्यहवनविषये स्वस्वाऽऽग्रहः समजनि, ते । देवते निर्णयाय प्रजापतिमगच्छताम्, प्रजापतिर्निर्णयमकरोत्—**मनसा** चिन्तितं वाचा प्रोच्यते, अतो मनः श्रेष्ठम्, मनसो दूतीवाक्, एतच्छ्रुत्वा क्रुद्धा वागशपत्—'हे प्रजापते ! मद्विरुद्धनिर्णेतारं त्वां वाचा मन्त्रमुच्चार्य मा जुहोतु' इति । अतो मन्त्रोच्चारणं विना प्रजापतये जुह्वति'इतिश्रुतिः ( तै० सं० २।५।११।४ ) ।। तत् इन्द्रदेवताकाऽऽधारे तु प्रयाजादायाश्रावणं **'समिधो यज'** इत्याद्याः पाठाः, होमाः ऋक्पाठाः, 'अग्नये इदं नमम' इत्याद्युच्चारणसहिता होमा नाराशंसहोमाः स्विष्टकृद्धोमाश्चानुष्ठेया भवन्ति । सामिधेनीत्वाऽधिकरणेऽपि ( १०।६।१६।७२,७५ ) शाबरभाष्यं **'मनोर्ऋचः** सामिधेन्यो भवन्ति' ताः सर्वाः सामिधेनीषु विनियोक्तव्या उत काश्चिदेव ? । लिंगस्य 'मनोः' मनुशब्दस्य सम्बन्धेन सर्वा उपादेया इति पूर्वपक्षः । सिद्धान्तस्तु—यावदर्था उपादेयाः, कार्यमल्पाभिः सिद्ध्यतीति प्रयोजनाऽऽभावान्न सर्वोपादानम् । अग्निसमिन्धनम् आसां कार्यम्, तच्च पञ्चदशभिः सिद्धम्, स्वार्थाऽऽवश्यकताऽवगमकात्मकचोदकवाक्यवशात् पञ्चदशैवोपादेयाः ।।

सामिधेन्यृचां साप्तदश्यमपि अनारभ्याऽधीतं न आरब्धुं योग्यं न वाचा स्पष्टं कर्तुं योग्यं यत् एतादृशो विधिः अस्पष्टविधिः, अस्पष्टवचनात् 'मनोर्ऋचः सामिधेन्यो भवन्ती'ति विशेषाऽश्रवणात् ऋचो यावत्यो मनुसम्बन्धिन्यः ऋक्संहितायाम् आम्नातास्ताः सर्वाः सामिधेन्यः, तासां न प्रकृतिषु गमनम्, प्रकृतिगमनस्य प्रकृतियागानां सामिधेन्यृक्पांचदशाऽवरोधात् । नाऽपि विकृतिमात्रे तद्गमनं, तत्र सार्थकचोदकवाक्यप्राप्तपाञ्चदश्यबाधप्रसंगात् । किन्तु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिष्वेव विकृतिषु तस्य साप्तदश्यस्य गमनं भवति, अनारभ्याऽधीतस्यैव साप्तदश्यस्य मित्रविन्दादिप्रकरणस्थवाक्येनोपसंहारात्, सामान्यप्राप्तस्य विधेर्विशेषे नियमनात् । साप्तदश्यस्याऽनारभ्यविधिः—अस्पष्टविधिः, सः **सामान्यविधिः,** मित्रविन्दादिप्रकरणस्थो विशेषविधिः, तेन विशेष्य कृतार्थत्वात् अधिकाऽकृतार्था व्यावर्त्यन्ते न तु बाध्यन्ते; लिङ्गमनुगृह्यते, तस्माद्

यावदर्थपाश्वदश्योपादानं न सर्वासाम् । सामान्यविधिर्लिंगविधिरपि विशेषवाक्यविधिना चोदकेन प्रमाणेन नियम्यते न तु बाध्यते किन्त्वनुगृह्यते ।।

"तथापि लिंगमनुगृहीतमेव न तु बाधितम् , सोऽयं विशेष उच्यमानो यावत्य उपन्यस्ता मनोऋचः इति ता एव विशेष्य कृतार्थत्वाद् व्यावर्त्यन्ते, नाऽपरा अपि तल्लिगाः प्रसज्यन्ते, तस्माल्लिगवतीनां नियतानामुपादानं न सर्वासाम् , न च लिंगवतीनां भावात् गुणानुरोधेन प्रधानाऽऽवृत्तिन्य्याय्या, एवं च लाघवं प्रयोगप्राशुभावश्च भविष्यतीति । अपि चाऽस्मिन्पक्षे लिङ्गमपि समर्थमेव । कथम् , लिंगं हि लक्षणत्वेन सामिधेनीनामुच्यते, तत्र यद्यपि न तल्लिगाः, तथापि लिंगमनुगृहीतमेव, न बाधितमेव, तस्माद् यावदर्थमुपादानं न सर्वासामिति" इति शाबरभाष्यम् । 'यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम्' ( १०।६।१६।७४ ) इति सिद्धान्तः ।।

वाक्यं प्रकरणस्थानादिभ्यः प्रबलम् , अतः **'इन्द्राग्नी इदं हविरजुषेताम्'** तत्र अमावास्यायां प्रथमम् इन्द्राऽग्निभ्यां हविर्निर्वापः, इन्द्र इदं हविरजुषत, अग्निरिदं हविरजुषत' इति मन्त्राः । एतेषां दर्शवाक्यत्वात् **दर्शांगत्वम्, न तु** दर्शपूर्णमासयोः **प्रकरणात्** दर्शपूर्णमासोभयांऽगत्वमिति सदृष्टान्तं वाक्यबलवत्त्वं दर्शयति—**तदिदं वाक्यमिति** "अग्नीषोमाविदं हविरजुषेताम् अवीवृधेतां महोज्यायोऽक्राताम् , इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्" इति सूक्तवाके श्रूयते, तत्र पौर्णमास्यां कृत्स्नः सूक्तवाकः प्रयोक्तव्यः, कृत्स्नोऽमावास्यायाम् , उत यथासामर्थ्यं निष्कृष्य यथायथं प्रयोग इति ? । तदुच्यते पूर्वपक्षः—कृत्स्नो हि मन्त्रः सूक्तवाकः, सः पदेनाऽपि विना सूक्तवाको न स्यात् , उभयत्र कृत्स्नः सूक्तवाको वदितव्यः ।। अत्र सिद्धान्तः—ये पौर्णमासीदेवतावाचिनः शब्दास्ते पौर्णमास्यां प्रयोक्तव्याः, नाऽमावास्यायाम् , येऽमावास्यादेवताशब्दास्तेऽमावास्यायां, न पौर्णमास्याम् । शेषभूतमर्थं संस्कुर्वन्तो मन्त्रा उपकुर्वन्ति नाऽन्यथा, तस्माद् ये यत्रोपकुर्वन्ति ते तत्र प्रयोक्तव्या इति न कृत्स्नः पौर्णमास्यां न कृत्स्नः सूक्तवाकोऽमावास्यायां चेति' शाबरभाष्यम् ( ३।२।६।१६,१७ ) 'कृत्स्नोपदेशादुभयत्र सर्ववचनम्' ( १६ पूर्वपक्षः ) 'यथार्थं वा शेषभूतसंस्कारात्' ( १७ सिद्धान्तः ) इति ।। तत्र 'इदं हविरजुषेतामि'त्यादिपदमवशिष्टं, तत्राऽग्नीषोममन्त्रगतम् इन्द्राऽग्निमन्त्रगतं पदम् अमावास्यायाम् अग्नीषोमपदपरित्यागेन पौर्णमास्याम इन्द्राग्निपदपरित्यागेन स्वस्वपदं पठनीयम् । तेन तेषां मन्त्रभागानां सर्वशेषत्वबोधको दर्शपूर्णमासप्रकरणपाठोऽनुगृहीतो भवति । परन्तु—नहि एतदेकं वाक्यं यः कृत्स्नः सूक्तवाकः, बहून्येतानि वाक्यानि येषां

उभयाऽऽकांक्षा प्रकरणम्। यथा प्रयाजादिषु 'समिधो यजती'-त्यादिवाक्ये फलविशेषस्याऽनिर्देशात् समिद्यागेन भावयेदिति बोधाऽ-

---

देवताऽभिधायीनि पदानि मध्ये, साधारणानि तन्त्रपदानि पुरस्तादुच्चार्यन्ते तथा परस्तात्'''यथा 'अग्निरिदं हविरजुषतावीवृधतमहोज्यायोऽकृत, अग्नीषोमाविदं हविरजुषेतामवीवृधेतामि'त्येवमादीनि, तेषां पुरस्तात् तन्त्रं 'द्यावापृथिवी'ति, परस्तात् तन्त्रम् 'अस्यामृधेदि'ति। तान्येतानि सर्वाणि सूक्तवचनेन सूक्तवाकशब्दं लभन्ते, अपि तु नहि च तेषां समुदायः कश्चिदर्थं वदति। तस्मान्न समुदायः सूक्तवाकः। ततः अग्नीषोममन्त्रशेषस्य इदं हविरित्यादिरूपस्य इन्द्राऽग्निपदाऽन्वयाऽश्रवणात्, प्रकरणेन प्रथमं तदन्वयरूपं वाक्यम् 'अग्निषोमाभ्यामिन्द्राऽग्निभ्यां चेदं हवि'रिति 'इन्द्राग्निभ्यामग्नीषोमाभ्यां चेदं हवि'रित्यादिरूपं वाक्यं कल्पनीयम्, तेन च वाक्येन प्रत्येकेन इन्द्राग्निप्रकाशनरूपसामर्थ्यम् अग्निषोमप्रकाशनरूपसामर्थ्यं लिंगं शब्दसामर्थ्यं रूढिशक्तिरूपं लिंगं कल्पनीयम्, तच्च लिंगं प्रत्येकं मन्त्रभागेनाऽनेन काचित्क्रियाऽनुष्ठेयेति विनियोजिकां तृतीयां श्रुतिं कल्पयेत्, ततः प्रकरणविनियोगयोर्मध्ये उक्तैस्त्रिभिर्व्यवधानं भवेत्, तदन्यतमस्य द्वाभ्यां व्यवधानं भवेत्, अग्नीषोमपदाऽन्वयरूपं वाक्यं तु श्रूयमाणत्वात् श्रुतिभ्यां व्यवधीयते। एवमिन्द्राग्निमन्त्रशेषस्याऽप्यग्निषोमपदाऽन्वयाऽश्रवणात् अन्वयवाक्यं लिंगं काचित्क्रियानियोजिकां तृतीयां श्रुतिं कल्पयेत्, तत्रापि त्रिभिर्व्यवधानं स्यात्, इन्द्राग्निपदान्वयरूपं वाक्यं तु श्रूयमाणत्वात् लिंगश्रुतिभ्यां व्यवधीयते। तथाच स्वस्माद् दुर्बलस्य प्रकरणस्य बाधितत्वात् तत्तन्मन्त्रशेषस्तत्र तत्रैव व्यवतिष्ठते। अतः **'इन्द्राग्नी इदं हवि'**रित्यादेर्वाक्यजातस्यैकवाक्यत्वात् दर्शाऽगत्वम्, न तु इति। दर्शपूर्णमासीयकृत्स्नप्रकरणात् निर्बलप्रमाणात् दर्शपूर्णमासाऽङ्गत्वम्॥

प्रकरणं लक्षयति—**उभयाऽऽकांक्षेति**। किंकथमितिपरस्परमुभयाऽऽकांक्षात्वं प्रकरणत्वम्। 'अस्य किमुपकार्यम्, कथं च प्रधानस्योपकारक'-मित्युभयाकांक्षा प्रयाजादौ, शाब्दबोधकारणीभूता त्वाकांक्षा—उत्तरपदे पूर्वपदवत्त्वम्, एषा तु साधने साध्यस्य साध्ये साधनस्य चेति, तयोरितिकर्तव्यतायाम्, इतिकर्तव्यतायाश्च तयोरिति साऽऽकांक्षा प्रकरणम्। घटपटावित्युभयं तु नाऽऽकांक्षा। दृष्टान्ते समन्वयमाह—**यथेति**। प्रयाजाऽनुयाजादौ महायागान्तर्गतयागादौ, दर्शपूर्णमासान्तर्गतेषु प्रयाजेषु, समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकारः, इति पञ्चप्रयाजानां नामानि, देवता

नन्तरं किमित्युपकार्याऽऽकांक्षा,। दर्शपूर्णमासवाक्येऽपि 'दर्शपूर्णमासाभ्यां स्वर्गं भावये'दिति बोधानन्तरं कथमित्युपकारकाऽऽकांक्षा। इत्थं चोभयाऽऽकांक्षया प्रयाजादीनां दर्शपूर्णमासांगत्वम्।

तच्च प्रकरणं द्विविधम्। महाप्रकरणमवान्तरप्रकरणं चेति। तत्र मुख्यभावनासम्बन्धिप्रकरणं महाप्रकरणम्। तेन च प्रयाजादीनां दर्श-

---

अपि ता एव चतुर्णाम्, पञ्चमस्य परं तेषु तेषु कर्मसु वक्ष्यमाणाः प्रधानदेवताः स्विष्टकृदयाज्यभागप्रयाजाऽनुयाजदेवता एव। त्रयोऽनुयाजाः, देवं बर्हिः, देवो नराशंसः, देवोऽग्निः स्विष्टकृत्, एते यागाश्च देवाश्चैकनामानः॥ पत्नीसंयाजाः—होमाः, तत्र सोमः, त्वष्टा, देवपत्न्यः, राका, सिनीवाली, कुहूः, अग्निर्गृहपतिरिति देवताः। तत्र अनुमन्त्रणमन्त्राः—'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्, सोमस्याऽहं देवयज्यया पशुमान् भूयासम्', इत्याद्या उच्यन्ते। तत्र विधिः—**'समिधो यजति'** इतिविधानं सकृत्प्रवृत्तं, सकृदेवाऽनुष्ठानं, तत्र 'समिद्यागेन भावयेदि'तिबोधोत्तरम्, साध्यस्य फलस्याऽकथनात् किं फलं भावयेदिति उपकार्यस्य प्रयाजादेः फलस्य आकांक्षा जायते, एवं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'तिवाक्येन **'दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति'**बोधोत्तरं कथं भावयेदिति कथंकारात्मिका इतिकर्तव्या उपकारकाऽऽकांक्षा जायते, उपकारकाणि अंगानि प्रयाजाद्या आकांक्ष्यन्ते। उपकार्योपकारकाऽऽकांक्षावन्तः प्रयाजाद्या दर्शपूर्णमासयोरंगत्वं प्रकरणेन आकांक्षाप्रमाणेन निश्चीयते॥

प्रकरणद्वैविध्यमाह—**तच्च प्रकरणं द्विविधमिति**। महाऽऽकांक्षात्मकं महाप्रकरणम्, अवान्तराकांक्षात्मकम् अवान्तरप्रकरणम्। **तत्र**—तयोर्मध्ये। **मुख्येति**। मुख्याऽन्तिमा सर्वप्रेरिका या फलभावना, तन्महाफलभावनासम्बन्धिप्रकरणम्। सम्बन्धो व्याप्तिः सर्वविधाऽऽकांक्षाणां व्याप्तिर्विषयताख्या परस्पराऽन्वयित्वरूपा शाब्दीभावनया शाब्दीव्याप्तिः, फलसम्बन्धव्याप्तिः उपकार्योपकारकरूपा तत्तदविनाभूतेति। आकांक्षा न स्वयं प्रमाणं किन्तु साकांक्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः 'नूनमिदं वाक्यं केनचिद्वाक्येनैकवाक्यभूतम्, ततश्चाऽऽकांक्षाप्रकरणम् वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम्, यावत्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावत् वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवति बलीयस्त्वात्। समिधो यजतीत्यत्र इष्टविशेषस्याऽनिर्देशात् समिद्यागेन भावयेत् किमित्युपकार्याकांक्षा, दर्शपूर्णमासाभ्यां स्वर्गं कथं भावयेदित्युपकारकाऽऽकांक्षा,

**पूर्णमासाङ्गत्वम् । एतच्च प्रकृतावेव उभयाकांक्षायाः सम्भवात् । न तु विकृतौ । तत्र प्रकृतिवद्विकृतिः कर्तव्ये'त्यतिदेशेन कथंभावाकांक्षाया उपशमेन अपूर्वाऽगानामप्युभयाऽऽकांक्षया विनियोगाऽसम्भवात् । तस्मादपूर्वाऽगानां स्थानादेव विकृत्यर्थत्वमिति ।**

---

उभयाऽऽकांक्षया **प्रयाजादीनां दर्शपूर्णमासांऽगत्वम्**, अन्यतराऽऽकांक्षातः उभयाकांक्षा बलीयसी, प्रकरणं क्रियाया विनियोजकं न तु द्रव्यगुणयोः, तयोस्तु क्रियायोगाद्विनियोजकम्, **कथंभावाकांक्षा**—करणगतप्रकाराकांक्षा, यमुनः प्रकारवाचित्वम्, सामान्यस्य भेदको विशेषः प्रकारः, सामान्यं च क्रियारूपम् आख्यातवाच्यं भावना, यागेन तथा कर्तव्यं यथा स्वर्गो भवति, क्रियासामान्यस्य विशेषः क्रियैव भवति, करणगतक्रियाविशेषाकांक्षाऽपरनामधेयकथंभावाकांक्षायां क्रियाऽन्वेति । करणगतः क्रियाविशेषोऽग्न्यन्वाधानादिविप्रतर्पणान्तक्रियात्मकः प्रकरणेन ग्राह्यः, क्रियायाः करणगतत्वं करणोपकारकत्वं, तेन विना यागेनाऽपूर्वाऽजनकात्, कथंभावाऽऽकांक्षायां क्रियैवाऽन्वेतीति । क्रियाया एवेतिकर्तव्यताकत्वम्, प्रकरणं क्रियाया विनियोजकम् । फलभावनायाः महाप्रकरणं प्रयाजादिग्राहकं समग्रांऽगोपदेशात्मकदर्शपूर्णमासात्मकप्रकृतावेव तत्, उभयाकांक्षारूपप्रकरणमेतत् । समग्रांऽगोपदेशरहितायां सौर्यादिविकृतौ न प्रकरणं संभवति, तत्र पठिताऽपूर्वांऽगोपहोमादीनां न प्रकरणं विनियोजकम् । तेषु प्रधानस्य कथंभावाकांक्षा नास्ति, प्राकृतैरंगैर्निराकांक्षत्वात् । किंकथंभावाऽऽकांक्षयोः प्रकृतावेव संभवात्, विकृतावुभयाकांक्षाया असंभवात् । **एतच्चेति** । महाप्रकरणं तु **प्रकृतावेव** संभवात्, **न तु विकृतौ**—विकृतावुभयाकांक्षाऽसंभवात् । **तत्र**—विकृतौ तु, **'प्रकृतिवद्विकृतिः कर्तव्येति'** यथा प्रकृतौ कृतं तद्विकृतौ कर्तव्यमिति प्रकृतिषु विहिता विकृतिषु अतिदिश्यन्ते—इत्यतिदेशेन, अतिदेशवाक्यप्राप्तप्राकृतांऽगजातेन, **कथंभावाकांक्षायाः**—इतिकर्तव्यताकांक्षायाः, **उपशमेन**नैराकांक्ष्येण, सौर्यादिविकृतिकृतयागस्य अतिदेशवाक्यप्राप्तप्रकृतौ प्रयाजादावेव नैराकांक्ष्येण नाऽपूर्वांगानामुपहोमादीनाम् उभयाकांक्षया विकृतौ विनियोगः संभवति । अतिदिष्टानां प्रकृतौ क्लृप्तोपकारकत्वेन तदाकांक्षोपशमसामर्थ्यवत्त्वम् । प्राकृतांऽगानामुपमानप्रमाणेनोपस्थितत्वात् । अपूर्वार्थं यान्यंगानि उपहोमादीनि तेषामंगानां न उभयाऽऽकांक्षया उपकार्योपकारकाकांक्षया विनियोगः, विकृतौ विनियोगस्याऽसंभवात् । 'सौर्यं चरुम्' 'आग्नेयमष्टाकपालम्'इति सर्वत्र सौर्यवाक्यसदृशमाग्नेय-

**अङ्गभावनासम्बन्धिप्रकरणमवान्तरप्रकरणम्, तेन चाऽभिक्रमणादीनां प्रयाजाद्यंगत्वम् ।**

**तच्च संदंशेनैव ज्ञायते । तदभावे चाऽविशेषात् । सर्वेषां फलभावनाकथंभावेन ग्रहणप्रसंगेन प्रधानांऽगत्वापत्तेः ।**

---

वाक्यमित्युपमानेन, सौर्यवाक्यस्य औषधद्रव्यत्वस्य एकदेवत्यत्वस्य च साहश्येन आग्नेयवाक्ये उपमितेऽर्थे च ज्ञाते त्र्यंशभावनारूपे तत्र इतिकर्तव्यताऽऽकांक्षायां प्राकृतोपकारपृष्ठभावेन आग्नेयेतिकर्तव्यतामतिदिश्य सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदिति सिद्धयति । **तस्मात्**—'सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयादिवदितिसिद्धयति । तस्मादाग्नेयेतिकर्तव्यतयैव विकृत्याकांक्षोपशमने सौर्यादौ विकृतावुभयाकांक्षारूपप्रकरणाऽभावात् स्थानादेव उपहोमादीनाम् अपूर्वोत्पादकानामपूर्वांऽगानां विकृतिशेषत्वमिति निगमयति—**तस्मादिति** । अपूर्वांऽगानामुभयाकांक्षया त्रिनियोगाऽसंभवादेव हेतोः । अपूर्वोत्पादकानाम् अंगानाम्, **स्थानादेव** प्रमाणात् विकृत्यर्थत्वम्; विकृतिशेषत्वं विकृत्यंगत्वमिति ॥

अवान्तरप्रकरणं लक्षयति—**अंगभावनेति** । फलभावनाया अन्तराले यदंगभावनायाः सम्बन्धवत् प्रकरणं तदवान्तरप्रकरणम्, सम्बन्धो विषयताख्यः, उपकार्योपकारकाऽऽकांक्षागोचरः, तच्चाऽवान्तरप्रकरणम्—**अभिक्रमणादीनि**—'समानयत उपभृतः' । उपभृतः—त्वक्तोबिला मूलदण्डा हंसमुखसदृशैकप्रणालिकोपेताः प्रादेशाऽर्धपुष्कराः प्रादेशाऽर्धखाता अश्वत्थकाष्ठनिर्मिता हवनदर्व्यः । एवं स्रुवः, स्फ्यः, जुहूः, ध्रुवा, अग्निहोत्रहवणी, उलूखलं, मुसलम्, कूर्चः, इडापात्री, पुरोडाशपात्री, शम्या, उपवेषः, प्राशित्रहरणम्, शूर्पम्, चमसः, योक्त्रम्, मदन्तीपात्रं, मेक्षणम्, अन्वाहार्यस्थाली, पिष्टलेपपात्रं, फलीकरणपात्रं, शकटः, कपालानि, इध्मकाष्ठानि, कुशाः, आसनानि, व्रीहियवाः, आज्यम्, यवागूः, कृष्णाजिनम्, कुम्भी, दोहनपात्रं, अभिधानीं, निदानरज्जुः, पिधानपात्रं, शिक्यं, यज्ञीयपात्रं, पलाशशाखा, उदकं, समिधः, इत्येवमादीनि मध्ये मध्येऽपेक्षितानि भिन्नभिन्नाऽनुष्ठानोपयुक्तानि साधनानि यागोपकरणादीनि अपेक्ष्यन्ते, यथायोग्यं तत्र तत्र 'समानयते'त्यादिप्रयोगा अभिक्रम्यन्ते तत्र प्रयाजानुवादेन यानि कानिचिदंगानि विधाय विधीयन्ते तानि अभिक्रमणानि विधानानि । एवं पश्चादपि प्रयाजानुवादेन 'यो वै प्रयाजानां मिथुनं वेदे'त्यादिना किञ्चिदंगं विधीयते, अतः प्रयाजांऽगमध्ये पठितम् अभिक्रमणमपि प्रयाजांगं

एकांगाऽनुवादेन विधीयमानयोरंगयोरन्तराले विहितत्वं संदंशः। यथाऽभिक्रमणे। तद्धि—'समानयते जुह्वाम् उपभृतस्तेजो वा' इत्यादिना प्रयाजानुवादेन किञ्चिदंगं विधाय विधीयते—'यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान् नुदंतेऽभिक्रामं जुहोत्यभिजित्यै' इति।

---

भवति, तत्कथंभावाऽऽकांक्षाया अशान्तेः, भावनासाम्येन सर्वेषु कथंभावाकांक्षाणां सत्त्वात्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो न जानाति प्रयाजैरपूर्वं कर्तुं तस्याऽस्त्येव कथंभावाकांक्षा—कथमेभिरपूर्वं कर्तव्यमिति। सा च **संदंश**पतितैर्वाचनिकैः स्मार्तै**रभिक्रमणैः**—वाचनिकाद्यैराचमनादिभिः शाम्यति। यत्रांऽगेषु **संदंशस्य** आकांक्षानिवर्तकस्याऽभावस्तत्र त्वाकांक्षा स्वस्य निष्पादनेनैव शाम्यति। तस्मात् अभिक्रमणादीनि वाचनिकानि **प्रयाजाद्यंगानि** युक्तान्येव। **तेन**—अवान्तरप्रकरणेन, अभिक्रमादीनां वाचनिकानां स्मार्तानां वा वाक्यानामपि प्रयाजाद्यंगत्वविधानमुपपद्यते। **तच्चेति**। तदंगत्वं **संदंशेन** न्यायेन ज्ञायते, नाऽन्येनेति। संदंशो लोहकण्टकविद्धलोहशलाकाद्वयपाशरूपः सावकाशमुखश्छिपीटकस्तेन, तत्समानशाब्दियन्त्रेण, न्यायेन युक्त्या वैदिकैरंगीकृतेन विहितेन ज्ञायते ज्ञातुं शक्यते, उक्तः संदंशः—एकांगस्य प्रयाजरूपस्याऽनुवादेन विधीयमानयोरन्ययोः प्रयाजांगयोरन्तराले विहितत्वम्। एकांगविधाने एकांगांऽगयोर्विधानम्। **ज्ञायते**—अंगांगतयाऽन्तराले बोध्यते येन सः संदंशः। तदभावे—संदंशयन्त्रात्मकन्यायाभावे, प्रकरणस्याऽवान्तरस्य मुख्यस्य च समानत्वात् सर्वेषां प्रयाजाऽनुयाजसंयाजानां तथा तत्तदंगभूताऽभिक्रमणाऽन्वाधानसमारोपणश्रपणनिर्माणसादनाऽपाकरणप्रणयनाऽभिषवप्रसर्पणप्रचारचयननिष्पादनकर्षणोपधानाऽयनादीनामपि, दर्शादिप्रधानयागप्रकरणपाठाऽविशेषात् प्रयाजादिवत् फलादिभावनाया इतिकर्तव्यताकांक्षया प्रयाजादिसमानतया ग्रहणस्य प्रसंगेन आपत्त्या दर्शादिप्रधानयागांऽगत्वाऽऽपत्तेः, तदापत्तिनिवारकः संदंशन्यायः प्रधानांगतां निवार्य प्रयाजाद्यंगतां ज्ञापयतीति॥

संदंशं लक्षयति—**एकांगेति**। विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तरालेऽपूर्वमप्यंगं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते, यत्र प्राकृतांऽगाऽनुवादेन धर्मविधानं तत्र तद्विधानं यावद् भवति यावन्न निवर्तते तावत् कथंभावाऽऽकांक्षापि न निवर्तते, अतो विकृतेराकांक्षावत्त्वात् अन्तराले विहितस्याऽप्यपूर्वांगस्य भाव्याकांक्षासत्त्वात् युक्तं तस्य प्रकरणाद्

तदनन्तरं 'यो वै प्रयाजानां मिथुनं वेदे'त्यादिना किञ्चिदंगं विधीयते। अतः प्रयाजांऽगमध्ये विहितमभिक्रमणं तदंगम्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदिति ज्ञाते कथमेभिरपूर्वं कर्तव्यमिति कथंभावाकांक्षायाः सत्त्वात्। सा च संदंशपठितैरभिक्रमणादिभिः शाम्यति।

---

विकृत्यर्थंत्वम्। एकांगस्य प्रयाजादेरनुवादेन—'समानयते जुह्वाम् जुहूपात्रीम् उपभृतः घृतपात्रविशेषात् घृतेन भृत्वा समानयते, समानयत घृतभृतां जुह्वामिति, जुहूभृतं घृतमानयतेत्यर्थः'। तेजो वा घृतमिति, हविर्घृतं तेजोरूपं हवनेऽर्पितं प्रसन्नदेवताद्वारा भ्रातृव्यान् शत्रूंस्तुदते, तत्तेजोऽभिजित्यै होतुर्यजमानस्य विजयाय भवतीति। इत्येतदुदाहरति—यथाऽभिक्रमणे इति॥ (३।१।१०।१९, २०) वाचनिके स्मार्ते वा वाक्ये वाक्यानुयोगाऽवसरेऽभिक्रमणाऽधिकरणे, 'अभिक्रमणं,—विजयाय आहवनीयं सर्वतः सञ्चरणं कृत्वा जुहुयात्'—इत्याद्युक्तम्। तद्दर्शयति—तद्धीत्यादिना। तद्धि—अभिक्रमणं हि। 'समानयते जुह्वाम् उपभृतः तेजो वा' इति। उपभृत् घृतपात्रं, तस्माद् घृतं जुह्वायां भृत्वा समानयत' इत्यनुवादवाक्यम्, एतेन प्रयाजयागानुवादकेन वादकेन। **किञ्चिदंगम्**—उपभृत्पात्रात् प्रयाजार्थं जुह्वाधारघृतानयनरूपमंगम्, विधाय—प्रज्ञाप्य, तदनन्तरं—किमपि विधानं क्रियते यथा—**'यस्यैवं विदुषः'''अभिजित्यै'** इति। यस्य विदुषः, एवंविधांऽगप्रकारकज्ञानवतः पूर्णांऽगांगिज्ञानवतो यजमानस्य, प्रयाजाः पञ्च—समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकारः,—इतिनामानस्तन्नामकदेवताश्च, पूज्यन्तेऽनुष्ठीयन्ते प्रः प्रकृष्टतयैव सर्वथा, एभ्यो भूतलादिदेशग्रामादिस्थलात्मकेभ्यो लोकेभ्यः, भ्रातृव्यान् दायभागिनोऽपि कौटुम्बिकान् भ्रातृजद्विषः शत्रून् तुदतेः—यजमानस्य यजमानकृतयजनं सदेवताकं निर्वृत्तं सत् सुमूर्तं भवत् सत्, व्यथयति पीडयति क्षीणयति विनाशयतीत्यपीति। **अभिजित्यै**—शत्रुजयार्थं, यो यजमानः, **अभिक्रामं**—आहवनीयं सर्वतः परितोऽभिचरणं भ्रमणं प्रदक्षिणादियथोक्तचंक्रमणं कृत्वा, **जुहोति** हवनमनुतिष्ठति, यो जुहुयात्तस्य विदुषः इति। 'अभिक्रामं जुहोती'त्यभिक्रमणमप्यंगं विधाय च। **तदनन्तरम्**—अभिक्रमणानन्तरमपि पुनः किञ्चिदंगं विधीयते, किंचित् किम्?, तदाह—**'यो वै प्रयाजानामिति'**। किञ्चिदंगं प्रयाजांगस्य घृतानयनस्यापि अंगस्य मध्ये किञ्चिदंगरूपम् अभिचंक्रमणरूपं विधीयतेऽङ्गम्, **मिथुनं** युगलमंगम्, आनयनम् अभिक्रमणं चेत्यंगद्वयम्, **यो वै** यजमानो विद्वान्, **प्रयाजानां**

न चांऽगभावनायाः कथंभावाकांक्षाऽभावः, भावनासामान्येन तत्रापि तत्संभवात् । तदिदं प्रकरणं क्रियाया एव साक्षाद्विनियोजकं द्रव्यगुणयोस्तु तद्द्वारा । तथाहि 'यजेत स्वर्गकाम' इत्यत्र फलभावनायां कथंभावाकांक्षायां सन्निधिपठिताऽश्रूयमाणफलकं क्रियाजातम् उपकार्याकांक्षयेतिकर्तव्यतात्वेनाऽन्वेति ।

---

यागानां यदन्तराऽन्तराऽन्तरा विधत्तमेकमंगं द्वितीयमंगं चेत्यंगद्वयम् , वेद— जानाति स्म, वेत्ति स्म । **वेदेत्यादिना** मन्त्रेण, किञ्चिदंगमभिक्रमणं **तदंगं**— प्रयाजांगमिति ।। **अत इति**। प्रयाजानुवादेन विहिततदंगमध्ये विहितत्वाद्धेतोः । **तदंगं**—प्रयाजांगमभिक्रमणमिति ।।

अत्र शाबरभाष्यम्—"दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते 'अभिक्रामं जुहोत्यभिजित्यै' इति किम् अभिक्रमणं प्रयाजेष्वेव निविशते उत कृत्स्ने दर्शपूर्णमासे प्रकरणे ? । पूर्वपक्षः—प्रकरणाऽविशेषात् कृत्स्ने प्रकरणे इति ।। सर्वार्थमभिक्रमणमिति । हवनशब्दस्य कृत्स्नकर्तव्यतासाधारण्यात्, तस्मात् सर्वस्मिन्प्रकरणेऽभिक्रमणस्य निवेश इति । अथ सिद्धान्तः—'साकांक्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण'—( ३।१।१०।२० ) अभिक्रमणं प्रयाजेष्वेव निविशते, तैः सह, पूर्वस्यैकवाक्यत्वात् । यतः साकांक्षमेतत्पूर्वेण पदेनाऽसमाप्तं वाक्यम् अभिक्रामं जुहोतीत्यत्र पर्यवस्यति, प्रकरणाच्च वाक्यं बलवत्, अमूर्तमप्यभिक्रमणं कर्त्रा सम्बध्यमानं शक्नोति होमं निर्वर्तयितुम् ,— अभिक्रमणेन समासीदति आहवनीयं कर्तेति ।। दूरात् अभिप्रसार्य हस्तं जुहुयात्, समासीदेच्च अन्वाभिक्रमणेनेति द्वयमभ्युपायभूतं होमस्य, तस्मादभिक्रमणमुपकरोति । होमस्येत्यवगम्यते । अतः प्रयाजेष्वेव निवेश इति" ।।

किञ्च—नाऽक्रमणं प्राकरणिकसर्वहोमांगं, किन्तु प्रयाजहोमांगमेव । कुतः ?, प्रयाजाऽवान्तराधिकारोपस्थितस्यैव जुहोतिनाऽनुवादात्, भावनास्वाभाव्येन इतिकर्तव्यताऽऽकांक्षात्मकप्रकरणस्य वर्तनात्, सांगभावनेतिकर्तव्यताकांक्षा प्रधानाधिकारेण प्रतिबद्धेत्यंगग्रहणाऽसामर्थ्यान्न परम्परांगत्वप्रसक्तिः, प्रथमागेनोत्तेजितायाः यावदुत्तरांऽगसम्बन्धमनुस्यूतायाः प्रयाजभावनेतिकर्तव्यताकांक्षायाः प्रधानाऽधिकाराऽपेक्षाया बलीयस्याः सत्त्वात्, तयैव मध्यपात्यभिक्रमणस्याऽपि ग्रहणात् सिद्धं तस्य प्रयाजहोममात्रांगत्वम् । साकांक्षां संदंशेनाऽभिव्यक्ताकांक्षाभिक्रमणवाक्यं प्रयाजेनैक्यं स्यात्, न ह्याद्योत्तेजनमात्रेणाऽभिव्यक्तेः विश्रान्तिरस्ति, अन्तिमनाश्यत्वाऽभ्युपगमात् ।।

क्रियाया एव लोके कथंभावाकांक्षायामन्वयदर्शनात्। न हि कुठारेण च्छिन्द्यादित्यत्र कथंभावाकांक्षायामुच्चार्यमाणोऽपि हस्तोऽन्वेति, किन्तु हस्तेनोद्यम्य निपात्येति उद्यमननिपातने एव, हस्तश्च तद्द्वारैवाऽन्वेतीति सार्वजनीनमेतत्।

---

**प्रयाजैरिति**। यजमानः पञ्चविधप्रयाजैरपूर्वं पुण्यं कृत्वोत्पाद्य यागस्य दर्शपूर्णमासाख्यस्योपकारं साहाय्यं महापूर्वोत्पादनात्मकं सामर्थ्यं परमापूर्वरूपमेव भावयेदितिज्ञाने जाते सति। **कथमेभिरिति**। एभिः प्रयाजैः। **कथं**—केनेतिकर्तव्यताप्रकारेणाऽपूर्वं प्रयाजाद्यपूर्वं कर्तव्यमिति कथंभावाऽऽकांक्षायाः सत्त्वादेव, कर्तव्यप्रकारः आकांक्षाविषयः। **सा चेति**। प्रयाजकर्तव्यप्रकाराकांक्षा, संदंशपठितैः संदंशपतितैः संदंशलब्धैः, वाचनिकैरत्र उभयवाक्यैः अभिक्रमणादिभिः शाम्यति॥ प्रयाजसमीपे श्रूयते—'अभिक्रामं जुहोती'ति आहवनीयम् अभितः सञ्चरणं, तत् सन्निधिबलात् प्रयाजकर्त्रा सम्बध्यते, समिधो यजतीत्यारभ्याऽऽम्नातम् अवान्तरप्रकरणं, तन्मध्ये मध्ये आम्नातं वाचनिकैरभिक्रमणम्, अभिक्रामं जुहोतीति, अभिक्रमणं प्रोक्तमंगं 'मिथुनं वेदे'ति, तस्याऽभिक्रमणविधेः, उभयतः प्रयाजविषयैर्वाक्यैः सन्दष्टत्वात् 'अभिक्रामं जुहोतीत्येकं, 'मिथुनं वेदे'तिद्वितीयं वाक्यं, तेन द्विदण्डकसंदंशेनाऽभिक्रमणं प्रयाजांगमिति। मिथुनमिति तु घृतानयनमेकम् अभिक्रमणं चेति द्वयमंगं प्रयाजानामिति, तदंगद्वयं वेद तथा संदंशवाक्यद्वयं वेद, तस्य भ्रातृव्याभिजितिर्भवतीति। संदंशेन 'समिधो यजति, जुह्वा घृतमानयति, अभिक्रामं जुहोति, मिथुनं वेति'इतिविश्वग्वाक्यैः संदंशवदग्रे पश्चाच्च स्थितैः श्रौतैर्वाचनिकैः स्मार्तैश्चाऽऽवृतमापादितमभिक्रमणं प्रयाजांगमेवेति सर्वेषामेतद्विषयकभाष्यन्यायटीकाप्रकरणग्रन्थानामभिप्रायोऽत्र दर्शितः॥ प्रयाजानामनुष्ठानक्रमस्तुसमिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति बोध्यः॥

**न चांगभावनाया इति**। प्रयाजांगभावना कथंभावाऽऽकांक्षाशून्या अंगभावनात्वादित्यनुमाने हेतोरसाधारणाऽनैकान्तिकत्वात् नांगभावनायाः कथंभावाकांक्षाशून्यत्वम्, किन्तु **भावनासामान्येन** हेतुना, **तत्रापि**, अंगभावनायाम्, **तत्संभवात्**—कथंभावाऽऽकांक्षासत्त्वात्, तथा च—प्रयाजाद्यंगभावना कथंभावसाकांक्षा भावनात्वाद् दर्शादिभावनावत्'इतिभावनासाम्येन साकांक्षत्वसिद्धेः, पक्षसमायाम् अवहननादिभावनाया अनैकान्तिकत्वाऽनवकाशात॥

इदं च स्थानादिभ्यो बलवत् । अत एव—अक्षैर्दीव्यति

---

एवंविधप्रकरणप्रमाणस्याऽऽकांक्षात्मकस्य साक्षाद्विनियोजकं क्रियायाः इतिकर्तव्यताप्रकारायाः भवति । द्रव्येति । तदेव प्रकरणप्रमाणं क्रियाद्वारैव द्रव्यस्य विनियोजकं भवति, द्रव्यक्रियोभयद्वारा च गुणस्य विनियोजकं भवति । तद्घटयति—तथाहीऽति । 'यजेत् स्वर्गकाम'इतिफलवाक्ये फलस्य स्वर्गस्य कामनायां क्रियाजातम् इतिकर्तव्यतात्वेनाऽन्वेति 'यागीयकिंकर्तव्यप्रकारैः फलं भावयेदि'ति । अन्यत्राऽसन्निधिपठितक्रियायां नाऽन्वयः, श्रूयमाणफलकक्रियाजातेऽपि नाऽन्वयः, उपकारकाऽऽकांक्षाशून्येऽपि प्रधाने कथंभावाकांक्षासत्त्वेन तत्र क्रियाजातस्य सम्बन्धो घटते, उपकार्याकांक्षाशून्ये गुणे गौणेऽपि उपकारके तत्र—अनेन कथमुपकर्तव्यमित्युपकार्याकांक्षया इतिकर्तव्यतयाऽन्वयो भवति ।। इतिकर्तव्यताकांक्षायां क्रियाणां साक्षादन्वयो भवतीत्याह—क्रियाया एवेति । लोकेऽमानवेऽपि क्रिया कथंकर्तव्येति कथंभावाऽऽकांक्षायाः सर्वत्र सत्त्वात् कथंभावाकांक्षायां विषयितया क्रियाणामन्वयः प्रसिद्ध एवेति । वैदिकेऽपि तथैव । नहीति । 'कुठारेण छिन्द्यादि'त्यत्र कथं छिन्द्यादिति कथंभावाकांक्षायां 'हस्तेने'त्युच्चार्यमाणोऽपि हस्तो न हि छिदिभावनाया साक्षादन्वेति, साक्षादविषयत्वात्, किन्तु केनचिद्द्वारा विषयत्वात्, कुठारस्योद्यमननिपातनद्वारेति उद्यमनं निपातनं च द्वयमपि कर्मरूपं कथंभावाकांक्षाया विषयतयाऽन्वेति, हस्तस्तु स्वधृतत्वतदुद्यमननिपतनाऽऽघातादिद्वारा 'हस्तः कथं भूत्वा कृत्वा च करोती'त्यन्वयसंभववान् । सार्वजनीनं—सर्वेषु जनेषु भवं प्रसिद्धम् । एतत्—कथंभावाकांक्षात्मकं प्रकरणं यथाऽन्वयि भवति तत् । थमुनः प्रकारवाचित्वेन करणगतप्रकाराकांक्षैव कथंभावाकांक्षा, प्रकारश्च सामान्यस्य भेदको विशेषः, सामान्यं च क्रियाऽऽख्यातवाच्या व्यापाररूपा, तथा च 'यजेत् स्वर्गकामः' इत्यत्र यागेन तथा कर्तव्यं यथा स्वर्गो भवतीति क्रियासामान्यस्यैव विशेषः क्रियैव भवति- करणगतक्रियाविशेषाकांक्षात्मिकायां कथंभावाकांक्षायां क्रियैवाऽन्वेति । क्रिया करणगता अग्न्यन्वाधानादिविप्रतर्पणान्ता प्रकरणेन ग्राह्या, साधनोपकारिणी, तया यागेनाऽपूर्वं जन्यते, अतः क्रिया कथंभावाकांक्षयाऽन्वेति । 'इदम्'इतिरीत्या प्रकरणं स्थानादिभ्यो बलीयो भवति ।।

राजसूययागेऽपि स्थानादिभ्यः प्रकरणं बलवदिति राजसूयप्रकरणे ( आ० श्रौ० सू० १८।८।१ ) इत्यत्र राजा सूयते सोमो यागार्थमत्रेति राज्यधिष्ण्यस्थेन राजन्येन राज्ञा क्षत्रियेण राजसूयोऽनुष्ठातव्यः । राजसूयेतियज्ञनामधेयम् , अयं बह्वीनामिष्टीनां द्वयोः पशुयागयोः सप्तानां

दर्विहोमानां षण्णां च सोमयागानां समुदायरूपः । अत्र इष्टिपशुसोमयागानां समप्राधान्यं नेतरेतरांगभावः, पशुयागांगभूता इष्टयः, सोमयागांगभूता इष्टयः, पशुयागाश्च प्रकृतितोऽतिदेशप्राप्ता यथावदनुष्ठेया, तेषामंगत्वमप्रतिहतम् । किञ्चिदधिकैकसम्वत्सरसाध्योऽयम् । एकोनत्रिंशदुत्तरशतमिष्टयः, फाल्गुनादारम्भः, वर्षमेकं चातुर्मास्यरीत्यानुष्ठानानि । ततः पवित्रादीनां षण्णां सोमयागानामनुष्ठानम् । वटशाखाजटांकुराणि अनुष्ठानपावितानि दध्ना पिष्ट्वा यजमानचमसमापूर्य हुत्वा प्रसादरसं राजानं पाययेत्, ऋत्विजः सोमरसं भक्षयेयुः, राज्ञः फलचमसस्य भक्षणमेव, न सोमस्य, ब्राह्मणानां सोमभक्षणम् , चैत्र्याः पूर्णिमायाः पूर्वदिवसे पवित्राख्यसोमयागार्थं दीक्षाः, दिनत्रये चोपसदः, सप्तमदिने सुत्या, अग्निष्टोमसंस्थाकोऽयं क्रतुः, गवां सहस्रं दक्षिणाः, अष्टमदिनात् एकमेकम् अनुमत्यादीनष्टौ यागाननुतिष्ठेत् । १. अनुमत्य पुरोडाशोऽष्टाकपालः, २. आदित्यश्चरुः, ३. आग्नावैष्णव एकादशकपालः, ४. अग्नीषोमीय एकादशकपालः, ५. ऐन्द्रः एकादशकपालः, ६. आग्नेयोऽष्टाकपालः, ऐन्द्रं दधि, ७. ऐन्द्राग्नो द्वादशकपालः वैश्वदेवश्चरुः, सौम्यः श्यामाकश्चरुः ८. सरस्वत्यै सरस्वते च चरुः, आसम्वत्सरं चातुर्मास्यपशुभिर्यजेत् । ततः—१. आग्नेयोऽष्टाकपालः, २. रौद्रो गावीधुकश्चरुः, ३. ऐन्द्रं दधि, ४. यवमयो वारुणश्चरुः, इति इन्द्रतुरीयाख्ययागेनेष्ट्वा, तन्निशायां पञ्चेध्मकर्म कुर्यात्, सूर्योदयपूर्वम् अपामार्गहोमान् अपामार्गबीजचूर्णपिष्टं पर्णमयस्रुवेण दक्षिणाऽन्युल्मुकोत्थाऽग्नौ मरुस्थले जहुयात् । अग्निना सह प्रत्यावर्त्य यज्ञस्थले अग्निहोत्रं हुत्वा पञ्चदेविकाहविर्भिर्यजेत । तानि—१. धात्रे पुरोडाशो द्वादशकपालः, २. अनुमत्यै चरुः, ३. राकायै चरुः, ४. सिनीवाल्यै चरुः, ५. कह्वै चरुः । एकप्रयोगेणेदं समानतन्त्रेणैकदिनेऽनुष्ठेयम् । गोवृषभौ दक्षिणा । हविस्त्रयविशिष्ट एकः समुदायः, समुदायत्रयं त्रीणि कर्माणि, आग्नावैष्णव एकादशकपालपुरोढाशद्रव्यकः, ऐन्द्रावैष्णवस्तादृशः, वैष्णवस्त्रिकपालः,—इत्येकः समुदायः । अग्नीषोमीय एकादशकपालपुरोडाशद्रव्यकः, इन्द्रासोमीयः सः, सौम्यश्चरुः, इत्ययमेकः समुदायः । सोमपौष्णश्चरुः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः,—इत्ययमेकः समुदायः । एकहविष्का एका इष्टिः वैश्वानरद्वादशकपालरूपा, ततो वारुणो यवमयश्चरुः, इत्येतानि षट्कर्माणि एकदिनकृत्यानि । ततो द्वादशेष्टयो द्वादशदिनेषु प्रत्येका । १. बहस्पत्यश्चरुः । २. ऐन्द्रएकादशकपालः पुरोडाशः । ३. आदित्यश्चरुः । ४. नैर्ऋत्यश्चरुः । ५. आग्नेयोऽष्टाकपालः पुरोडाशः । ६. वारुणो दशकपालः पुरोडाशः । ७. मारुतः सप्त-

राजन्यं जिनातीति त्रिदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता

कपालः पुरोडाशः। ८. सावित्रो द्वादशकपालः पुरोडाशः। ९. आश्विनो द्विकपालः पुरोडाशः। १०. पौष्णश्चरुः। ११. रौद्रोऽरण्यगोधूमसम्पाद्यश्चरुः। १. भगाय चरुरिति। द्वादशऽमीमानि 'रत्निनां हवींषि' इत्युच्यन्ते, अरणिमथनोत्थवह्निमाहवनीयादिकुण्डेषु यजेत। ततः—इन्द्राय सुत्राम्णे पुरोडाशः, इन्द्राय अंहोमुचे एकादशकपालः, ततोऽभिषेचनीयाख्यसोमयागाय यजमानो दीक्षेत। तत्र दीक्षणीयेष्टिमैत्राबार्हस्पत्या॥

श्वेतगोदुग्धस्य विनाऽऽतञ्चनं दधि मूर्तमुच्यते, तत्र बदरफलादि क्षिपेत्, दधिबहिर्वहेत्, तत्स्वयंप्रयितमुच्यते, तत्र खण्डिततण्डुलैश्चरुं पक्त्वा नेन बृहस्पतये यागं कुर्यात्, अश्वत्थपात्रेणाऽखण्डिततण्डुलचरुणा मित्रं यजेत, स्विष्टकृद्यागः, मित्रबृहस्पतिभ्यामेकीकृत्य हविषा होमः। ततोऽभिषेचनीयसोमयागदीक्षा, प्रकृतिवत् यावदग्नीषोमीयपशुयागाऽनुष्ठानम्। सम्वत्सरीयाऽवशिष्टदशरात्रिषु दशपेयस्य प्रधानहविरनुष्ठानम्, सोमक्रयणम्, सोमार्घं दशपेयार्थम्, अष्टौ देवसुवां हवींषि निर्वपेत्। १. अग्नये गृहपतये पुरोडाशोऽष्टाकपालः, २. सोमाय वनस्पतये श्यामाकाश्चरुः, ३. सवित्रे सत्यप्रसवाय पुरोडाशो द्वादशकपालः, ४. रुद्राय पशुपतये गावीधुकः चरुः, ५. बृहस्पतये वाचस्पतये नैवारश्चरुः, ६. इन्द्राय ज्येष्ठाय पुरोडाश एकादशकपालः, ७. मित्राय सत्याय चरुः, ८. वरुणाय धर्मपतये यवमयश्चरुः। ततो ब्रह्मा—'इयं तव प्रजा, अयं वो राजा' इति वदेत्। राजा विष्णुक्रमादीन् क्रामेत्। मारुतस्यैकविंशतिकपालपुरोडाशनिर्वापनम्। राज्ञो जलैरभिषेकः पञ्चामृतैः शुद्धोदकैरपि। उदुम्बरफलाशनम्। पार्थसंज्ञकाः षड्होमाः, राजाऽभिषेचनम्, रथोपरि विजयार्थं निषदनं धनुःशरक्षेपणम्, रथविमोचनीयहोमाः, आसन्दानिषदनम्, ब्रह्मादिस्तवनम्, 'अक्षैर्दीव्यति' अक्षप्रासनम्। ऐतरेयब्राह्मणोक्त—शुनःशेपकथाऋचः परश्शताः परस्सहस्राः होता शंसेत्। मारुतैककपालेष्टिः, आमिक्षायागः, वैश्वदेवः, माहेन्द्रयागः, अवभृथेष्टिः। ततः श्वोभूते संसृपां हवींषि दशाऽनुतिष्ठेत्। १. आग्नेयोऽष्टाकपालः पुरोडाशः, २. सारस्वतश्चरुः, ३. सावित्रो द्वादशकपालः पुरोडाशः, ४. पौष्णश्चरुः, ५. बार्हस्पत्यश्चरुः, ६. ऐन्द्रः एकादशकपालः, ७. वारुणो दशकपालः, ८. सौम्यश्चरुः, ९. त्वाष्ट्रोऽष्टाकपालः, १०. वैष्णवस्त्रिकपालः पुरोडाशः। ततोऽष्टमे दिने द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणा दीक्षा। नवमं हविः, दशमं हविः, अग्नीषोमीयपशुप्रचारः, सोमाऽभिषवः, सोमार्घेन शतचमसान् पूरयेत्। सोमरसपानम्। अयं दशपेयः क्रतुः॥

**अपि स्थानान्न तदङ्गं, किन्तु प्रकरणाद् राजसूयांगमिति ॥**

---

सुवर्णदर्पणमालाऽऽभरणनिष्कादि अश्वगोबलीवर्दादि वस्त्रवेषादि शकटादि दानद्रव्याणि । दशपेयसोमसमाप्तिः ॥

ततो वैशाखपूर्णिमायां केशवपनीयसोमयागदीक्षा । पशुयागद्वयम् ; सम्वत्सरं केशाऽवपनं व्रतम्, अतिरात्रसंस्था, एकविंशतिस्तोमकानि, माध्यन्दिने सप्तदशस्तोमकानि, तृतीयसवने द्वादशस्तोत्राणि, उक्थस्तोत्राणि, षोडशिस्तोत्रम्, रात्रिपर्यायस्तोत्राणि, अतिरात्रस्तोत्राणि, उषःस्तोत्रं, रथन्तरसामगानं, सन्धिस्तोत्रं, त्रिवृत्स्तोम ततो व्युष्टिद्विरात्रयागः, क्षत्रस्य धृतिरिति - यागः । प्रथमेऽग्निष्टोमसंस्था । द्वितीयेऽतिरात्रसंस्था । ततः क्षत्रस्य धृतिर्यागः । **राजसूयः समाप्तः** । ततः सौत्रमण्या यजेत ।

सौत्रामणीनामपशुयागः । अजो धूम्रवर्णोऽश्विदेवताकः, मेषः सरस्वतीदेवताकः, मेष इन्द्रदेवताकः, वपायागः, सुराग्रहः, एतत्पूर्वोक्ताऽर्थे दुग्धपाकप्रयोगा यागाश्च । त्रयो ग्रहाः । पशुयागीया देवताः । पितृस्थानं पुरोडाशयागानुष्ठानम् । त्रयः पुरोडाशाः—इन्द्रः सविता वरुण इति देवताः, अंगयागानुष्ठानम् , सौत्रामणीप्रसादपानम् । वारुणेनैककपालेनाऽवभृथेष्टिः । इति चरकसौत्रामणी । कौकिलसौत्रामण्यां—ऐन्द्रः, आश्विनः, सारस्वतः, ऐन्द्रः, ऐन्द्रो वायोधसः, पञ्च पशवो दुग्धस्वरूपा इति ॥ सौत्रामण्याम् 'उत्तरेऽग्नौ पयोग्रहान्, दक्षिणे सुराग्रहान् जुहोती'ति । सर्वत्र दुग्धमेव ॥ एतादृशे राजसूये प्रकरणे पश्विष्टिसोमयागा बहवः प्रधानसमाः पठ्यन्ते, तत्र अभिषेचनीययागः सोमयागोऽपि पठितः, तस्य सन्निधौ स्वर्णपाशैर्विदेवनादयो धर्मा 'अक्षैर्दीव्यति राजन्यं जिनाति, शौनःशेपमाख्यापयति'इति श्रूयन्ते । जिनाति—जयति । ऐतरेयब्राह्मणे सप्तमपञ्चिकायां बह्वृचब्राह्मणे तृतीयेऽध्याये कथितं शुनःशेपविषयकमुपाख्यानमाख्यापयति—

**शौनःशेपाख्यानम्**—हरिचन्द्रो वरुणं गत्वा 'मे पुत्रो जायतां तेनैव त्वां यक्ष्ये'इतियाचनया रोहितं पुत्रं लब्धवान् । वरुणःसमेत्य—'अनेन मां यजस्वे'ति प्राह, हरिश्चन्द्रः प्राह—दशदिनेषु अदन्ते, पुनर्दन्ते, युद्धयोग्ये, पुत्रे मेध्ये जातेऽर्पयिष्ये'इति वरुणं वञ्चयामास च । रोहितस्तु प्राणरक्षणाय वनं प्रययौ, वरुणो ज्ञात्वा हरिश्चन्द्रमुदररोगिणं चक्रे, रोहिणो वने पञ्चवर्षाण्युषित्वा षष्ठे वर्षे स्वमरणनिवृत्त्यर्थम् अजिगर्तद्विजस्य पुत्रं शुनःशेपं क्रीत्वा गृहमागत्य पित्रे दत्वा ववंदे, तेन पुत्रेण हरिश्चन्द्रो मुक्तोदररोगः सन् अहिंसं पुरुषमेधं चकार, शुनःशेपं च जघान, विश्वमित्रः शुनःशेपं स्वपश्चाशत्पुत्रेषु ज्येष्ठं चकार, शुनःशेपो देवादीन् स्तुत्वा पाशबन्धादृणान्मुक्तः ।

**देशसामान्यं स्थानम्। तद् द्विविधम्। पाठसादेश्यम् अनुष्ठान-सादेश्यं चेति। स्थानं क्रमश्चेत्यनर्थान्तरम्। पाठसादेश्यमपि द्विविधम्। यथासंख्यपाठः सन्निधिपाठश्चेति।**

---

सः यज्ञमण्डपे देवैः रक्षितः शुनःशेपो भार्गवोऽपि गाधेयो देवरातो कौशिक-गोत्रोऽभवत्। इतिकथानकम्॥

तत्र विदेवनादीनां सन्निधिबलात् अभिषेचनीयांगत्वमिति पूर्वपक्षः। सिद्धान्तस्तु—राजसूयेतिकर्तव्यताकांक्षायामनुवृत्तायां विहिता विदेवनादयः, ते प्रकरणबलात् राजसूयांगानि भवन्ति, बहुयागात्मकराजसूयशेषत्वं राजसूयस्थसर्वयागशेषत्वं विदेवनादीनां प्रकरणादेव सिद्धयति। अभिषेचनीयस्य कर्मणः काचिदप्याकांक्षा विदेवनादिषु नास्ति 'अभिषेचनीयाख्यसोमयागस्य कथं किं केने'ति आकांक्षा विदेवनादिषु नास्ति। अभिषेचनीययागस्य ज्योतिष्टोमविकृतित्वेन अत्राऽतिदिष्टप्राकृतांऽगैरेवाऽभिषेचनीयाऽऽकांक्षा-निवृत्तिः। सन्निहितविधिबलादाकांक्षोत्थापनं स्यात् तर्हि तु आदावन्तराले आकांक्षारूपं प्रकरणं प्रकल्प्य प्रकरणद्वारा वाक्यलिंगश्रुतिकल्पनया सन्निधिर्विप्रकृष्येत, राजसूयाकांक्षात्मकं महाप्रकरणं क्लृप्तमेकांक्षया सन्निकृष्येत, प्रकरणेन सन्निधिर्बाधिता, अतो विदेवनादयः सर्वयागशेषाः, न तु अभिषेचनीययागमात्रशेषाः, प्रकरणस्य स्थानादिभ्यो बलवत्त्वात्। ततस्ते विदेवनादयो निर्बलात्स्थानप्रमाणात् न अभिषेचनीयसोमयागांऽगमिति॥ निगमयति—**किन्त्विति**। किं तर्हि ?, कुत्रांऽगम् ?। **प्रकरणादिति**। महा-प्रकरणात्। बहुयागात्मकराजसूयस्यांऽगमिति। सर्वयागशेषास्ते इति। यतस्तेषां तदंगत्वं भवत् स्थानाद्भवेत् न तु प्रकरणात्, अभिषेचनीयस्याऽव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात् प्राकृतैर्धर्मैर्निराकांक्षत्वात्, स्थानस्य निर्बलत्वात्। राजसूयपदम् अनिर्णीतविशेषार्थम्, दर्शपूर्णमासपदं तु आग्नेयादिवाचकम्, अतो यजेतेत्याख्यातम् आग्नेयादीन् वदति। एतदाख्यातपरतन्त्रं राजसूयपदम्, तच्च सामान्यं सर्वेष्टिपशुसोमेषु विद्यमानम् इष्टिपशुसोमादीन् वदति। साम्प्रदायिकैस्तु विदेवनादीनां संदंशो दर्शितः 'राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते 'राजसूयाय ह्येना उत्पुनाति'इत्येवमादयः तन्मध्ये विदेवनादयः पठ्यन्ते, अतस्ते सर्वे राज-सूयांगम्, प्रयाजानुवादेना विधीयमानधर्ममध्ये पठितप्रयाजांगाऽभिक्रमणवत्॥

अथ स्थानं प्रमाणं निरूपयति—**देशसामान्यमिति**। पाठसमानदेशत्वम् अनुष्ठानसमानदेशत्वं वा सन्निधिविशेषत्वमपि च लक्षणम्। स्थानं क्रमः।

तत्र 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्'। 'वैश्वानरं द्वादशकपालं निर्वपेदि'त्येवं क्रमविहितेषु 'इन्द्राग्नी रोचनादिव' इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवंरूपो विनियोगो यथासंख्यपाठात्। प्रथमपठितमन्त्रस्य हि कैमर्थ्या-

---

देशः प्रदेशः कालः शब्दः गगनं क्रिया च यत्र यत्र पदानि निवसन्ति आनुपूर्व्या चाऽन्वीयन्ते परस्परम् अन्वितानि च स्वाश्रये स्थितान्येवाऽर्थेषु प्रवर्तन्ते बोधं जनयन्ति तादृशपदाश्रयाः सामान्यतया आधारप्रदेशाः। प्रदेशनिरूपितसन्निधिमत्त्वं क्रमत्वं स्थानत्वमिति। पाठैः अनुष्ठानैरन्वयैश्चार्थैरपि सन्निधयो भवन्ति, अत्र द्विविधत्वं प्रमाणत्वेनाऽभिमतं यत्तदाह—**तद्द्विविधमिति**। पाठेन—यथासंख्यपाठैः सादेश्यं समानदेशत्वं समानदेशवत्त्वम्, तथाऽनुष्ठानैः समानदेशवत्त्वमिति च। पाठाऽनुष्ठानाऽन्यतरप्रयोज्यसन्निधिविशेषवत्त्वमिति लक्षणार्थः। लक्ष्यं स्थानं क्रमः। स्थीयन्तेऽर्थैर्यत्र, येन वा तिष्ठन्ति तत्स्थानं क्रमः। तदैक्यमाह—**स्थानं क्रमश्चेति**। नाऽन्यो भिन्नोऽर्थः किन्तु एक एवाऽर्थः। पाठसमानक्रमोऽपि द्वेधा भवतीत्याह—**पाठसादेश्यमपीति**। यथा यथा येषामंगानां यागादीनां संख्याः क्लृप्ता विद्यन्ते तथा तथा तत्तत्संख्याऽनुसरणमवलम्ब्यैव क्रमप्रमाणम् अर्थानंगानि व्यापारांश्चाऽप्यनुयोजयति। तद्वत् सन्निधिरपि आसत्तिः अव्यवधानेन मिथो दृष्टिगोचरता यथा यथा क्लृप्ता वर्तेत तथा क्रमोऽनुपुक्तः सन्नुपकारादिकं जनयतीति। एतत्तु पाठत्वेन व्याप्तं क्रमप्रमाणम्। क्रियात्वेन व्याप्तं त्वनुष्ठानप्रमाणम्॥ यथासंख्यपाठक्रमं दर्शयति—**तत्रेति**। यजनक्रमे इन्द्राऽग्निदेवताभ्यामेकादशकपालेषु भृतः पुरोडाशो बलिः। वैश्वानरदेवतार्थं द्वादशकपालेषु भृतः पुरोडाशो बलिः, दातव्यः, निर्वपेत्, निर्वपनम् अर्पणम्। राजसूयात्मकविविधयज्ञेषु एते क्रमा निर्दिष्टाः। 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्'। 'वैश्वानरं द्वादशकपालं निर्वपेत्' इतिक्रमेण निर्दिष्टौ याज्यौ मन्त्रौ। तद्वत् क्रमेणैव प्रथमस्य 'इन्द्रस्य रोचनादिव' इति अनुवाक्यामन्त्रः। तावेतौ याज्यानुवाक्यामन्त्रयुगलम् 'ऐन्द्राग्नमि'त्यनेन निर्दिष्टस्य ऐन्द्राग्नेष्टियागस्य तौ याज्यानुवाक्यारूपौ मन्त्रौ अंगम्। ततो याज्यामन्त्रः—'वैश्वानरं द्वादशकपालं निर्वपेदि'ति। एतन्मन्त्रस्याऽनुवाक्या 'वैश्वानरोऽजीजनदि'तिमन्त्रः, एतौ याज्यानुवाक्यामन्त्रौ क्रमेण युगलं द्वितीयस्य द्वितीयमिति क्रमेण द्वन्द्वं भवतीति द्वितीयं युगलं द्वितीयस्य 'वैश्वानरमि'तिनिर्दिष्टस्य वैश्वानरेष्टियागस्यांऽगं भवतीति। इत्येवंरूपो यथासंख्यपाठात् याज्याऽनुवाक्यामन्त्रयोः

**कांक्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । एवं द्वितीयमन्त्रस्याऽपि । वैकृतांगानां प्राकृतांऽगानुपवादेन विहितानां संदंशपतितानां विकृत्यर्थत्वं सन्निधिपाठात् यथा आमनहोमानाम् ।**

---

द्वयोर्द्वयोः **विनियोगो**— योजना क्रमप्रमाणेन । विनियोगो आकांक्षं हेतुमाह— **प्रथमपठितस्येति** । कथमयं मन्त्रः किमर्थमत्रोक्तः किमर्थकश्चेत्याकांक्षायां कैमर्थ्याकांक्षायां जायमानायां सत्यां, प्रथमतो विहितं कर्म एकादशकपाल-निर्वपनं प्रथममुपतिष्ठते प्रथमं निर्दिश्यते, तेनाऽऽकांक्षा सा प्रशाम्यति । किमर्थोऽयं मन्त्र इति द्वितीयमन्त्रस्याऽपि कैमर्थ्याकांक्षायां द्वितीयस्थाने विहितं कर्म द्वादशकपालनिर्वपनं द्वितीयमुपतिष्ठते द्वितीयं निर्दिश्यते, समान-संख्यया समानप्रादेशिकत्वात् समानक्रमदेशवत्त्वात् समानदेशत्वात् यथासंख्य-व्यवस्थानात् ।। कोऽर्थः कस्य यस्य सः इति किमर्थैस्तस्य भावः कैमर्थ्यमित्या-कांक्षायां किमनेन मन्त्रेण भाव्यमिति ?, निर्वापयागो भाव्य इति, भाव्य-मग्नयागस्य प्रथमस्य प्रथमं याज्यानुवाक्याद्वयं द्वितीयमस्य यागस्य द्वितीयं याज्यानुवाक्याद्वयं संख्याक्रमेण निर्देश्यस्थितिरूपसमानदेशक्रमेण च अंगम् । स्वस्वयागांगमिति तत्र क्रमः प्रमाणम् । **एवं**—प्रथममन्त्रस्येव, **द्वितीयमन्त्र-स्यापि**—याज्यामन्त्रस्यापि, अनुवाक्यामन्त्रसहितस्य याज्यानुवाक्यायुगलस्य स्वयागे निर्वपनयागेऽङ्गत्वम् , शेषत्वमिति ।। यथासंख्यपाठक्रमेणाऽङ्गानां द्वितीयमुदाहरणं दर्शपूर्णमासयोराध्वर्यवे काण्डे आग्नेयोपांशुयागाऽग्नीषोमीय-यागाः क्रमेणाऽऽम्नाताः, तेनैव क्रमेण पाठ्यमाने काण्डे आग्नेयादिविषया मन्त्रा अप्याम्नाताः, 'अग्नेरहं देवयज्ययाऽन्नादो भूयासं, दब्धिरस्यदब्धो भूयासम् , अमुं दभेयम् , अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् , इत्य-त्राऽऽद्यन्तयोराग्नेयाऽऽग्नीषोमीययोः कर्मणोराद्यन्तौ मन्त्रौ, मध्यमस्योपांशु-याजस्याव मंणो मन्त्रो 'दब्धिरस्यदब्धो भूयासम् अमुं दभेयम्' इति मध्यमो मन्त्रोंऽगं भवति, तस्य ब्राह्मणवाक्यम्—एतया वै दब्ध्या देवा असुरान् दभ्नुवन् तयैव भ्रातृव्यं दभ्नोति' इति । दब्धिःघातकम् आयूधम् । वाक्य-द्वयानुसन्धानेन सम्पन्नं प्रकरणं पृथक्प्रमाणमिव प्रकरणद्वयानुसन्धानसम्पन्न-क्रमप्रमाणेनोपांशुयाजे दब्धिमन्त्रस्य विनियोगात् क्रमः पृथक्प्रमाणम् । द्वयोः प्रकरणयोर्नैकवाक्यत्वम् , ततः क्रमप्रमाणेन मध्यस्थोपांशुयाजस्य मध्यवर्ति-मन्त्रोंऽगं समानदेशवत्त्वात् यथासंख्यपाठाद्विनियोगः ।।

अथ प्राकृतांगाऽनुवादेन विहितानां सन्निधिपाठात् वैकृतांऽगानां संदंश-पतितानां विकृतौ विनियोगमाह—**वैकृतांगानामिति** । 'वैश्वदेवीं साग्रहणीं

**तेषां हि कैमर्थ्याकांक्षायां फलं विकृत्यपूर्वमेव भाव्यत्वेन सम्बध्यते, उपस्थितत्वात्, स्वतन्त्रफलकत्वे विकृतिसन्निधिपाठाऽऽनर्थक्यापत्तेः।**

---

निर्वपेद् ग्रामकामः' इतिकाम्येष्टियागस्य सन्निधौ श्रूयन्ते—**आमनहोमाः**—'आमनदेवा इति तिस्र आहुतीर्जुहोति'। 'अमनसे स्वाहा, रेतस्विने स्वाहा, आमनस्य-आमनस्य-देवाःइति तिस्रः आहुतीर्जुहोति' इतिशाबरभाष्यम्। अत्र सन्देहः—किं सांग्रहणीष्टचा समप्रधानभूता आमनहोमा उत तस्या अंगभूता इति। यजिमत्त्वेन हेतुना समप्रधानभूता इति पूर्वपक्षः। सिद्धान्तः 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इतिवाक्येन 'स्वराज्यकामो राजसूयेन' इति वाक्येन च यथा बहूनां फलसम्बन्धाऽवगमः, तथा आमनहोमानां, फलसम्बन्धाऽभावात् प्राधान्याऽयोगात्। 'सांग्रहणीं निर्वपेद् ग्रामकामः' इति वाक्यं तु सांग्रहण्या एव फलसम्बन्धं बोधयति न तु आमनहोमानाम्, तस्मात् फलवत्याः सांग्रहण्याः सन्निधावाम्नाता अफला आमनहोमाः संग्रहण्या विकृतेरंगम्। फलवद्धि अफलस्य प्रधानम्, फलवती संग्रहणीष्टिः, अफला होमाः, आमनहोमानां प्राकृतानुवादेन 'यत्प्रयाजानां पुरस्ताज्जुहुयात्, बहिरात्मानं सजातानां दध्यात्, यदनुयाजानामुपरिष्टात्स्वर्गं लोकमपक्रामेत्' इत्येवं परामृष्यमाणानां विहितानामत एव च, प्रधानाऽनुवादविधानमेको दंशः, विकृत्यर्थत्वविधानं द्वितीयो दंशः, एषः संदंशः, राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते 'राजसूयाय ह्येना उत्पुनाति' इत्येवमादयस्तन्मध्ये विदेवनादयः पठयन्तेऽतः राजसूयांगानि तेऽनिर्णीतार्थराजसूयस्य इष्टिपशुसोमाद्यात्मकत्वमिति विकृतियागा एवेति विकृत्यंगत्वम् आमनहोमानामिति। तत्र पतितानां यदर्थत्वं तदंगत्वमिति विकृत्यर्थत्वं संग्रहण्यंगत्वं संग्रहणीसन्निधौ पाठात् आमनहोमानां—**यथेति**। येन प्रकारेण संदंशसाहाय्यमसन्निधिपाठप्रमाणेनेति। सन्निधिपाठस्य स्थानस्य बलवत्प्रामाण्यम्। 'संग्रहणीं निर्वपेत् ग्रामकाम' इतिवाक्येन सांग्रहण्याः फलसम्बन्धो बुध्यते, आमनहोमानां फलसम्बन्धो नेति अफला आमनहोमाः, ते किमर्थास्तर्हि किलेति?, **कैमर्थ्याकांक्षायां**, '**विकृत्यपूर्वमेव तेषां हि फलमिति**। विकृत्यपूर्वं सांग्रहणीष्टचपूर्वं तैर्भाव्यते, अपूर्वं **भाव्यत्वेन सम्बध्यते**, आमनहोमैः सांग्राहण्यपूर्वं भावयेदिति, तदेवं निवृत्ताकांक्षा भवतीत्यतः पाठसन्निधिप्रमाणेन, **उपस्थितत्वात्**—विकृत्यपूर्वभाव्यत्वसम्बन्धितया समीपपठितानीमानि अपूर्वसाधनानि भवितुमर्हन्तीति स्मृतिविषयत्वात् विकृत्यंगत्वं विकृत्यपूर्वभाव्यकत्वं सिद्धयति॥

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते, अतस्तेषां

---

फलवत्कर्मणामसन्निधौ पठितोऽश्रूयमाणफलश्च विश्वजिन्नामकयागः—'सहस्रसम्वत्सरं तदायुषामसंभवान्मनुष्येषु' ( ६।७।३१ ) अस्ति सहस्रसम्वत्सरं सत्रं विश्वजितामयनं, पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशतः एकविंशः, १६५ + ८२५ + ६३५ + ११५५ = ३०८० वर्षाणि भवति, विश्वसृजामयनं सहस्रसम्वत्सरमिति। तत्र सन्देहः—किं ये सहस्रायुषस्तेषामनेनाऽधिकारः, उत मनुष्याणामिति ? । मनुष्याणामपि बहवो विकल्पा वक्ष्यमाणाः, वंशजैः स्यात्, सम्प्रदायस्थैः स्यात्, परम्पराभिः स्यात्, बहुभिः विभक्तैर्वर्षव्रातैरपि स्यात्, गान्धर्वैरपि स्यात् , कायाकल्पैरपि स्यात् , । 'द्वादशतं वा प्रकृतिवत्' ( ६।७।१५ ) प्रकृतिवत् कर्तव्यं, ज्योतिष्टोमश्च प्रकृतिरिति । तत्र धर्मा विहिता अपि न विश्वजिति कृत्स्नाः प्रतीयन्ते, अतो ज्योतिष्टोमे इव न दानादि चापि प्रकृतिवत् विश्वजिति, धर्माऽनिर्णयात् , कालाऽनिर्णयाच्च। किं तर्हि ?, 'अहानि वाऽभिसंख्यात्वात्' ( ६।७।४० ) अहरिव सम्वत्सरइति ब्राह्मणम्, साक्षात्प्रतिमाशब्देन संयोगात्। तस्मादहःसु सम्वत्सरशब्दः । चतुर्दिनन्यूनः सहस्रदिनकालः विश्वजिद्यागस्यानुष्ठाने निर्णीतः शाबरभाष्ये। एकाहकाण्डोऽपि विश्वजित्। अष्टरात्रान्तर्गतोऽपि विश्वजित्। द्वादशाहो विश्वजित्। प्रत्यक्षवचनविहिता द्वादशे बहवः कल्पाः। सर्वेषां विश्वजिताम् अविशेषात् । 'अहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषात्' ( ६।७।१४ ) ॥ सिद्धान्तः—सहस्रं प्राक् चतूरात्रेभ्यः' 'इत्यादिभाष्यं टीका च ॥ 'आदित्यो वा सर्व ऋतवः स यदोदेत्यथ वसन्तः, यदा संगवोऽथ ग्रीष्मः, यदा मध्यंदिनोऽथ वर्षाः, यदापराह्णोऽथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ' इतिब्राह्मणवाक्यम् ॥ सम्वत्सरशब्दो दिनपरः ॥ विश्वसृजाम् ऋषीणां सत्रं सहस्रदिनमितिराद्धान्तः ॥ विश्वजिद्यागः सार्वभौमराज्ञा सम्पाद्यः, किन्तु स्वतन्त्रं फलं न दृश्यते 'विश्वजिता यजेते'त्यत्र फलस्याऽश्रवणात् स्वतन्त्रं स्वर्गः फलं कल्प्यते, इतिविश्वजिन्न्याय उक्तः। विश्वजिन्न्यायवत् आमनहोमानां स्वतन्त्रं फलं कथं न स्यादित्याशये तु आनर्थक्यदोषमाह—**स्वतन्त्रफलकत्वे त्वित्यादिना** । फलवत्कर्माऽसन्निधौ पठितस्याऽश्रूयमाणफलस्य विश्वजिन्न्यायेन स्वतन्त्रं स्वर्गादिफलं ग्रामादिफलं वा कल्प्यते। तथाऽनियमे तु प्रयाजाद्या अपि स्वतन्त्रफलवन्तः स्युः, न त्वेवमस्ति, किन्तु—अफलस्य

**कैमर्थ्याकांक्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बध्यते। तच्च स्थानं समाख्यातः प्रबलम्।**

---

फलवत्सन्निधौ पाठादेव तदंगत्वध्रौव्यात्, तदंगत्वाऽनंगीकारे तु आनर्थक्यमेवाऽऽपद्येतेति' विकृतिसन्निधौ पाठस्यैवाऽऽनर्थक्यापत्तेश्चेति। विश्वजितः स्वतन्त्रस्वर्गफलकत्वम्, आमनहोमानां तु सांग्रहण्यंगत्वमेवेति ॥

अथाऽनुष्ठानसादेश्यं स्थानं प्रमाणं विनियोजयति—**पशुधर्माणामिति**। यागीयपशुधर्मा उपाकरणपर्यग्निकरणबन्धनाऽऽलम्भनाद्याः, 'प्रजापतेर्जायमानाः पशवः' 'इदं पशुम्, अग्नये त्वा इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमि'। इति ऋग्भ्यां पशोरुपस्पर्शनम् उपाकरणम्, दर्भज्वालया त्रिः प्रदक्षिणीकरणं पर्यग्निकरणम् यूपे रज्ज्वा बन्धनं यूपनियोजनम्, इत्यादयः पशुधर्माः प्रोक्ताः, एषाम् अनुष्ठानसमानदेशत्वात् अग्नीषोमीयपशुशेषत्वमेव, न तु सवनीयादिपशुशेषत्वम्, सर्वेषां पशुयागानां प्रकृतिभूतोऽग्नीषोमीयः पशुयागः, सोमयागांऽगमध्ये सोमयागांऽगभूतः पठितः। ज्योतिष्टोमप्रकरणेऽग्नीषोमीयः सवनीयोऽनुबन्ध्यश्च त्रयः पशवः समाम्नाताः। अग्नीषोमीयः पशुः, सवनीयः पशुः, अनुबन्ध्यश्च पशुः। तत्राऽनुबन्ध्यस्तु अवभृथाऽन्ते समाम्नातः। सवनीयः पशुः सौत्यनामकेऽह्नि समाम्नातः। सौत्याह्नः पूर्वमेव औपवसथ्येऽह्नि धिष्ण्यनिर्माणानन्तरम् अग्नीषोमीयः पशुः अजः समाम्नातः। अतः औपवसथ्येऽह्नि प्राचीने प्राप्तेऽग्नीषोमीये पशौ उपाकरणपर्यग्निकरणबन्धनाऽऽलम्भनाद्या धर्मा अंगतयाऽनुष्ठानसन्निधिप्रमाणप्राप्ताः। तेषां शेष्याकांक्षायाम् अनुष्ठेयतयोपस्थितम् अग्नीषोमीयपश्वपूर्वमेवाऽनुष्ठानसन्निधितो भाव्यत्वेन सम्बध्यते, अनुष्ठानसन्निधिविरहात् प्रथमेऽह्नि सवनीयाऽनुबन्ध्याऽपूर्वं भाव्यत्वेन न सम्बध्यते। किन्तु तत् सवनीयपशुः सौत्यनामकेऽह्नि समाम्नातात् आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयपशूपाकरणकारकं भवति। एते धर्माः सवनीयेऽनुबन्ध्ये च चोदकवाक्यादतिदिश्यन्ते 'स एष द्विदेवत्यः पशुरौपवसथ्येऽहनि आलब्धव्य' इति 'अनेन पशुना सोमं क्रीणातो'ति सोमक्रयसमीपे पाठात्। सोमयागस्य ज्योतिष्टोमस्य पशुधर्मग्रहणाऽयोगात्। सोमो हि अभिषवादीन् धर्मानाकांक्षति, न तु यूपनियोजकविशसनादीन्। अतः पशुयागार्थत्वमेव पशुधर्माणाम्। क्लृप्तोपकारैः प्राकृतधर्मैरग्नीषोमीयस्येतिकर्तव्यताकांक्षाया उपशान्तत्वात् ॥

इदं च बोध्यम्—अग्नीषोमीयः पुरोडाशः पशुद्रव्यं वा सान्नाय्यद्रव्यमिति मनसिकृत्योच्यते—सान्नाय्ययागप्रकृतिप्रकृतिकोऽग्नीषोमीय पशुः, सान्नाय्य-

**अत एव शुन्धनमन्त्रः सान्नाय्यपात्राऽङ्गं, पाठसादेश्यात् , न तु पौरोडाशिकमिति समाख्यया पुरोडाशपात्राऽङ्गम् ॥**

---

स्याऽग्नीषोमीयस्य च पशुजन्यद्रव्यत्वकत्वम् । सान्नाय्यो दधिपयसी द्रव्यम् । अग्नीषोमीयः पशुरपि पशुजन्यद्रव्यात्मकः पिण्डः, पयोयागः सान्नाय्ययागः, पयोयागप्रकृतिप्रकृतिको यागः पशुयागः अजादिपशुयागः, द्वयोर्द्रव्ययोर्दुग्धपश्वोः श्रपणार्थम् उखा समा, किन्तु साक्षात्पशुप्रभवं पयो द्रव्यं पयोयागः साक्षात्पाठसन्निधिप्रमाणात् बलीयः, हविःसाम्यं च बलीयः, 'सान्नाय्यं वा तत्प्रभवत्वात्' ( ८।२।१३ ) सान्नाय्ययागो बलीयः पशुयागप्रकृतिप्रकृतिकत्वात्, सान्नाय्यस्य धर्मः पशुः सान्नाय्य एव पशुः, द्रवति गच्छतीति द्रवो द्रव्यं द्रवत्वं पयसि प्रत्यासन्नम् । जातौ शक्तिः अतः सान्नाय्यद्रव्यमेव पुरोडाशः पशुपुरोडाशेन शब्देन गृह्यते, अनुष्ठानसन्निधिप्रमाणबलात् , बलिष्ठप्रकरणस्यापि स्थानाग्रे निर्बलत्वात् , अनुष्ठानबलात् चोदकप्राप्तधर्मैः सान्नाय्यधर्मैः सान्नाय्येऽतिदिष्टैरुपाकरणपर्यग्निकरणाद्यैरेव सान्नाय्ये केन किं कथमित्याकांक्षयाऽनुष्ठानात्मकस्थानप्रमाणबलेनोपस्थितं सान्नाय्यपश्वपूर्वं भाव्यत्वेन सम्बध्यते, एतत्सर्वप्रदर्शनार्थमाह—**औपवसथ्येऽह्नीति** ।

शाबरभाष्यमप्येतदेवाऽऽह—अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितोऽग्नीषोमीयं पशुमालभते, तत्र सन्देहः—किं पशुः पुरोडाशविकारः, उत सान्नाय्यविकारः ?, किं प्राप्तम् ?, पशुः पुरोडाश एव विकारः, कुतः ?, देवतासामान्यात् , अग्नीषोमीयः, पशुः, पुरोडाशोऽपि तद्दैवत्य एव, प्रोक्षणं पुरोडाशपशुधर्मः पशौ दर्शयति, अद्भ्यस्त्वौषधिभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्षति । पर्यग्निकरणमपि पुरोडाशधर्मः, तदपि पशौ दृश्यते, आहवनीयादुल्मुकेन पशुं पर्यग्निकरोतीति, तस्मात्पुरोडाशविकारः । सान्नाय्यं वा पशुः विकुर्यात् , न तु पुरोडाशं, कुतः, तत्प्रभवत्वात् , पशुतः सान्नाय्यं प्रभवति, पशुश्च । तन्मिथः प्रत्यासन्नम् , प्रत्यासत्तिश्च लिंगम् , हविःसामान्यं च देवतासामान्याद्बलीयः, तस्य सान्नाय्यस्य यत्पात्रमुखा सा पशौ दृश्यते, यदि पशुः उखायां पचेत् ,। अतः बलिष्ठमपि प्रकरणम् अनुष्ठानसन्निध्यग्रे निर्बलम् ।: तदाह—**औपवसथ्येऽह्नीति** ॥

सोमयागांऽगभूतः तदंगभूतः तदंगमध्ये पठितः प्रकृतिभूतः अग्नीषोमीयो निरूढपशुयागः । सोमयागीयपश्वंगधर्माः सर्वेऽग्नीषोमीयेऽतिदिश्यन्ते । पशुः छागः । पशुयागो वपादुदयाद्यंगद्वारा, न तु साक्षात् । इन्द्राग्नीसूर्यप्रजापतयो देवताः. होमकाले पुरोऽनुवाक्याः याज्याः प्रैषाश्च मन्त्राः पठ्यन्ते । तत्राऽऽदौ

वैष्णवेष्टिः, आहवनीये एका यूपाहुतिः, पलाशखदिरबिल्वरोहितान्यतम-
वृक्षशाखास्कन्धश्छिन्नो यूपः स्तम्भो ऊर्ध्वबाहुयजमानोच्छ्रायः। तत्र भूभावे-
काऽऽहुतिः, यज्ञभूमौ अरत्निमात्रं मूलभागमुत्सृज्याऽष्टकोणतक्षणं, प्राथमिक-
शकलस्ययस्य होमः, वेद्यामत्राऽग्निप्रणयनम्, जुह्वा आज्यहोमः, आहवनीयो-
ऽग्निरेव प्रणयनाद् गार्हपत्यः। ततो यूपनिखननम् अवटम्, कुशत्रिसररज्ज्वा-
वेष्टनम्, इदं त्रिवृत्करणम्, पशोरुपाकरणं स्पर्शनम्, प्रैषश्रवणम्. अरण्या-
ऽग्नेराहवनीयेऽपूर्वार्थं प्रक्षेपः, यूपे रशनया पशुबन्धनम् अनुबन्ध्यम्। दश-
प्रयाजाऽनुष्ठानम् याज्योच्चारणम्, औदुम्बरदण्डधारणं, वपोद्धरणानन्तर-
मेकः प्रयाजः स्यात्। पर्यग्निकरणम्, पशुनिपातनं संज्ञपनम्, अग्निहोत्रे
प्रायश्चित्तहोमाः। श्वेतरक्तवपाश्रपणम्, अन्तिमप्रयाजाऽनुष्ठानम्, वपा-
हवनम्, हस्तप्रक्षालनम्, पशुपुरोडाशयागः पौर्णमासीयाऽग्नीषोमीयपुरो-
डाशवत्। पशुहृदयादीनां शामित्रेऽग्नौ मृद्भाण्डे पाचनम्। एकादशांगानि—
हृदयं, जिह्वा, वक्षः, यकृत्, वृक्यौ, सव्यबाहुमूलम्, पार्श्वद्वयम्, दक्षिण-
श्रोणिः, गुदस्य तृतीयांशः इडाभक्षणम्, पक्वांगानां हवनम्, मेदस्य वसा-
याश्च हवनम्, हृदयाद्याहुतयः, नारिष्ठहोमाः, पृषदाज्यं वनस्पतये तदाज्य-
दधिनी। स्विष्टकृदर्थं स्विष्टकृतेऽगानां होमः, गुदकाण्डैकादशहोमाः, पुच्छेन
पत्नीसंयाजाः, यूपमुपस्थाप्य कर्मसमापनम्। अत्र निरूढपशुयागे तदवान्तर-
विस्तारस्तच्छ्रौतसूत्रादिभ्यो ज्ञातव्यो भवति॥ अत्र आश्विनग्रहणं त्रिवृता
रश्मिना यूपपरिवयनम् आग्नेयपशूपाकरणं समानदिने एव दर्शितम्, तदेतत्
निरूढपशुबन्धयागो दार्शिकपशुयागेविकृतिभूतः, तदीयधर्माणामत्र ग्रहणम्॥

**अथ वैश्वदेवपर्व**—क्षत्रियेण राजसूयप्रयोगमध्येऽनुष्ठेयानि राजसूयाऽन्त-
र्गतानि चातुर्मास्यानि पर्वाणि अग्निहोत्रदर्शपूर्णमासवन्नित्यानि प्रतिसम्वत्सर-
मनुष्ठेयानि भवन्ति—

चातुर्मास्ययजनानि चत्वारि पर्वाणि—वैश्वदेवः, वरुणप्रघासः, साक-
मेधाः, शुनासीरीयश्च। पर्वसु पौर्णमासीष्वनुष्ठेयत्वात्ते पर्वयागाः, तत्राऽन्वा-
रम्भणीयेष्टिः, वैश्वानरपार्जन्येष्टिर्वाऽनुष्ठातव्या। द्वादशकपालः पुरोडाश-
श्चरुश्च द्रव्यम्। वैश्वानरः पर्जन्यश्च देवते। श्वःप्रात.—अष्टौ यागाः—
१. आग्नेयः, २. सौम्यः, ३. सावित्रः, ४. सारस्वतः, ५ पौष्णः, ६. मारुतः,
७. वैश्वदेवः, ८. द्यावापृथिव्यः। आमिक्षाद्रव्यं तप्ते पयसि दधिमिश्रणम्।
कठिनमामिक्षा, द्रवो वाजिनम्। व्रीहियवपुरोडाशः। चरुक्षपणम्, नव-
प्रयाजार्थमाज्यम्, नवाऽनुयाजार्थमाज्यदधनी पृषदाज्यम्। आघारणम्।
अरण्यग्निमथनम्। आहवनीये तदाधानम्। ततः प्रयाजाः प्रधानयागाः।

ततश्चतुर्भिः मधुः, माधवः, शुक्रः, शुचिः, इतिमासनामभिरेककपालपुरोडाशमभित आज्येन होमः। हविराज्यहोमः, वाजिनस्रवणं, बर्हिसमित्प्रदानं, शेषहविर्भक्षणम् । यजमानस्य वपनम् । वैश्वदेवेऽन्येऽपि राजसूयेष्टिधर्मा अनुष्ठेया भवन्तीति ॥

**अथ वरुणप्रघासपर्व**—अत्र खर्जुरशमीपत्रपिष्टकृतौ मेषीमेषौ पचेत्। यजमानपत्नी स्वजारान् प्रकाशयेत्, तेन निष्पापा भवति। आग्नेयाद्या यागाः, मेषाऽऽमिक्षायागः, व्रीहिपुरोडाशः। शिरसि शूर्पं निधाय होमः। आग्नेयैन्द्राग्नीपर्यन्ता यागाः । अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, मरुतः, वरुणः, कः. इति देवताः । नभः नभस्यः इषः ऊर्जः इतिमासनामभिर्हवनानि। स्विष्टकृदिडाभक्षणाऽनुयाजवाजिनेज्यादिविधानम् , अवभृथेष्ट्याऽवभृथस्नानम्, तत् नातिविस्तरं सोमयागान्ते कर्तव्यम् । प्रकृतीष्टिः, वपनम्, नियमधारणं चेति अन्यान्यप्यनुष्ठानानि सन्ति ॥

**अथ साकमेधपर्व**—दिनद्वयानुष्ठेयम् , चत्वारि कर्माणि—अनीकवत्यादय इष्टयः, महाहवींषि, पितृयज्ञः, त्र्यम्बकहवींषि च । प्रातरग्निहोत्रम् , अनीकवतीष्टिः, पुरोडाशो द्रव्यम् । मध्याह्ने सान्तपनीष्टिः, चरुर्द्रव्यम् । सायं गृहमेधीयेष्टिः, दुग्धपक्वश्चरुः । दुग्धौदनपाकः,—दम्पतीभोजनम् । आघारप्रयाजाऽनुयाजसामिधेनीनामंगानामनुष्ठानम् । आज्यभागौ हविः । स्विष्टकृद् यागः। हुतौदनभक्षणम्। वृषभक्रोडनेष्टिः। सप्तकपालः पुरोडाशः। मरुतो देवताः । अन्यत्सर्वं यथापूर्ववत् ॥

अथ साकमेधान्तर्गतानि **महाहवींषि**—अष्टौ यागाः, आग्नेयादिपञ्चकं वैश्वदेववत् कर्मदेवता अपि । ऐन्द्राग्नः, ऐन्द्रः, वैश्वकर्मणश्चेति त्रयो देवताः । गार्हपत्याऽग्नेराहवनीयकरणम् । अग्निमन्थनम् । आघाराज्यभागजेष्टयः । अष्टानां प्रधानानामनुष्ठानम् । स्विष्टकृदिडाभक्षणम् । अनुयाजादिकरणम् । वैश्वकर्मण एककपालस्याऽनुष्ठाने सहः सहस्यः तपः तपस्यः इतिमासनामानि संकीर्त्य हवनम् । महाहविःसमाप्तिः ॥ ततः—**महापितृयज्ञः**—अयं पिण्डपितृयज्ञाद्भिन्नः साकमेधाऽन्तर्गतः । वेदिः दक्षिणाऽग्नेराहवनीयकर्तव्यम् , हविस्त्रयं—षट्कपालः पुरोडाशः, धानाः, पयोमिश्रितभर्जितयवचूर्णानि च, सोमः पितृमान् , पितरो बर्हिषदः, पितरोऽग्निष्वात्ता इति देवताः । यवपिष्टानां दक्षिणाऽग्निसमीपे षट्कपालपुरोडाशश्रपणम्। यवचूर्णदुग्धमन्थनम्। शय्यापात्रादिभोजनादिकाऽपक्वान्नजलकलशादिदानानि । वेदिपरिक्रमणम् , 'आ स्वधा' 'अस्तु स्वधा' 'सोमं पितृमन्तं यज' इति प्रैषान् , तथा 'येयजामहे' 'स्वधा नमः' इति च पठेत् । द्वे द्वे पुरोऽनुवाक्ये, एकैकां याज्यां पठेत् ,

अग्निः कव्यवाहनः, स्विष्टकृद् देवता। प्रसादाऽवघ्राणनम्। वेदित्रिषेचनं, हविः—पिण्डत्रयकरणम्, पितृपितामहप्रपितामहेभ्यो दानम्। गार्हपत्योपस्थानम्, शय्योपबर्हणपात्रादिदानानि। प्राचीनाऽवीतानि विस्रस्य यज्ञोपवीतानि कृत्वा, अनुजायाविष्ट्वा निवीतं कृत्वा सूक्तवाकादि समापयेत्। पितृपिण्डयज्ञसमापनम्॥

तत्र **त्र्यम्बकहवींषि**—एकादशसंख्याकपुरोडाशकपालश्रपणम्। एकपुरोडाशस्य ईशानादिशि मूषिकाविवरमृत्सु दानम्। चतुष्पथेंऽगारेणाऽग्निप्रवर्धनम्। रुद्रहोमः, पुरोडाशानामाकाशे क्षेपः। मूते—बद्धपात्रे बद्ध्वा वृक्षस्थाणो बद्ध्वा ततो वल्मीकच्छिद्रेषु निधानम्। गृहागमनम्। घृतश्रपितचरुणा अदितिदेवताकयागकरणम्।

अथ **शुनासीरीयपर्व**—आग्नेयादयः पञ्चयागाः वैश्वदेववत्। तत्र ऐन्द्राग्नः, वैश्वदेवः, शुनासीरीयः, वायव्यः, सौर्यश्चेति। एतेऽधिकाः पञ्च यागाः। इन्द्राग्नी, विश्वेदेवाः, इन्द्रः शुनासीरः, वायुः, सूर्यश्च देवताः। द्रव्याणि पुरोडाशः, चरुः, पयश्च। नवप्रयाजाः, नवाऽनुयाजाः। अन्यत्पर्वान्तरवत्। अधिकमासः—संसर्पः, तन्नामा हविर्हवनम् एककपालम्। शुनः—इन्द्रः, सीरिः—वायुः, द्विदेवताकं तत्। अत्र सर्वाऽन्तेऽवभृथः॥

**उक्तचातुर्मास्याऽनुष्ठाने विशेषाः**—चातुर्मास्याऽनुष्ठानं सकृत्कृत्वा त्यागः, वर्षपर्यन्तं वाऽनुत्सर्गः। क्रमात् ऐष्टिकानि, पाशुकानि, सौमिकानि,—अनुष्ठानानि, क्रमात् इच्छायैष्टिकानि पशुद्रव्याणि, सोमरसश्चेति द्रव्याणि। तत्र सकृत् १. दिने विश्वदेवः, २. दिने वरुणप्रघासः, ३.-४. दिनयोः साकमेधपर्व, ५. दिने शुनासीरीयम्। पञ्च वा पशवः। एकादश प्रयाजाः, अथवा नव प्रयाजाः॥ **सौमिके**—अग्निष्टोमसंस्थाकः सोमयागः : वरुणप्रघासपर्व दिनद्वयम्। साकमेधपर्व दिनत्रयम्। दिनद्वये अग्नीष्टोमः उक्थ्यश्च। दिनत्रये अग्नीष्टोमः उक्थ्यः अतिरात्रश्च। **शुनासीरीये**—ज्योतिष्टोमः। सप्तसु दिनेषु सवनीयपशुयागाः अंगतयाऽनुष्ठेयाः। **सवनीयपशोः** आग्नेयपशूपाकरणम्, **सौत्येऽह्नि** त्रिवृता यूपं परिवीय **त्रिवृत्करणम्**। आश्विनग्रहः। प्रत्येकम् अवभृथेष्टिः सप्तधा॥

**अथ साकमेधपर्व**—अवभृथाऽन्तेऽनुबन्ध्यो दिवसः॥ सौमिकचातुर्मास्ये—१. अग्नीष्टोमः, २. उक्थ्यः, ३. अतिरात्रः, दिनत्रयम्। **आग्रयणेष्टिः** शरद्वसन्तर्वोः नवान्नैर्महोत्सवेष्टिकरणम्॥

**सोमयाग** एवाऽग्नीष्टोमसाम्ना समाप्यतेऽतोऽग्नीष्टोमः, स्तोत्रेण नाम, उक्थ्यः, अतिरात्र इत्यादीनि। द्रष्टृनाम—आंगीरसं द्विरात्रं, जनकसप्तरात्रं

कुण्डपायिनामयनमित्यादि। सोमो सोमलता तद्रसः। सोमयागार्थनिर्णीत-स्थानेऽरणीद्वयं मथित्वा गार्हपत्यायतने मथितमग्निं प्रतिष्ठापयते, ततश्चाहवनीयं प्रणीय चतुर्विंशतिहोमान् कृत्वा उत्सृज्य वह्निं, पुनः प्रणीय सप्त-होतृकहोमान् हुत्वा उत्सृज्य च तं, तत आहवनीयदीक्षणीयाऽग्नी कुर्यात्, एकादशकपालः पुरोडाशः। प्राग्वंशशालायामेव तत्र षडाहुतीः, अजिनधारणं, मेखलाबन्धनं, पत्न्याः योक्त्रबन्धनं मुञ्जीयम्। एतत्प्रथमदिनकृत्यम्। अयम् औपवसथ्येऽह्नि अग्नीषोमीयः पुरोडाशः। ततः—

द्वितीयदिने—प्रायणीयेष्टिकरणं, पथ्यादीनामाज्यं, सोमक्रयः। सोम-विक्रयिन्! क्रय्यस्ते सोम!, क्रय्यः, दशद्रव्यैः क्रीणाति। १. गौरेकहायनी, २. हिरण्यम्, ३. अजा, ४. धेनुः, ५. सवत्सा सा, ६. ऋषभः, ७. शकट-वाही अनड्वान्, ८. बालवत्सः, ९. वत्सःतरी, १०. वासः। 'गवा ते क्रीणाति, भूयो वाऽतः सोमो राजाऽर्हति। सोमशकटमादायाऽऽतिथ्येष्टिः। प्रवर्ग्याऽनुष्ठानम्, प्रवर्ग्यसंभाराः, मृद्भिः त्रिमहावीरकरणम्, प्रवर्ग्याऽनु-ष्ठानं, पशुबन्धनानि, महावीरमुखे पयःक्षेपः प्रवर्ग्यः। प्रवर्ग्यं यज्ञशिरः-सन्धानरूपम्। एतद् द्वितीयदिनकृत्यम्॥

तृतीयदिने—वेदिकरणादि। चतुर्थदिने—धिष्ण्यान् उपवपेत्। पञ्चम-दिने—सोमाभिषवकर्माणि, सवनीयहविर्निर्वापः ततोंऽशुग्रहः। तत उपांशु-ग्रहः, तत ऐन्द्रवाय्वादिग्रहाः, कच्छान् धृत्वा प्रसर्पणम्, सवनीयहविषाऽ-नुष्ठानम्, शुक्रामन्थिग्रहप्रचारः, नाराशंसहोमाः, उक्थ्यग्रहप्रचारः, एक-पर्यायः, द्विपर्यायः, त्रिपर्यायोऽपि च। इति प्रातःसवनं सर्वदिनीयम्॥

अथ माध्यन्दिनं सवनम्—महाभिषवः, ग्रहाः, इडाभक्षणान्तः, दक्षिणा-दानं, मरुत्वतीयग्रहप्रचारः, माहेन्द्रहोमः, अतिग्रहहोमः, उक्थ्यविग्रहाः॥

अथ तृतीयं सायंसवनम्—धिष्ण्यप्रज्वालनं, सवनीयकृदादिहवनं, चमस-भक्षणम्, सौम्यश्चरुः, वैश्वानरोऽग्निः, सवनीयहविरंगसमाप्तिः। इत्यादि तृतीयं सायं सवनम्॥

अथ अवभृथोत्तरम्—आनुबन्ध्यपशुयागः, वन्ध्या गौरत्र पशुः। षोडशी-संस्था तृतीया, अतिरात्रसंस्था चतुर्थी, अनुबन्ध्यास्थाने मैत्रावरुण्यामिक्षा, ता उक्ताः—सोमसंस्थाश्चतस्रः,—ताभ्य एव ग्रहचमसस्तोत्राऽऽवापोद्वापैः। संस्थास्तिस्रः,—१।२।३।४। अत्यग्निष्टोमः—५। वाजपेयः—६ : आप्तो-र्यामः—७। इतिक्रमात् पञ्चमीषष्ठीसप्तमोभिः, प्रजापतिना क्रतुना प्राप्ताः पशवः। आप्तोर्यामसंस्था क्रतुः। वाजपेये—प्राजापत्याः सवनीया दश पशवः॥

उक्तेषु आनुबन्ध्यपशुयागात् तत्पूर्वीयाऽवभृथादपि दूरपूर्वः सवनीययागः, सवनीययागादपि च दूरपूर्वः आग्नीषोमीयपशुयागः, आग्नीषोमीयपशुयागो वह्नेरवस्थापनदिने ज्योतिष्टोमे सोमयागांगमध्ये समाम्नातः, तत्र आवसथ्ये उपवसथीयदिने वह्नेः प्रणयनाऽऽहवनीयकरणगृहमध्यावस्थापनकुण्डावस्थापनादिसम्बन्धवति दिने औपवसथ्ये दिवसेऽग्नीषोमीयनामकः पशुयागः पशुपुरोडाशयागोऽनुष्ठीयते, औपवसथ्यदिनीयाऽनुष्ठाने पशुधर्मा उपाकरणपर्यग्निकरणयूपनियोजनाद्याः, एते धर्मा औपसथ्ये दिने पठन्तेऽतः औपवसथ्यदिनीयाः पशुधर्माः केन कथं किंफला इत्याकांक्षायां तच्छान्त्यर्थं पश्वपूर्वफला अनुष्ठानविषयतयाऽनुष्ठानसन्निधिप्रमाणबलेन स्मृतिविषयमुपस्थितिविषयं सन्निध्युपपन्नं पश्वपूर्वं महापूर्वार्थमिति पशुधर्माणां पश्वपूर्वभाव्यकत्वं पशुयागाऽपूर्वसाध्यकत्वं पशुयागाऽदृष्टस्य भाव्यस्य भावनाविषयस्य साधनरूपा धर्मा अनुष्ठीयन्ते साध्यं भाव्यं पश्वपूर्वं तैः क्रियते इत्येवं कैमर्थ्याकांक्षानिवृत्तिर्भवति । **सम्बध्यते**—भाव्यभावकसम्बन्धगोचरमपूर्वं भवति, भावकेन औपवसथ्यदिनीयपशुयागधर्मव्रातेनांऽगभूतेनांऽगिपशुनिष्ठं साध्यं भाव्यं पशुयागाऽपूर्वं पश्वपूर्वं जन्यते इति ।।

अथ अग्नीषोमीयो हि सान्नाय्ययागस्य या प्रकृतिः सोमयागः सः प्रकृतिर्यस्य सः तादृशो भवति । सान्नाय्यं दधिपयसी । अग्नीषोमीयो यः पशुयागः सः पयोयागस्य या प्रकृतिः सोमयागः तत्प्रकृतिर्यस्य सः तादृशोऽस्ति यद्वत् तद्वत् पशुयागोऽपि पयोयागस्य सान्नाय्यस्य या प्रकृतिः पशुर्गौः सा प्रकृतिर्यस्य पशुयागस्य पशोश्चापि तादृशः साक्षात्पशुप्रभवद्रव्यको भवतीति तद्बोधकवाक्यैः 'सान्नाय्यं वा तत्प्रभवत्वादि'त्यादिभिः प्रदर्शितैः पशुयागधर्मैः निराकांक्षत्वात् न पशुयागे प्रकरणेन तद्धर्माणां विनियोगः, किन्तु अनुष्ठानस्थानप्रमाणप्राबल्येनाऽनुष्ठानदिनीयताप्राबल्येन पशुधर्माणां पशुयागेऽङ्गत्वमिति । तदुक्तम्—औपवसथ्येऽह्नि पशुयागे पशुधर्माः पठन्ते ते पशुयागांगानि स्थानप्राबल्यात् पश्वपूर्वसाधनत्वात् भाव्यांऽपूर्वोपकारकत्वात् पश्वंगत्वमेव ।।

किञ्च—सवनीयः पशुस्तु अग्नीष्टोमसंस्थाकसोमयागे चातुर्मास्याऽनुष्ठाने शुनासीरीयपर्वणि सवनीयपशुयागः, सप्तदिनेषु सप्तपशुयागा अंगतयाऽनुष्ठेयाः कथिता, तत्र सवनीयाऽग्नेयपशूपाकरणम् 'सौत्येऽह्नि त्रिवृता रज्ज्वा कुशरज्ज्वा यूपपरिवयनं त्रिवृत्करणं चेत्यादिधर्माः तस्मिन् सौत्ये दिने कथिताः, ते धर्माः तद्दिनीयसवनीयपश्वपूर्वभाव्यकाः, औपवसथ्यपशुधर्मा न सवनीयपश्वपूर्वभाव्यकाः । न वा शुनासीरीयानुष्ठानोत्तराऽवभृथाऽनन्तराऽनुष्ठेयसाकमेधपर्वणोऽनुबन्ध्ययागस्य उदयनेष्टिकचरुपचनोत्तरप्राप्तस्याऽऽनुबन्ध्यपशुयागस्य

वन्ध्यागोपशुयागस्याऽऽनुबन्ध्यपशवपूर्वभाव्यकाः, अतिदूरस्थे आवभृथिकदिनेऽनुष्ठितत्वात् ॥ किन्तु—प्रकरणपतिताः पशुयागधर्मास्ते तत्तद्वितीयपशवंगतया पशुयागाऽपूर्वभाव्यका अनुष्ठानात्मकसन्निधिप्रमाणबलात् भवन्तीति ॥ इतिनिरुपितं स्थानप्रमाणम् ॥ अनुष्ठानसाहाय्यकस्थानेन पशुयागाऽपूर्वार्थकतदीयांगत्वविनियोगस्तद्धर्मेषु क्रियते, प्रकरणं न बाध्यते इति ॥

अथैवं स्थानस्य समाख्यातः प्रबलत्वं सार्वदिकमिति दर्शयति—**तच्चेति**। स्थानप्रमाणं समाख्यातो यौगिकशक्तितो बलवत्। स्थानविनियोगे पदार्थयोर्देशसामान्यलक्षणः सम्बन्धः प्रत्यक्षः, समाख्याविनियोगे तु सम्बन्धो न प्रत्यक्षः, पदार्थयोर्भिन्नदेशयोरप्रत्यक्षात्, न च समाख्या सम्बन्धवाचिका, यौगिकी शक्तिः समाख्या, यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धाऽवाचकत्वान्, समाख्यायाः सम्बन्धसामान्यवाचकत्वे सर्वयौगिकशब्दानां पर्यायताऽऽपद्येत, सम्बन्धविशेषवाचकत्वे तु सम्बन्धिप्रतिपत्तिमन्तरा सम्बन्धविशेषप्रतिपत्त्यनुपपत्तिः। अतः सम्बन्धिवाचकत्वं सम्बन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिरिति वाक्यार्थे शक्तिकल्पनं गौरवम्, होतृचमस इति वैदिकी समाख्याऽपि न षष्ठयर्थाऽन्वयवाचिका, नाऽप्यर्थबोधिका, तस्याः पदत्वाऽभावात्, पौरोडाशिकमित्यादौ यौगिकी साऽतिदुर्बला, लौकिकी सा पुरुषप्रतिपत्तिसापेक्षा तत्तत्काण्डगोचरा, न तु पदार्थगोचरा, काण्डगोचरत्वमपि पौरोडाशिकत्वेन, न तु काण्डत्वेन, नहि—एकहायनीशब्दो द्रव्यवाचको गोत्वेन तद्वदिति। किन्तु एकहायनीत्वेनेति। अतः स्थानविनियोगे पदार्थयोर्विशेषसम्बन्धः प्रत्यक्षप्रतिपन्नो भवति, तत्र समाख्यामुपलभ्य नूतनपदार्थसम्बन्धो यावत्कल्प्यते तावत्तु प्रत्यक्षप्रतिपन्नसम्बन्धेन मिथ आकांक्षा सिद्धयति, आकांक्षाया अभावे सम्बन्धानुपपत्तेः, यावत्कलिपतसम्बन्धेनाऽऽकांक्षा कल्प्येत तावत्तु आकांक्षया वाक्यार्थ एव विनियुज्येत, अतः आकांक्षात्मकं स्थानं यौगिकशक्त्यात्मकसमाख्यातो बलिष्ठमिति। अत एव च (३।३।१२।१४) (२७।२८) न्यायमालायां—'ननु शुन्धध्वं दैव्याय कर्मणे'तिमन्त्रः 'पौरोडाशिकमि'ति याज्ञिकैः समाख्याते काण्डे पठितः, तस्य मन्त्रस्य समाख्यया पुरोडाशकाण्डोक्तानाम् उलूखलजुह्वादीनां शोधने पवित्रीकरणेऽङ्गं स्यादिति चेन्न। स्थानेन क्रमेण सान्नायपात्रशोधनांगत्वं भवति, तथाहि—'पौरोडाशिकमि'ति समाख्यायां प्रकृतिः पुरोडाशमात्रम् अभिधत्ते, तद्धितप्रत्ययश्च पुरोडाशस्येदमिदमितिकाण्डमभिधत्ते, नहि तत्र कृत्स्नपुरोडाशपात्राणां मन्त्रसन्निधिः प्रत्यक्षो भवति, किन्तु अर्थापत्त्या कल्पितो भवति, 'यदि उक्तसन्निधिर्न स्यात् तदा शुन्धनमन्त्रप्रतिपादकग्रन्थस्य पौरोडाशिक-

समाख्या यौगिकः शब्दः । सा च द्विविधा वैदिकी लौकिकी

---

समाख्या न स्यात्' । नहि अग्न्यसन्निहितानाम् 'इषे त्वा' इत्यादिमन्त्राणाम् आग्नेयकाण्डसमाख्या भवति । तस्मात् काण्डसमाख्यया सन्निधिं परिकल्प्य कल्पितकाण्डसन्निध्यन्यथाऽनुपपत्त्या परस्पराकांक्षारूपं कृत्स्नपात्रकरणं कल्पयित्वा तद्द्वारा वाक्यं लिंगं श्रुतिं कल्पयित्वा तया श्रुत्या विनियोगः कर्तव्य इति समाख्यायाः विप्रकृष्टता दूरता । सान्नायपात्राणां कुम्भीशाखापवित्रादीनां शोधने मन्त्रसन्निधिस्तु प्रत्यक्ष एव, इध्माबर्हिःसम्पादनस्य मुष्टिनिर्वापस्य चान्तरालं सान्नायपात्राणां देश उक्तः । मन्त्रस्तु इध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्येऽनुवाके पठ्यते । तेन प्रत्यक्षसन्निधिना स्थानप्रमाणेन प्रकरणादीनां चतुर्णां कल्पनात् सन्निधिः समाख्यापेक्षया सन्निकृष्यते । ततः क्रमेण स्थानेन समाख्यां बाधित्वा 'शुन्धध्वमि'ति मन्त्रः सान्नायपात्रशोधनशेष इत्यभ्युपेतं भवति । एतदाह—**अत एवेति** । स्थानस्य समाख्यातः क्रमस्य यौगिकशक्तितो बलवत्त्वादेव हेतोः, 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनस्ये शोधनस्य मन्त्रः दधिपयोरूपसान्नाय्यद्रव्यपात्रस्यांऽगम् । इत्येवमेव सान्नाययागयोः ऐन्द्रदध्यैन्दपयसोः पात्राणां कुम्भीशाखापवित्रादीनामंगं सः शुन्धनमन्त्र इति । **पाठसादेश्यात्**—सन्निधिक्रमपाठात्, सन्निधौ च क्रमेण निकटे पाठात् । **न त्विति** । पौरोडाशिकम्—पुरोडाशस्येदमिति यौगिकशक्त्या समाख्यया न पुरोडाशस्य पात्राणाम् उलूखलजुह्वादीनामंगमिति ॥

एवं स्थानं निरूप्य समाख्यां लक्षयति—**समाख्येति** । लक्ष्यम् । यौगिकशक्तिमच्छब्दत्वं समाख्यात्वम् । ययाऽवयवार्थ एव ज्ञायते सा शक्तिर्योगः । तद्वत्पदं यौगिकम् । शब्दश्चतुर्धा शक्तः, यौगिकीशक्तिमान्, रूढिशक्तिमान्, योगरूढिशक्तिमान्, यौगिकरूढिशक्तिमान् । अध्वर्योरिदमाध्वर्यवम् । पचतीति । पाकं करोतीति पाचकः । इत्याद्यवयवशक्त्याऽर्थबोधकाः शब्दाः समाख्याः । अवयवशक्तिनिरपेक्षसमुदायशक्त्याऽर्थबोधका रूढाः गवादिशब्दाः । अवयवशक्तिविषये समुदायशक्तिरपि यत्राऽस्ति सः पंकजादिर्योगरूढः, एतस्याऽवयवशक्त्या पंकजनिकर्तृत्वेन समुदायशक्त्या पद्मत्वेन च रूपेण उभयरूपाऽवच्छिन्नतया पंकजपद्मबोधकत्वम् । यस्तु—अवयवशक्त्या रूढिशक्त्या च स्वतन्त्रार्थौ बोधयति तद् यौगिकरूढम्—उद्भित्पदम् ऊर्ध्वभेदनकर्तृतरुगुल्माद्यर्थं तथा उद्भिन्नामकं यागविशेषं च बोधयति ।

**सा चेति** । यौगिकशक्त्यात्मिका समाख्या द्विविधा—वैदिकी समाख्या वेदशब्दस्वरूपा । लौकिकी—लौकिकशब्दस्वरूपा च । **तत्रेति** । तयोर्वेद-

च । होतुश्चमसभक्षणांगत्वम् । होतृचमस इति वैदिक्या समाख्यया । अध्वर्योस्तत्तत्पदार्थाऽगत्वम्, लौकिक्या आध्वर्यवमिति समाख्ययेति संक्षेपः ॥

तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि ॥

---

लोकसमाख्ययोर्मध्ये वैदिक्या प्रमाणहेतुभूतया समाख्यया चमसभक्षणम् । 'ज्योतिष्टोमे सोमयागे श्रूयते ( ३।५।६।२१ ) 'वचनानि त्वपूर्वत्वात् तस्माद् यथोपदेशं स्युः' ( २१ ) 'अल्पं जुहोति' 'आश्विनं भक्षयन्ति' 'द्विरैन्द्रवायवस्य भक्षयन्ति' 'सदसि भक्षयन्ती'त्यादिवचनानि मध्ये मध्ये यज्ञशेषप्रसादभक्षणम् अपूर्वार्थं प्रतिपादयन्ति ।। 'प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्र उद्गातृणाम् , प्र यजमानस्य, प्रयन्तु सदस्यानाम्' इति चम्यते भक्ष्यते सोमोऽस्मिन्पात्रे इति चमसभक्षणम् , चमसप्रसादभक्षणं विहितम् ।। सुब्रह्मण्येन सहिताश्चत्वारः सामगा भक्षयेयुरिति शाबरभाष्यम् ।। 'हरिरसि हारियोजनः' ग्रहः, होतृब्रह्मादयश्चमसिनः ? चतुर्थो ग्रावस्तुतो होता, 'यथाचमसमन्यांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते'इति—मन्त्रस्थेन 'अथ'-शब्देन एवकारेण च ग्रावस्तुतोऽपि भक्षः उक्तः ।। 'वषट्कर्तुः प्रथमभक्षः' वषट्कर्ता होता, अत्र वषट्कर्तृसमाख्यया प्राथम्यविशिष्टभक्षणं विधीयते, वषट्कारस्तत्र कारणम् ।। अत्र सर्वत्र 'होतृचमसः' होतुश्चमसः, प्रैतु होतुश्चमसः'इतिसमाख्यया क्रियात्मकस्य भक्षणस्य प्रधानस्य कर्मणोऽङ्गं गौणं विशेषणं शेषो होता कर्ता भवति, निष्ठत्वसम्बन्धेन होतरि स्थितं भक्षणं होतृनिष्ठभक्षणम्- , चमसकर्मकं भक्षणम् , होतृवृत्तिश्चमसभक्षणो व्यापार इति होता भवति चमसभक्षणांऽगं समाख्ययेति ।

अथ अध्वर्युः—यजुर्मन्त्रज्ञाता, 'हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ती'ति श्रूयते, तत्र उत्तरवेद्याः पश्चिमे, सदसः पूर्वे, मण्डपेऽभिषवः, उत्तरवेद्यां होमः, सदसि भक्षणमि'ति, एवंविधवचनान्तरप्राप्तयोरविधेययोरभिषवहोमयोर्निमित्तमात्रत्वेनाऽपूर्वं भक्षणं विधीयते, अतः स्थानादिवत् अभिषवहोमयोरपि समाख्यावत् चमसभक्षणे हेतुत्वं भवति त्रिसमुच्चयो हेतुरिति । अध्वर्योरिदं कर्म आध्वर्यवम् , अध्वर्युणा मन्त्रार्था विनियोज्यन्ते, पदार्थाः वस्तूनि स्थल्यो भूमयः दिक्प्रदेशाश्चाऽध्वर्युणा निर्दिश्यन्ते, लौकिकशब्दैः 'पूर्वे पश्चिमे उत्तरे' इत्यादिभिः समाख्याभिः, 'अभिषवः होमः भक्षणमि'त्यादिभिश्च स्वोच्चरित-शब्दात्मकसमाख्याभिः, आध्वर्यवम्—इतिलौकिक्या यौगिकशक्त्या समा-

एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य 'दर्शपूर्ण-

---

ख्यया पदार्था निर्दिश्यन्तेऽतस्तत्तत्पदार्थान् प्रतिरध्वर्युः शेषोंऽगम् 'पुरोऽध्वर्युः विभजति' इत्यादिना यजुर्वेदेन विहितानां पदार्थानां यथाविनियोजनार्थं विभागकर्ताऽध्वर्युः विनियोज्यपदार्थानामंगं भवति समाख्याप्रमाणेनेति। ततोऽपि 'एकस्मिन्पात्रे बहूनां भक्षणम्, 'होतुर्वषट्कर्तुः प्रथमं भक्षणम्; अनुज्ञाया आवश्यकत्वम्, न्यूनाऽधिकपरिहारनिमित्तमेकपात्रिणामनुज्ञापनम्, 'यजमानेन यष्टव्यं भक्षितव्यं च' 'राज्ञा वटांकुरसोमद्रव्यं भक्षितव्यं च, दशपेये दशदशैकं चमसमनुसर्पन्ति, प्रतिचमसं दशसंख्या, अतः शतं ब्राह्मणाः पिबन्तीति ब्राह्मणा भक्षपानाऽङ्गमिति विस्तरेण विचारितम्। तदपेक्षयाऽत्र समाख्याया अवगत्यर्थमात्रोदाहरणं विनियुक्तमित्यभिप्रायेणोक्तं—**संक्षेपः**। विस्तरस्तु शाबरभाष्यादवलोकनीयः॥

विनियोगविधौ तत्तदंगत्वविनियोगे सहायकराणि अंगत्वप्रमाकरणानि श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानामानि विभक्तिश्रवण, रूढिशक्ति, वाक्यविशेषो, भयाकांक्षा, पाठानुष्ठानक्रम, यौगिकशक्त्यपरनामधेयानि मीमांसकीयवैदिकादिपदार्थांऽगांऽगिभावप्रमाकरणानि निरूपितानि स्वरूपतो लक्षणत उदाहरणतश्च विनियुक्तानि श्रुत्याद्यभिधानानि षट्संख्यकमुख्य-प्रमाणानि बलाऽबलभावेन सार्थकीकृत्य शिक्षितानीति यावत्। विनियोग-विधिसाहाय्यप्रदप्रमाणत्वं श्रुत्यादिषट्त्वान्यतमत्वव्याप्तमिति चापि निर्णी-तम्। विनियोगस्तु—यथासंभवमेकस्य द्वयोर्द्वयोस्त्रयाणां त्रयाणां चतुर्णां चतुर्णां पञ्चानामपि उत्तरोत्तरबलवतामपि च भाष्ये न्यायमालायां च तन्त्र-वार्तिके ( ३।३।७।१४ ) बहुत्र चापि स्पष्टीकृतः॥

विनियोगविधिबोधितांऽगानि वक्तुमुपक्रमते—**एतत्सहकृतेनेति**। श्रुत्यादि-षट्प्रमाणैः सहकृतेन विनियोगविधिना 'समिधो यजति, दध्ना जुहोती'त्यादि-प्रोक्तसमिदाद्यंगैरपूर्वद्वारोपकृत्याऽपूर्वोत्पादनद्वारोपसहायीविधाय 'दर्शपूर्ण-मासाभ्यां यजेते'तिस्वरूपेण विनियोगविधिना यानि यानि अंगानि विनि-योज्यन्ते तानि तान्यंगानि विनियोगविधेः स्वरूपाणि। तान्यंगानि सिद्ध-रूपाणि क्रियारूपाणि च। तयोर्मध्ये सिद्धमेव स्वभावतो रूपं स्वरूपं येषा-न्तानि, जातिः सिद्धा पशुत्वादिः, द्रव्यं श्रुतिसिद्धं व्रीह्यादि, संख्या सिद्धा एकत्वाद्या, आदिना तत्संसर्गाश्च सिद्धाः, तानि च यागस्वरूपोपकारकाणि, तान्विना द्रव्यदेवतात्मकयागस्वरूपं न पूर्येत खण्डितमेव तिष्ठेत्, तानि च दृष्टा दृग्विषयाः प्रत्यक्षाः ये येऽर्था अंगिनो यागाः, जात्याद्यवच्छिन्नाः पदार्थाः, वस्तूनि क्रियाऽनुष्ठानानि च तत्प्रयोजनकान्येव भवन्ति; दृष्टफल-

मासाभ्यां यजेते'त्येवंरूपेण यानि विनियोज्यन्ते तान्यङ्गानि द्वि-विधानि-सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धानि जातिद्रव्य-संख्यादीनि, तानि च दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि—गुणकर्माणि प्रधानकर्माणि च। एतान्येव सन्निपत्योपकारकाणि, आरादुपकारकाणि चोच्यन्ते। कर्मांगद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथाऽवघातप्रोक्षणादि। तच्च दृष्टार्थं दृष्टाऽदृष्टार्थं

---

कानि भवन्ति। अथ क्रियारूपाण्यंगान्याह—**क्रियारूपाणि द्विविधानीति**। क्रिया कर्म व्यापारसंस्कारात्मकम्, तद् गौणं प्रधानं च, गुणस्य कर्मांगस्य द्रव्यादेः संस्कारकराणि क्रियाविशेषणरूपाणि गुणकर्माणि व्रीहीणामवघाता-दीनि। अथ प्रधानस्य फलाऽपूर्वस्योपकारकाणि यानि यानि तानि प्रधान-कर्माणि प्रयाजाऽनुयाजादीनि। एतानि दृष्टार्थानि संस्कारकराणि अपूर्व-कराणि च सर्वाण्यपि अंगानि तत्र कानिचित् सन्निपत्य एकत्रीभूय सद्वारकाणि उपकारकाणि भवन्ति, कानिचित्तु आरात्साक्षादेवाऽद्वारकाण्येव समीपेऽतिनिकटे सम्मील्य उपकारकाणि भवन्ति। सन्निपत्योपकारकाणि दर्शयितुं लक्षणमाह—**कर्मांगेति**। यानि चांऽगानि साक्षात्परम्परया वा विहितफलानां साधनरूपयागस्य शरीरं व्यूहं निष्पाद्य शरीरद्वारा तदुत्पत्त्य-पूर्वोपयोगीनि भवन्ति तानि अंगानि सन्निपत्य, पतित्वा पतित्वा सम्मील्य सम्मील्य एकेन सह द्वितीयं मिलित्वा मिलित्वा द्रव्यं देवतामुद्दिश्योद्दिश्य विधीयमानानि उपयोगीनि भवन्ति तानि सन्निपत्योपकारकाणि बोध्यानि। अवघातप्रोक्षणादीनि अंगानि कर्माणि व्रीहिषु कृतानि स्वल्पाऽपूर्वमुत्पाद्य 'व्रीहिभिर्यजेते'ति व्रीहिद्रव्यसम्पाद्ययागस्य यजनकाण्डात्मकं शरीरं स्वरूपं निष्पाद्य तत्स्वरूपद्वारा मध्योत्पत्त्यपूर्वोपयोगीनि भवन्ति तानि स्वल्पाऽपूर्व-द्वारकोपयोगवन्ति भवन्तीति। सर्वकर्माणि क्रियारूपाणि। गुणकर्माणि अवघातादीनि, प्रधानकर्माणि प्रयाजादीनि, सन्निपत्योपकारकाणि अवघातादीनि, आरादुपकारकाणि प्रयाजादीनि, तथा च **तच्चेति** सन्निपत्योपकारकं कर्म **दृष्टार्थम्**, अवघातादि वितुषीकरणार्थम्। अवघातादेस्तुषविमोकादिरूपदृष्टद्वारा यागस्वरूपतदुत्पत्त्यपूर्वहेतुत्वात् **अदृष्टार्थं** प्रोक्षणादि, प्रोक्षणं विना व्रीहीणामशुद्धत्वेन अपूर्वोत्पादने उप-कारकत्वं न स्यादतः प्रोक्षितव्रीहीणामेवाऽपूर्वोत्पादत्वमित्येवम् अपूर्वार्थ-त्वम् अदृष्टार्थत्वम्। प्रोक्षणादेः व्रीहिगतसंस्काररूपाऽतिशयाऽदृष्टद्वारा प्रधानयागोत्पत्त्यपूर्वहेतुत्वात्। प्रोक्षणं विनाऽपि व्रीहिभिर्यागात्मकदृष्टस्वरूपं

चेति। तत्र दृष्टार्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टाऽदृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांऽशेनैव अदृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति ॥

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम्। यथा प्रयाजादि। आरादुपकारकं च परमाऽपूर्वोत्पत्तावेवोपयुज्यते।

---

तु कर्तुं शक्यम्, परन्तु अदृष्टं यदपूर्वं तदुत्पत्त्युपकारकम् अप्रोक्षणं न स्यात्, प्रोक्षणमेवाऽपूर्वोपकारकं स्यात्. अतः केवलाऽदृष्टार्थं प्रोक्षणं भवति। अथ **दृष्टाऽदृष्टार्थमाह—पशुपुरोडाशादि**। पशुपुरोडाशांऽशो यागश्च। **तद्धि**—दृष्टाऽदृष्टार्थं हि पुरोडाशात्मकस्य द्रव्यस्य वह्नौ देवतार्थं त्यागेन हवनेनाऽर्पणेन, त्यागांऽशेनैव कर्मणा। **अदृष्टं**—यागोत्पत्त्यपूर्वं, यागोत्पत्त्यपूर्वद्वारा च फलाऽपूर्वं जनयति ॥ **देवतोद्देशेनेति**। देवतामुद्दिश्य त्यागो भवतीति देवतोद्देशो नामग्रहणं देवतास्मरणं देवतास्वरूपस्फुरणं देवतामानसदर्शनं दृष्टं मन्यते, देवतामानसदर्शनं दष्टमपि करोति पशुपुरोडाशयागादिकर्मेति ॥

अथाऽऽरादुपकारकाणि दर्शयति—**द्रव्याद्यनुद्दिश्येति**। द्रव्यं यागं चाऽनुद्दिश्य, केवलं—द्रव्ययागाद्युद्देशरहितं, विधीयमानंविधिनाऽनुष्ठानार्थमुपश्राव्यमाणं कर्म, यथा प्रयाजाऽऽज्यभागाऽनुयाजादिस्वरूपं कर्म आरादुपकारकं साक्षादुपकारकम् अंगियागोपकारकं भवति, आत्मसमवेताऽपूर्वजनकानि आरादुपकारकाणि। प्रयाजाऽऽज्यभागाऽनुयाजाद्या आरादुपकारकाः परमाऽपूर्वोत्पत्तावेवोपकारिणः, ते द्रव्यदेवतागतसंस्कारजनका न, सन्निपत्योपकारकाणां तु द्रव्यदेवतासंस्कारद्वारा यागोत्पत्त्यपूर्वोपकारकत्वं भवति, व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिर्वर्तकत्वं न तु यागशरीरतदुत्पत्त्यपूर्वजनकत्वम्। याज्यानुवाक्यादेर्देवतासंस्कारद्वारा यागोत्पत्त्यपूर्वादावुपयोगित्वं देवतायाश्च साक्षाद् यागशरीरनिर्वर्तकत्वं यागद्वारा च यागोत्पत्त्यपूर्वनिष्पादकत्वमिति। यागो हि देवतोद्देशेन द्रव्यत्यागस्वरूपः, अतो द्रव्यदेवते यागस्वरूपे इति। प्रयाजोऽत्र पञ्च प्रयाजास्तत्प्रकरणपठिताः पञ्च प्रयाजा नामभिस्ते।

समित् तनूनपात्, इट्, बर्हिः, स्वाहाकार इति। देवता अपि तन्नामानः, पञ्चमस्य स्विष्टकृत्, आज्यभागः प्रयाजः, अनुयाजश्च देवताः। 'समिधो यजे'तिप्रथमप्रैषः, 'यज'इति चत्वारः प्रैषाः, प्रतियाजम्, आश्रावणं,

**सन्निपत्योपकारकं तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते। इदमेव चाश्रयिकर्मेत्युच्यते। तदेवं निरूपितः संक्षेपतो विनियोगविधिः॥**

---

प्रत्याश्रावणं, प्रैषदानं, याज्यापाठाश्च भवन्ति, याज्याया अन्ते वषट्कारे उक्ते आहवनीये होमा भवन्ति। 'ये यजामहे' इति याज्यापाठः, यजति—चोदिता होमाः (का० श्रौ० १,२,५।६।७) प्रोक्ताः। पञ्चप्रयाजान् हुत्वा जुह्वाऽऽज्येन पुरोडाशाऽवधारणम्। ततो याज्यापुरोवाक्योच्चारणेऽग्निदेवतायै सोमदेवतायै आज्यभागं जुहुयात्। प्रयाजोत्तरं प्रधानयागानुष्ठानम्, अध्वर्युरग्नौ हविर्जुहुयात्, पुरोडाशखण्डं जुह्वाऽग्नौ प्रक्षिप्याऽऽज्यम् अवश्च्योतयेत्। तत उपांशुयाजनामकं यागमनुतिष्ठेत्, आज्यं द्रव्यं, विष्णुः प्रजापतिः, अग्नीषोमौ च देवताः, याज्यापुरोनुवाक्ययोरुपांश्वेव पाठः। अग्नीषोमदेवताकं प्रैषादिकमनुष्ठाय पुरोडाशखण्डमग्नीषोमाभ्यां जुहुयात्। 'अग्नये इदं न मम' इत्युच्चारयेत्। ततोऽध्वर्युः पार्वणं होमं जुहुयात्। तत्र पूर्णमासो देवता। ततो नारिष्ठसंज्ञकहोमान् जुहुयात्। ततोऽग्नये स्विष्टकृते जुहुयात्।

तत्र प्रयाजानाम् प्रधानयागे आरादुपकारकत्वम्। **इदमेवेति**। सन्निपत्योपकारकमेव—**आश्रितकर्म** इत्युच्यते, न तु आरादुपकारकमाश्रयि, कुतः?, द्रव्यदेवतादिरूपः आश्रयो विषयतयाऽवलम्बनमस्त्यस्येत्याश्रयि, सामवायिकं कर्मेति तदेव। समवायमाप्नुवत् द्रव्यदेवतादिसमवायवत् सामवायिकम्, आरादुपकारकं तु न तथाऽऽश्रयवत् न च समवायवत्, पारम्परिकसद्वारकं सामवायिकम्, इति परिभाषया पारिभाषिकी संज्ञाऽऽश्रयिकर्मेति॥

यद्वा प्रकारान्तरेण कर्म द्विविधम्—अर्थकर्म, गुणकर्म च, तत्र आत्मसमवेताऽपूर्वजनकं कर्म अर्थकर्म, यथा अग्निहोत्रं दर्शपूर्णमासौ प्रयाजा अनुयाजाश्च, तेषामात्मगताऽपूर्वजनकत्वम्। द्रव्यादिसंस्कारजनकं गुणकर्म, एतदेव सन्निपत्योपकारकम्, एतद् द्रव्यादिसंस्कारजनकम् उपयोक्ष्यमाणसंस्कारजनकं तथा उपयुक्तसंस्कारजनकं चेति द्वेधा। तत्राऽवघातप्रोक्षणादिकम् उपयोक्ष्यमाणसंस्कारकं, यागे व्रीहीणामुपयोक्ष्यमाणत्वात्। चात्वालकृष्णविषाणप्रासनेडाभक्षणादिकम् उपयुक्तकृष्णविषाणपुरोडाशादिसंस्कारकम् उपयुक्तसंस्कारकं भवति। एतत् प्रतिपत्तिकर्माऽप्युच्यते। उपयोक्ष्यमाणसंस्कारभिन्नसंस्कारकर्मत्वं प्रतिपत्तिकर्मत्वम्। प्रतिपत्तिः प्राप्तिः प्रक्षेपः। प्रतिपत्तिकर्म नाम उपयुक्तस्य आकीर्णकरस्याऽवशिष्यमाणद्रव्यादेर्विहितदेशे स्थले आश्रये संस्कारविशेषहेतुः प्रक्षेपः, प्रक्षेपकर्म

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चांऽगवाक्यैक-वाक्यतापन्नः प्रधानविधिरेव ।

---

प्रतिपत्तिकर्मेति । इडाभक्षणं प्रधानयागोपयुक्ताऽऽकीर्णकरपुरोडाशद्रव्य-प्रक्षेपात्मकत्वात् प्रतिपत्तिकर्म । 'नीतासु दक्षिणासु चात्वाले गर्ते कृष्ण-विषाणं प्रास्यति, कृष्णविषाणया कण्डूयती'ति तृतीयाश्रुत्या यजमानशिरः-कण्डूतावुपयुक्तस्य कृष्णविषाणस्य प्रतिपत्त्यपेक्षावत्त्वं, चात्वाले एव प्रासनमिति नियमस्य वैधत्वेन नियमाऽपूर्ववत्त्वेन प्रासनं प्रतिपत्तिकर्मेति । उपयुक्तसंस्कारार्थं च उपयोक्ष्यमाणसंस्काराद् दुर्बलम् , सन्निपत्योपकारकम् आराद्उपकारकाद् बलीयः । सन्निपत्योपकारकम् अंगांगम् , आरादुपकारकं साक्षात्प्रधानांगम् । कार्यपरो हि विधिः, कार्यैकदर्शी पुरुष इव कार्यदेशे किञ्चिद् अकरिष्यतः स्थितिं न सहते, अयं स्वयमकुर्वाणोऽकरिष्यन् वा देशमिममाकीर्णं कुर्वन् व्याप्नुवन् कार्यकारिणां सञ्चारादावन्तरायो भवतीति मन्यमानस्तस्य ततोऽपसारणमीहते, अतो निर्वर्तितकार्यस्य कार्यदेशादप-सारणानुकूलो व्यापारः प्रतिपत्तिकर्म । सन्निपत्योपकारके कर्मणि उपकार्यो-पकारकयोर्व्रीहिप्रोक्षणयोः सम्बन्धो वाक्यक्लृप्तः, उपकारमात्रं तु कल्प्यं भवति । आरादुपकारस्थले तु दर्शपूर्णमासयोः प्रयाजानुयाजयोः सम्बन्धः कल्प्यः उपकारोऽपि कल्प्यः, आरादुपकारस्थले प्रकरणं विनियोजकं सन्निपत्योपकारस्थले 'व्रीहीन्प्रोक्षती'तिवाक्यमेव व्रीहिपदेनाऽपूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकं भवतीति सन्निपत्योपकारकम् आरादुप-कारकाद्बलीयः ॥

द्विविधमप्यंगजातं कर्म अपूर्वप्रयुक्तमेव, अंगानां करणात्मकयागानुग्राह-कत्वात् तदर्थत्वे ज्ञाते तत्र चाऽऽनर्थक्यप्रसक्तौ तेन यागेन स्वाऽपूर्वमुपस्थाप्यते सन्निकर्षात् । सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपे उपयोगादुपत्त्यपूर्वार्थत्वम् । आरादुपकारकाणां स्वरूपेऽनुपयोगात्परमाऽपूर्वार्थ-त्वम् । उत्पत्त्यपूर्वस्य यागस्वरूपाऽनुष्ठानानन्तरमुत्पद्यमानत्वेन सन्निपत्योप-कारकाणां पूर्वांगानां यागाऽपूर्वोत्पत्तौ उपयोगः । उत्तरांऽगानां तु यागाऽपूर्व-स्थितावुपयोगः, परमाऽपूर्वस्य तु सांगप्रयोगाऽनुष्ठानानन्तरमुत्पद्यमानत्वेन सर्वेषामारादुपकारकाणां परमाऽपूर्वोत्पत्तावुपयोगः, प्रयोगबहिर्भूतस्य विहितस्य अंगस्य कर्मणस्तु परमाऽपूर्वस्थितावुपयोगः, यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा 'बृहस्पतिसवेन यजेते' ति वाजपेयोत्तरकालमंगत्वेन विहित-स्यांऽगस्य तु वाजपेयाऽपूर्वस्थितावुपयोगः । सर्वथांऽगानामपूर्वार्थत्वम् ।

**स हि साऽङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाऽभावादविलम्बाऽपरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च तदविलम्बेऽपि प्रमाणाऽभाव**

---

सन्निपत्योपकारकम् अंगांगम्। आरादुपकारकं साक्षात्प्रधानांगम्। एतत्सर्वं विस्तृतं व्यूहं संक्षिप्याऽत्रोक्तत्वात् **संक्षेपत** उक्तं इति। तदेवं-संक्षेपेणाऽभ्यासाऽऽवश्यकाऽपेक्षितस्वरूपसंकोचेनेति। निरूपितः—**जिज्ञासुज्ञानविषयीकृतः**॥

अथ प्रयोगविधिं निरूपयति—**प्रयोगप्राशुभावेति**। सांगप्रधानकर्मप्रयोगे प्राशुभावत्वस्य प्रकर्षेणाऽऽशुभावत्वस्य तात्कालिकभवनत्वस्य बोधजनकः श्रुतिप्रयोगो विधिर्विधिवाक्यं सः प्रयोगविधिः। प्रयाजाऽनुयाजाद्यंगजातवाक्यैरेकवाक्यतामापन्नः। अंगानां क्रमभावबोधकश्च विधिः प्रधानविधिरयं चतुर्थो विधिः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' तिप्रधानविधिः विधित्रयमेलनरूपो विधिरयम्। अस्यैव प्रधानविधित्वं, विधित्रयान्वितत्वं प्रधानत्वम्। **स चांगेति**। दर्शपूर्णमासादियागः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' तिविधिः- तदंगानि प्रयाजोऽनुयाजश्चेति। 'एकादश प्रयाजान् यजति' 'एकादशाऽनुयाजान् यजति' चातुर्मास्येषु 'नवप्रयाजान् यजति' 'नवाऽनुयाजान् यजति'। 'पृषदाज्येनाऽनुयाजान् यजति' इति विधयः। तादृशांगवाक्यैः सहितोऽन्वितः उपकृतः सन्नेकवाक्यतामापन्नः 'प्रयाजाद्युपकृतदर्शपूर्णमासयजनव्यापारः स्वर्गकामनिष्ठः' इत्येकवाक्यतामापन्नः' अग्निहोत्र जुहोती' त्युत्पत्तिविधिना, तथा 'दध्ना जुहोती' ति विनियोगविधिना, तथा ,यजेत स्वर्गकामः' इत्यधिकारविधिना चैकवाक्यतामापन्नः सन् प्रयोगविधिर्भवति, न तु स्वतन्त्रः कश्चिदतिरिक्तस्त्रिभिरनभिनिर्वर्त्यस्वरूपो विध्यन्तरमिति। प्रयोगविधिरेव प्रधानविधिः। **स हि सांगमिति**' सः प्रयोगविधिर्हि, साऽगं-सर्वांगं, प्रधानं कर्माऽनुष्ठापयन्-निर्वर्तयन्, तद्विलम्बे प्रमाणाऽभावात्, अविलम्बं यथा स्यात्तथा प्रयोगस्य प्रधानस्याऽनुष्ठानस्य, प्राशुभावं शैघ्र्यम् अविलम्बाऽपरपर्यायं यथा तथा विधत्ते।

ननु–'प्रयोगविधिः सांगप्रधानकर्मप्रयोगाऽविलम्बविधानकम्, विलम्बीयप्रमाणाऽभाववत्त्वात्। सम्प्रतिपन्नवत्' अत्र प्रयोगे प्रतिप्रयोगः—'प्रयोगविधिः सांगप्रधानकर्मप्रयोगविलम्बविधानकृत् तादृशाऽविलम्बविधानकृत्त्वाऽभाववत्' अविलम्बीयप्रमाणाऽभाववत्त्वात् सम्प्रतिपन्नपत्' इति प्रकरणसमतापत्त्या नैकमपि सिद्ध्येदिति शंकते—**न चेति** वाच्यमित्यन्वयः। **तदविलम्बे**-सांगप्रधानकर्मप्रयोगाऽविलम्बिविधानेऽपि, **अपिना**—तादृशविलम्बविधाने इवेति प्रतिसाध्यं समवस्थाप्य एतदीयप्रमाणाऽभावत्वं प्रकृते सम्प्रयोज्य सत्प्रतिपक्षता

**इति वाच्यम्। विलम्बे हि अंगप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः।**

---

उद्भाव्यते इति। **तन्न वाच्यम्** अंगविधिप्रधानविध्योरेकवाक्यतयाऽवगतस्याऽङ्गप्रधानयोः साहित्यस्याऽनुपपत्तेरेव तदविलम्बे प्रमाणाऽभावान्न तत्र प्रमाणाऽभाववचनं सबलम् अर्थापत्तिसिद्धम्, अर्थापत्तिं दर्शयति—**विलम्बे हीति**। हिरिति। साहित्यनिश्चयद्योतकः। अंगानि प्रयाजाऽनुयाजादीनि, प्रधानो दर्शादिः क्रतुः, विधिः, अंगविधिः, प्रधानविधिश्च एकादशप्रयाजान् यजती' त्यंगविधिः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' तिप्रधानविधिः, तयोरेकवाक्यता, 'प्रयाजाद्युपकृतद्दर्शपूर्णमासयजनव्यपारः स्वर्गकामनिष्ठ' इति। तयाऽवगतं ज्ञातं यत् ततोरंगप्रधानविध्योः साहित्यस्य कालिकादैर्घ्यस्य व्यवधानाऽनवच्छिन्नस्वरूपाऽवस्थानस्याऽनुपपत्तिः, तादृशमेकवाक्यत्वात्मकं साहित्यमनुपपद्यमानं सत् अंगप्रधानयोरविलम्बनभावं ज्ञापयती'त्यर्थापत्त्याऽविलम्बनसिद्धिः। किञ्च—अनुपलब्धिरपि प्रमाणमविलम्बे, यद्यत्र प्रयोजनान्तरं स्यादुपलभ्येत यतो नोपलभ्यते ततो नास्ति यतो नास्ति ततो नोपलभ्यते, यच्चास्ति प्रयोजनं तदंगप्रधानैकवाक्यत्वं तस्मादस्ति अंगप्रधानयोः साहित्यमिति, यदि साहित्यं न स्याद् अन्वयविलम्बः स्यात् विधेयविधानविलम्बः स्यात् अपूर्वं नोत्पद्येत। किञ्चयदि विलम्बः स्यादुपलभ्येत, नोपलभ्यतेऽतो नास्ति, असाहित्यं स्यादुपलभ्येत, एकवाक्यत्वाऽभावः स्यादुपलभ्येत, नोपलभ्यतेऽतो नास्तीति अनुपलब्ध्याऽपि विलम्बाऽभावः साहित्यमेकवाक्यता च सिद्धयति॥ अतोऽपूर्वार्थं विधानाऽविलम्बोऽन्वयाऽविलम्बः साहित्यं च सिद्धयति॥

ननु यत्राऽविलम्बाऽभावो विलम्बस्तत्रापि साहित्योपपत्तिः, अविलम्बं विनाऽपि अंगप्रधानसाहित्याऽनुपपत्तिर्न, किन्तु साहित्योपपत्तिः, तथा च सति विलम्बेऽपि साहित्योपपत्तिरिति व्यभिचारात्, अविलम्बेऽपि साहित्यानुपपत्तिः, निराकांक्षाणामनन्वितानामेकफलकत्वाऽभावानां तत्र साहित्यानंगीकारात्, इत्याशंक्य तत्र व्यभिचारं निवारयति—**विलम्बेनेति**। ह्यः पूर्वह्यश्च विलम्बेन कृतप्रातःसन्ध्ययोरियमनया सहकृतेति रात्र्यन्तरितत्वेन व्यवहाराऽदर्शनात्। न विलम्बेन क्रियमाणयोरंगप्राधानयोः पदार्थयोः साहित्यव्यवहारोऽभ्रान्तस्य भवति, परह्यःकृतमिदं ह्यःकृतेनाऽनेन सहकृतमिति मध्यरात्रिकालेन साहित्यखण्डकेन खण्डितत्वात् द्वयोः दिनद्वयप्रातःसन्ध्ययोः साहित्यव्यवहाराऽभावात्, तत्र साहित्यं नोपलभ्यतेऽतोऽनास्तीति साहित्याऽभावस्याऽनुपलब्ध्या सिद्धिः, न त्वेकवाक्यतापन्नाऽङ्गाऽङ्गिनोः, साहित्य-

विलम्बेन क्रियमाणयोः पदार्थयोरिदमनेन सहकृतमिति साहित्य-व्यवहाराऽभावात्। स चाऽविलम्बो नियते क्रमे आश्रीयमाणे भवति।

अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोग-विक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अत एवांऽगानां क्रम-

---

सत्त्वात्। अंगप्रधानयोरविलम्बोऽपि अंगप्रधाननिययक्रमसमाश्रयणे संभवति, यथा आग्नेयहविरभिघारणं, ततश्चैन्द्रदधिहविरभिघारणं, तत आग्नेययागाऽ-नुष्ठानं, तदनन्तरमैन्द्रदधियागानुष्ठानमिति नियतः क्रमः, स चाऽव्यवहित-स्वरूपलग्नतारूपः, क्षणीयं व्यवधानं विलम्बपदलक्षितमपि न सहते तादृशोऽ-विलम्बः।

**नियते**—इति। श्रुतिभिर्नियतीकृतेऽङ्गाऽङ्गिभावेनाऽपूर्वाऽपूर्वाऽभिसम्बन्ध-भावेन संसृष्टत्वभावेनाऽपृथक्लग्नतात्मकतादात्म्यभावेनाऽनुस्यूतोपादानभावेन तदविनाभूतव्याप्तिभावेन क्लृप्तस्ववस्थानीकृते। **क्रमे इति**। विततिविशेषे, पौर्वापर्ये, अव्यवहितोत्तरत्वात्मकाऽऽनन्तर्ये, क्त्वाप्रत्ययवाच्येऽर्थे संकलतात्मके 'अंगुलिभिः करतलाच्छादने क्रमे विहिते सति मुष्टिरिति सा नांऽगुलितलैक-पदार्थताभिन्ना' 'एवं चतुर्भिर्विधिभिर्विधत्ते प्रधाने विधौ स प्रधानविधिः न चतुर्विध्येकवाक्यताभिन्नः, तत्रांऽगांऽगिभावः पौर्वापर्यं क्रमः। **नियते क्रमे इति**। उक्तस्वरूपे क्रमे, **आश्रीयमाणे**—अवलम्बिते सति, गृहीते। सति, आसत्तिगोचरीकृते सति, मिथस्तद्वत्त्वे ज्ञाते सति, उत्तरत्र तादात्म्यीकृते सति। **अविलम्बो** भवति। विलम्बः क्षणव्यवधानं स्थलव्यवधानं क्रिया-व्यवधानं स्फूर्तिव्यवधानं वा, तन्नास्ति यत्र सोऽविलम्बो बोध्यः॥

क्रमाऽनंगीकारे दोषमाह—**अन्यथेति**। क्रमस्याऽनुपस्थाने, क्रमाऽस्वी-कारे, क्रमविधुरे अंगाऽङ्गिव्यूहे। पूर्वस्य पश्चिमस्थाने पश्चिमस्य पूर्वस्थाने वा योजनात् अंगतायाः प्रधानतायाश्च स्वरूपक्षत्यापत्तेः, एकवाक्यत्वाऽसिद्धौ साधनसाध्यफलादिकलापाऽऽनर्थक्येन यज्ञीयकर्मकाण्डस्य दूरोत्सारित-ताऽऽपत्तेः। क्रमाऽसत्त्वे गुणप्रधानकर्मणां विक्रमत्वाऽऽपत्तिमपि कल्पयित्वा सर्वानुष्ठानोच्छेदाऽऽपत्तिं दर्शयति—**किमेतदिति**। **किं वेति** सन्देहप्राश्निकम् उपक्रमणम्। पूर्वत उत्तरत्र वा उत्तरतः पूर्वत्र ? किंदिशी गतिः कर्तव्या ?, अंगेभ्योऽङ्गिसमभिमुख्या वांऽङ्गितोऽङ्गसमभिमुखा ?। आग्नेयहविषोरभि-घारणं किम् ऐन्द्रदधिहविरभिघारणाऽनन्तरं कर्तव्यं ?, किं वा इन्द्रदधि-हविषोऽभिघारणम् आग्नेयहविरभिघारणाऽनन्तरं कर्तव्यम् ?। इत्येवमति-

**बोधको विधिः प्रयोगविधिरित्यपि लक्षणम्। तत्र क्रमो नाम विततिविशेषः, पौर्वापर्यरूपो वा। तत्र षट्प्रमाणानि—श्रुति-अर्थ-पाठ-स्थान-मुख्यप्रवृत्त्याख्यानि ॥**

---

क्रमणमपि सन्दिह्यतेप्रयाजाद्यनन्तरं दर्शपूर्णमासानुष्ठानं? किं वा दर्शपूर्णमासानन्तरं प्रयाजाद्यनुष्ठानमित्यपि स्यात्। **एतदनन्तरम्**—ऐन्द्रदधिहविरभिघारणानन्तरम्। **एतत्कर्तव्यम्**—आग्नेयहविषोरभिघारणं कर्तव्यम्। **एतदनन्तरं वा**—आग्नेयहविरभिघारणानन्तरं, वा, किमेतद्वा,—इन्द्रदधिहविरभिघारणं वा?। अभिघारणम्—अविच्छिन्नाऽऽज्यधारा कुण्डे नैर्ऋतकोणादीशानं प्रति, वायुकोणादग्निं प्रति, तथा कुण्डपार्श्वे एककोणात् कोणान्तरं प्रति यथाविधानं तथाभिघारणम्॥ **वेति**। सन्देहे सति क्रमविक्रमप्रयोगे सति। **प्रयोगविक्षेपापत्तेः**—प्रयोगाणाम् अनुष्ठानानां सर्वेषामपि विक्षेपः उच्छेदो विनाशस्तदापत्तेः। आपत्तिः उपपत्तिविरोधिनी॥

ननु क्रमविधायकवाक्याऽभावात् किंप्रमाणकोऽयं क्रमोऽङ्गप्रधानयोरित्यत आह—**अतः प्रयोगविधिरेवेति**। अतो हेतोः, यतोऽङ्गप्रधानयोर्नियतक्रमं विनाऽविलम्बाऽपरपर्यायकप्रयोगप्राशुभावाख्याऽव्यवहितानुष्ठानं नोपपद्यतेऽतः स्वविधेयप्रयोगप्राशुभावाऽव्यवहितानुष्ठानसिद्ध्यर्थं परमाऽपूर्वतत्फलाऽवैयर्थ्यार्थं च भाविफलतत्साधनतत्साधनादिसिद्ध्यर्थं च परम्परया साक्षाच्चोभयथोपयोगिनं नियतं क्रममपि प्रयोगविधिरेव विधत्तेऽतो विधिप्रमाणक एव क्रमः।

प्रयोगविधिः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'तिप्रधानविधिरेव स्वांगानां स्वाभिमुखं स्वान्तर्गतं क्रमं निवेदयति—स क्रमोऽनैष्फल्यार्थम् अर्थात् सिद्ध्यति, प्रधानबोधकबोध्यतया सिद्ध्यति, पदार्थयोः संसर्गस्याऽऽकांक्षाभास्यस्य पदार्थसहसिद्धस्येव सिद्ध्यतीति॥ क्रमं विना तु प्रधानविशिष्टांगमिति वैपरीत्ये प्रधानतात्यागोऽप्रधानतांऽगीकृतिः, अंगत्वत्यागोऽनंगताऽङ्गीकृतिः, अंगिविशिष्टांगेन स्वर्गं साधयेदिति विपरीतार्थभावनापत्तिः, अपूर्वहान्यापत्तिश्च। एतदक्रमीयापन्नदोषनिवारणार्थं पुनरंगविशिष्टप्रधानतास्वीकारे त्यक्तप्राधान्यस्वीकृतिः, स्वीकृताऽप्राधान्यत्यागः, त्यक्तांगत्वस्वीकृतिः, स्वीकृतप्राधान्यत्यागः इतिदोषोद्भवापत्तिः, अंगविशिष्टांगिना स्वर्गं सादयेदिति पुनस्तदर्थस्वीकारानुधावनं चेति विपरीतस्य वैपरीत्यार्थाऽङ्गीकाराऽऽगमश्च स्यात्। व्यापारभेदेन विधाने वाक्यभेदापत्तिः स्यात् 'दर्शपूर्णमासाभ्यां यजेते'तिविधिना प्रयोगप्राशुभावं भावयेत्, प्रयोगप्राशु-

भावेन चाऽपूर्वं भावयेत्'। तथा 'गुणप्रधानविधिभ्यां क्रमं भावयेत् क्रमेण चाऽपूर्वं भावयेत्'। 'क्रमं भावयेत् प्राशुभावं च भावयेत्'इत्येवमेकवाक्यतापन्नस्य वाक्यभिन्नतोपतिष्ठेदिति वाक्यभेदोऽपि स्यात्। तद्वाक्यभेदादिनिरासायोक्तं—**पदार्थविशेषणतयेति**। विशेषणमेव विशिष्टांगं सत् वाक्यभेदनिरासकम्, व्यापारभेदविधानं वाक्यभेदप्रयोजकम्, विशिष्टविधानं तु वाक्यभेदप्रतिबन्धकम् , एकविशिष्टमपरं मुख्यं विशेष्यमेवाऽग्राऽग्रप्रावाहिकं भवति न तु विपरीतप्रावाहिकं, तथा च न वाक्यभेदः। क्रमनियते नोक्तदोषा नोक्तविकल्पो वाक्यभेदश्च, तेषामस्थानात्॥

पदार्थश्च क्रिया, व्यापारस्तत्र क्रमाश्रयणात्, क्रियात्वाऽनास्कन्दितोऽपि क्रमः स्वरूपतो विधियोग्यतावर्जितोऽपि क्रमः विशिष्टविधाने विशेषणस्याऽर्थाद्विधानमितिरीत्या 'दध्ना जुहोती'तिक्रियाभिन्नं दधिद्रव्यं क्रियाविशेषणं सद् विधीयते 'दधिसाधनकहोमं कुर्यादि'ति। एवम्—'अनेन क्रमेण कर्तव्यमि'ति 'एतत्पूर्वाऽपरप्रकारकक्रियाऽनुष्ठातव्ये'ति 'क्रियाविशेषणतया क्रमो विधीयतामि'ति च विधानविषयो भवत्येव। यतः प्रयोगविधिरेव पदार्थविशेषणतया पदार्थनियतक्रममपि विधत्ते, तथा च क्रमीयविशेषणतानिरूपितविशेष्यतावत्त्वं विधानीयत्वमिति विधानीयत्वं सांगप्रधानवृत्तितया विधिगोचरत्वमित्यव्याहतमिति दर्शितं—**'विधत्ते'**इत्यनेन॥

प्रयोगविधिरेव पदार्थविशेषणेऽपि प्रयोगत्वेनाऽऽपन्नस्तन्नियतक्रममपि स्वविधानविषयं विशेषणत्वावच्छिन्नतया स्वगोचरं करोतीति प्रबलहेतुना लक्षणान्तरमपि कथयति—**अत एवांऽगानामिति**। पदार्थविशेषणतया विधानविषमं क्रममपि गोचरतां नयतीति हेतोः। **अंगानां** क्रमबोधकविधित्वं प्रयोगविधित्वम्। अंगानां प्रयाजादीनां पूर्वापरत्वक्रमस्य बोधकत्वे सति प्राधान्येन विधित्वं प्रयोगविधित्वमित्यपि लक्षणं प्रयोगप्राशुभावबोधकविधित्ववत् तदितरव्यावर्तकं भवतीति। अत्र पूर्वोक्तः क्रमः स्थानमिति न, आनुष्ठानिकसादेश्यं पाठीयसादेश्यमित्यादिरूपो न, किन्तु अविच्छिन्नवृत्तित्वरूपः स्थानविलक्षणः क्रमः इति क्रमस्वरूपं दर्शयति—**तत्र क्रमो नामेति**। नामेति क्रमवाच्यं स्वरूपपरकम्। विततयो बहुविधाः, वितानत्वं तन्तुषु, आनुपूर्वीत्वं शब्देषु, अव्यवहितोत्तरत्वं सामयिकक्षणेषु, साधनसाध्यान्वयित्वं पदार्थेषु, अनुप्रविष्टत्वं कार्येषु अव्यवहितत्वं निरवकाशेषु, विततनत्वम् उत्तरोत्तरप्रवाहितकिरणेषु, अत्र तु विधेयक्रियोपयोगिक्रमोऽपेक्ष्यते, स च 'तनुविस्तारे'इतिधातोः स्त्रियां भावे क्तिन्प्रत्यये विततिरिति विततिज्ञानीयविषयतात्मकः अंगांऽगिस्वरूपेषु आस्तृतः समुदाये निर्विच्छिन्नस्तद्वत्तारूपो

तत्र क्रमपरवचनं श्रुतिः। तच्च हि द्विविधम्। केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति। तत्र वेदं कृत्वा 'वेदिं करोती'तिकेवलक्रमपरम्,

---

विशेषः, न तु सामान्यः एतादृशः क्रमोऽपेक्ष्यते, तदुक्तं—**विततिरूप इति**। अव्यवहितपंक्तिरूपो धर्मो विषयताख्यः क्वचित्प्राकट्याभिधानः, क्रमः बहुभिः कर्तृभिर्युगपत्कृतानां पदार्थानां ग्रथनविशेषोऽपेक्षितो लग्नततिरूपो धर्मः, अथवा सोऽपि न सन्तोषकारकः क्रमः, अतो लक्षणान्तरम्, **'पौर्वापर्यरूपो'** वेति प्रोक्तम्। एकसम्पन्नपदार्थान्तरं द्वितीयं सम्पाद्यं पदार्थस्वरूपं ततस्तृतीयं ततश्चतुर्थमिति तत्तत्पदार्था अनेके तत्राऽऽदितः प्रवर्तमान उत्तरोत्तराऽऽलोढः पूर्वपूर्वम् अत्यजन् उत्तरमुत्तरं गृह्णानो विकसितस्वरूपः पौर्वापर्यस्वरूपविततिरेव क्रम इतिमीमांसकाऽभिमतः ॥ अव्यवहितोत्तरत्वरूपम् आनन्तर्यम्, एकप्रतियोगिकम् एकवृत्ति च भवति, यथा 'वेदं कृत्वा वेदिं करोति'इत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणवृत्ति। वेदः—दर्भमुष्टिः। वेदिः—हविर्निधाननिखातं चतुरंगुलम्। क्रमः सर्वत्रोत्तरपदार्थाऽगम्, उत्तरपदार्थस्य 'क्वाऽहंकर्तव्य'इत्यपेक्षावान् क्रमः। न तु पूर्वपदार्थाऽगम्, मत्पूर्वपदार्थः मदुत्तरं स पदार्थः कथं कर्तव्य इत्यपेक्षाया असम्भवात्। पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणम्। प्रथमभक्षः इत्यत्र प्राथम्यं पूर्वभक्षांऽगम्, प्रथमेन क्रमेण भक्षः, इत्यत्र क्रमः पौर्वापर्यं, तत्र पूर्वपदार्थस्यांऽगं प्राथम्यम्, अपरस्यांऽगं पूर्वम्, भक्षस्यांऽगम् अपरमिति, इत्यपि कल्प्येत। तन्न। नैष्फल्यात्।

क्रमस्य नियतत्वे प्रामाणिकत्वे प्रमाणानि षडन्यतमानि वाक्यवादिभिरंगीकृतानि, क्रमीयप्रमाणत्वं श्रुत्यादिषडन्यतमत्वव्याप्तम्। श्रुत्याद्या आख्या वाचकं लक्षकं च वा यथायोग्यं स्वीकृतं भवति। वृत्त्या क्रमबोधकः क्लृप्तः शब्दः श्रुतिः क्रमे प्रमाणम्। अर्थः प्रयोजनं क्रमे प्रमाणम्। वाक्यपाठः क्रमे प्रमाणम्। उपस्थितिः स्थानं क्रमे प्रमाणम्। वाक्यपाठः क्रमे प्रमाणम्। उपस्थितिः स्थानं क्रमे प्रमाणम्। मुख्यक्रमोऽपि तदंगक्रमे प्रमाणम्। अनुष्ठानप्रवृत्तिः क्रमे प्रमाणम्। क्रमयाथार्थ्यबोधकमत्र प्रमाणमुक्तं षड्विधम्। प्रयोगविधिषु क्रमा अपेक्ष्यन्ते। तानुद्देशानुसारेण लक्षयितुमारभते—तत्र **क्रमपरवचनमिति**। तत्र—षट्प्रमाणेषु, क्रमपरवचनत्वं क्रमत्वमिति स्वस्य स्वापेक्षितत्वे स्वहानिः। अतः पौर्वापर्यात्मकः क्रमः अर्थो लक्ष्यः, क्रम इतिशब्दः स्वशक्त्या लक्षणया वाऽर्थं बोधयतीति क्रमपदवाच्यत्वं लक्षणम्, क्रमार्थबोधकपदवाच्यत्वमिति। पदानि 'अर्थ'शब्दः शक्त्या आनन्तर्यवाचकः, 'क्त्वा''ल्यबा'दिप्रत्यया 'तत'इत्यादिशब्दाश्च पूर्वकालीनार्थ-

वेदिकरणादेर्वचनान्तरप्राप्तत्वात्। 'वषट्कर्तुः प्रथमभक्ष' इति तु क्रमविशिष्टपदार्थपरम्, एकप्रसरताभंगभयेन भक्षानुवादेन क्रममात्रस्य

---

सम्बन्ध्यर्थेषु लाक्षणिकाः, प्रतियोगिपूर्वापेक्षानुरोधात् अनुयोगिपरत्रस्थक्रमे लाक्षणिकाः, अर्थेषु अनुयोग्यर्थेषु लग्नोऽन्वयः अर्थः आकांक्षाभास्यः कल्पितो भवति स च ज्ञानांकाक्षोभयविषयः तत्तच्छब्दवाच्यः तादात्म्यं संयोगः समवायः आसत्तिः योग्यता सन्निधिः विषयकत्वजनकत्वनिरूपितत्वाऽपृथक्सिद्धत्वाऽनुस्यूतत्वाऽनुप्रविष्टत्वाऽऽनन्तर्याद्याः संसर्गाः क्रमस्वरूपाः, एको द्वितीयमर्थमन्वयेनाऽऽक्रमते, आक्रमणं क्रियारूपमन्वयाऽभिन्नपदार्थ इति तत्तत्क्लृप्तशब्दवाच्यत्वं क्रमत्वमिति ॥

**श्रुतिः**—शब्दः, वचनम्; **तच्च** वचनं, द्विविधम्, तत्र **केवलक्रमपरं** वचनम्, क्रमविशिष्टपदार्थपरं च वचनमिति द्विविधम्। **तत्र वेदमिति**। क्रमपराऽर्थपरयोर्मध्ये। **वेदः**—दर्भमुष्टिविशेषः, **वेदिः**—आहवनीयगार्हपत्ययोर्मध्ये चतुरङ्गुलं निखातं भूतलं हविर्निधानस्थानविशेषरूपम्। 'वेदं कृत्वा वेदिं करोतीति दर्भमुष्टिं संक्लृप्य क्रमेण द्राङ्निखातं करोति'। अत्र वेदिकरणं 'पूर्वेद्युरमावास्यायां वेदिं करोती'ति वाक्यान्तरप्राप्तम्, दर्भमुष्टिनिर्मित्युत्तराऽव्यवहितनिखातकरणं विधीयते, क्त्वाप्रत्ययार्थः क्रमः, क्त्वावाच्यः क्रमः, उत्तराऽव्यवहितेति क्रमार्थोऽत्र। **केवलेति**। अविशिष्ट एव क्रमो निरवच्छिन्नः क्रमः, यागांऽगादिपतितं यद्विशेषणं तदादिनिरपेक्षः क्रमः, शब्दार्थस्य विशिष्टत्वेऽपि सप्रयोजनविशेषणरहितत्वात् अनुवादकमात्रवाक्यगतक्रमस्य वाक्यान्तरप्राप्तत्वादेवाऽनुवादके केनचिदपि विशेषणेनाऽनवच्छिन्न इति स केवलक्रमः। द्वितीयवचनमाह—**तद्विशिष्टपदार्थपरं चेति**। क्रमविशिष्टमर्थं बोधयति यद्वचनं तद् विशिष्टपदार्थपरं वचनम्—'प्रथमभक्ष'इति। प्रथममुदाहरति—**तत्र वेदिं कृत्वेति**। तत्र केवलविशिष्टक्रमयोर्मध्ये। केवलक्रमघटिताऽर्थः—दर्भमुष्टिविशेषकरणानन्तरचतुरंगुलनिखातकरणव्यापारवानिति। तत्र 'अनन्तरे'तिक्रमार्थः। **वेदिकरणादेरिति**। 'वेदिं करोती'तिवाक्यमनुवादकम्, कस्य ?, 'पूर्वेद्युरमावास्यायां वेदिं करोती'ति अमावास्याकालाधिकरणकवेदिविधानवाक्यस्य। अतः 'क्त्वा' केवलक्रमवाचकः, न तु क्रमविशिष्टवेदिवाचकः, वेदेरनुवादकत्वात्। दर्शपूर्णमासयोर्हविरधिवासनोत्तरं वेदिकरणविधिवाक्येन वेदिकरणस्य प्राप्तत्वात् तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रं विधीयते। क्त्वाप्रत्ययोक्तक्रमो वाक्यादेव प्रमाणात् वेदिकरणांगमिति क्रमे वेदिकरणांगत्वेनैव

**विधातुमशक्यत्वात् । सेयं श्रुतिः इतरप्रमाणाऽपेक्षया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् ।**

---

क्रमबोधकः प्रयोगविधिः 'वेदं कृत्वा वेदिं करोती'ति क्रमबोधकः प्रयोगविधिः । अथ क्रमविशिष्टपदार्थपरं वचनमुदाहरति—**वषट्कर्तुरिति** । वषट्कर्तुः 'वौषट्' इतिहोतुर्वषट्कारस्याऽन्तेऽध्वर्युर्वषट्कारोच्चारणकाले हविरग्नौ जुहुयात्, जुहूगतमाज्यम् अग्नौ स्रावयित्वा पुरोडाशखण्डं जुह्वाऽग्नौ प्रक्षिप्य तदुपरि जुह्वावशिष्टाऽऽज्यमवश्च्योतयेत् । इत्याहुतिक्रमः । तत्र कर्मसु उत्साहार्थं होत्रादिकृते चमसभक्षणं विधीयते, होत्राद्याश्चमसप्रसादभक्षकाः, प्रथमश्चमसः कस्य भक्ष ?, इति तन्निर्णयः श्रुत्या'वषट्कर्तुः प्रथमभक्षः'इति प्राथम्यक्रमविशिष्टभक्षं विधत्ते, प्रथमभक्षशब्दः प्राथम्यक्रमविशिष्टैकभक्षः इति क्रमविशिष्टभक्षपदार्थं ब्रूते—**क्रमविशिष्टपदार्थपरमिति** । प्राथम्यक्रमान्वितभक्षात्मकपदार्थपरं प्रथमभक्षपदमिति । वाक्यप्रमाणबलात् 'प्रथमभक्ष'इत्यत्र क्रमविशिष्टभक्षविधानात् भक्षस्यांऽगं प्रथमपदवाच्यक्रमः । किन्तु क्रममात्रं विधातुमशक्यम् , विशिष्टोपस्थितिरूपस्य प्राथम्यविशिष्टैकभक्षपदार्थप्रसरत्वस्य सम्पूर्णार्थस्य एकवाक्यत्वस्य एकप्रसरत्वस्य भंगप्रसंगः स्यात्, वाक्यभेदः स्यात्, 'क्रमं भावयेत्' 'क्रमेण च भक्षं भावयेदि'ति । **एकप्रसरतेति** । एकवाक्यतेत्यर्थः । **क्रमस्य** भक्षस्य चाऽनेनैवैकवाक्येन विधानोपगमे विहितभक्षानुवादेन प्रथमशब्दार्थक्रमविधाने एकवाक्यताभंगापत्तिभयं स्यात्, वाक्यमावृत्तं स्यात् तेन वाक्यद्वयं स्याद् वाक्यभेदः स्यात् एकवाक्यताभंगः स्यात् । क्रममात्रवाच्ये 'यो वषट्कर्तुर्भक्षः सः प्रथम इत्युपस्थितिः प्रथमे क्रमे स्यात्, क्रमविशिष्टभक्षोपस्थितौ तु वषट्कर्तृत्वोपाधिविशिष्टसम्बन्ध्यभिन्नः प्राथम्यविशिष्टभक्ष इति वाक्यार्थः स्यात् न तु वाक्यार्थभंगः स्यात् । एकप्रसरत्वभंगः एकोपस्थितिभंगः एकवाक्यताभंग इति । एकस्यां वृत्तौ या प्रसरता घटकता प्रविष्टता तया उद्देश्यविधेयवाचकपदयोर्भंगः उद्देश्यविधेयभावाऽप्रतीतिस्तज्जन्योऽविमृष्टविधेयांऽशो दोषस्तद्भयेन, भक्षस्याऽपि 'वषट्कर्तुः प्रथमभक्ष'इतिवाक्येनैव विधानात् क्रमस्याऽपि अनेन वाक्येन विधानात् विहितभक्षाऽनुवादत्वप्राप्त्या प्रथमशब्दोपात्तक्रमविधाने एकवाक्यत्वस्य भंगः आवृत्तिश्च कर्तव्या भवेदिति ।।

**सेयं श्रुतिरिति** । अर्थादिप्रमाणानां श्रुतिकल्पनद्वारा क्रमे प्रामाण्यात् श्रुतिः शब्दो बलवान् । धात्वर्थस्य सकृद्विधानोत्तरं पुनर्विधाने किमपि

प्रयोजनं विधेयान्तरं न भवति तत्र श्रुत्युक्तः क्रम एव विधीयते । सोमयागश्चतुर्धा—एकाहः अहीनः, साद्यस्क्रः, सत्रं चेति । सोमयागे यदा द्वादशदिनीया दीक्षा तदा द्वादशसु दिनेषु उपसदोऽनुष्ठेयाः, अहीनादौ द्वादशोपसदः, सोमयागस्य द्वित्रादिषु दिनेषु पुनः पुनरावृत्त्याऽनुष्ठानं यत्र सोऽहीनः, तत्र दशरात्रपर्यन्ता अहीनाः, एकादशद्वादशरात्रौ उभौ अहीनसत्रोभयात्मकौ । एकस्मिन्नेव दिने सोमयागानुष्ठानं यत्र सत्रे स एकाहः । सोमयागाः सरत्नसम्वत्सर-(दिन)पर्यन्ताः सत्राणि उच्यन्ते । एकस्मिन्नेव दिने संकल्पप्रभृत्यवभृथान्तमनुष्ठानं यस्य स साद्यस्क्रः सोमयाग उच्यते । सत्राणि द्विविधानि—रात्रिसत्राणि, अयनसत्राणि च । द्वादशरात्रप्रभृति—शतरात्रपर्यन्तानि रात्रिसत्राणि, ततः प्रभृत्ययनसत्राणि । सोमयागप्रकृतिरग्निष्टोमः । 'यद्देवा देवहेडनमि'त्यादिमन्त्रैर्होमाः पवित्रेष्टिर्जपास्तीर्थस्नानाद्यैर्यजमानः शुद्धो भवन् ऐन्द्राऽग्नपशुयागम् आश्विनपशुयागं कुर्यात् ततः सोमयागं कुर्यात् । वेदस्य वेद्याश्च पूर्वजत्रिपुरुषवंशीयविच्छेदे आश्विनः पशुः । चतुर्थदिने अग्नीषोमीयेण पशुयागेन सह तन्त्रेणाऽनुष्ठानम् । अनुष्ठाने इष्टिपशवोऽङ्गानि, सोमद्रव्यकयागः प्रधानः, अग्नीष्टोमाख्येन साम्ना समाप्यमानत्वात् 'अग्नीष्टोम' संज्ञः स एव । तत्र यजुषा यज्ञशरीरनिर्वर्तकान्यंगानि विधीयन्ते, ऋग्भिः विविधयाज्यापुरोनुवाक्याशस्त्रपुरोरुगादीनि विधीयन्ते, साम्नां गानमन्त्रैर्यज्ञीयदेवतास्तोत्राणि विधीयन्ते, अग्नीष्टोमाख्ये सर्वयागप्रकृतिभूतेऽस्मिन् सोमयागे द्वादशस्तोत्राणि—बहिष्पवमानम्, आज्यस्तोत्रम्, आज्यम्, आज्यम्, आज्यम्, माध्यन्दिनपवमानं, पृष्ठस्तोत्रम् , पृष्ठं, पृष्ठं, पृष्ठमिति, आर्भवपवमानम् , अग्निष्टोमस्तोत्रं चेति ॥ द्वादशशस्त्राणि—आज्यशस्त्रं, प्रउगं, मैत्रावरुणं, ब्राह्मणाच्छंसि, अच्छावाकं, वैश्वदेवम् , आग्निमारुतं चेति ॥ शस्त्रं शस्तं प्रशस्तं प्रशंसात्मकम् । शस्त्रकर्ता—होता, होता, मैत्रावरुणः ब्राह्मणाच्छंसी, अच्छावाकः, होता, होता ।, मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाकः, होता, होता । आहत्य अग्निष्टोमे द्वादशस्तोत्राणि द्वादशशस्त्राणि चत्वारः स्तोमाः, सर्वत्र स्तोमेषु प्रस्तोता, उद्गता, प्रतिहर्ता चस्तोतारः । शस्त्रेषु तु कर्तृभेदः । एवम् उक्थ्ये तृतीयसवने उक्थ्यस्तोत्रमित्यादि । अतिरात्रे षोडशिस्तोत्रं षोडशिशस्त्रमित्यादि, रात्रिपर्याये रात्रिशस्त्रमित्यादि । तृतीयपर्याये सन्धिस्तोत्रम् आश्विनशस्त्रमित्यादि । आप्तोर्यामे तृतीये पर्याये आप्तोर्यामस्तोत्रम् अश्विनशस्त्रमित्यादि । सोमरसे ग्रहचमसादिपात्रेषु गृहीते तत्तद्देवता उद्दिश्य गानयुक्तमन्त्रैः सदोमण्डपे औदुम्बर्याख्यस्थूणासमीपे उपविष्टैरुद्गातृप्रस्तोतृप्रतिहर्तृनामकैः ऋत्विग्भिः क्रियमाणाः स्तुतिविशेषाः स्तोत्राणि, स्तोत्राऽऽवृतयः

अत एवाऽऽश्विनग्रहस्य पाठक्रमात् तृतीयस्थाने ग्रहणप्रसक्तौ 'आश्विनो दशमो गृह्यते' इतिवचनाद् दशमस्थाने ग्रहणमित्युक्तम् ।

---

स्तोमाः । देवताद्रव्याणि मन्त्राद्युक्तानि । अवभृथेष्टयश्च । दानेष्टयश्च ॥ देवताभ्यो बल्यर्पणक्षणे मण्डपे तत्तद्विशेषप्रोक्तानि शस्त्राणि ।

एतादृशे द्वादशाहे सत्रात्मके । "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति ब्राह्मणाच्छंशिनं ब्रह्मणः, प्रस्तोतारम् उद्गातुः, मैत्रावरुणं मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति आग्नीध्रं ब्रह्मणः, प्रतिहर्तारम् उद्गातुः अच्छावाकं होतुः, ग्रावस्तुतं होतुः, ततस्तम् उन्नेता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः, सुब्रह्मण्यम् उद्गातुः, ग्रावस्तुतं होतुः, तमन्यो ब्राह्मणो दीक्षयति पोतारं ब्रह्मणः, सुब्रह्मण्यम् उद्गातुः, ग्रावस्तुतं होतुस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाऽऽचार्यप्रेषितः"—इतिश्रुते महावाक्ये अत्राऽतिदेशप्राप्ता दीक्षाः तत्तत्संस्काराश्च; तत्र न विधिः । प्रकृतौ सत्रे दीक्षाऽतिदेशेन यजमानसंस्कारार्था प्राप्यते, 'सत्रे च ये यजमानाः त एव ऋत्विजः'इतिवचनेन ऋत्विक्कार्योद्देशेन यजमानविधानम्, ब्रह्मादीनां यजमानरूपेण प्रतिप्रधानगुणाऽऽवृत्त्या तत्तत्संस्कारतायाः प्राप्तिः, ततः दीक्षात्मकं धात्वर्थम् अनूद्य आख्यातेन क्त्वाप्रत्ययोक्तः ततः शब्दोक्तश्च क्रमो विधीयते । अध्वर्युर्यजुर्वेदोक्तं करोति तस्य पुरुषास्त्रयः—प्रतिप्रस्थाता नेष्टा उन्नेता च, एते दीक्षयितारः । ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति तस्य पुरुषास्त्रयः—ब्राह्मणाच्छंसी, अग्नीत्, पोता च । उद्गाता उद्गानं करोति, तस्य पुरुषास्त्रयः,—प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्यश्च । होता शंसनं करोति—तस्य पुरुषास्त्रयः,—मैत्रावरुणः, अच्छावाकः, ग्रावस्तुत् च । चतुर्वर्गेषु प्रथमाः सम्पूर्णां दक्षिणां प्राप्नुवन्ति, द्वितीयास्तदर्धं प्राप्नुवन्ति, द्वितीयास्तदर्धं प्राप्नुवन्ति, तेऽर्धिनः उच्यन्ते । तृतीयास्तृतीयांऽशं प्राप्नुवन्ति ते तृतीयिनः, चतुर्थाश्चतुर्थांशं प्राप्नुवन्ति ते पादिनः । तानेतान् उक्तक्रमेण सः सः पुरुषः करोतीतिः । अतः 'ततः''क्त्वा'इत्यादिश्रुतिवाच्यः क्रमः ॥

किञ्च—अध्वर्युगणाऽऽद्यः प्रतिप्रस्थाताऽध्वर्युदीक्षायां सम्पूर्णां प्राप्नोति, नेष्टा प्रतिप्रस्थातृदीक्षायाम् अर्धं प्राप्नोति, उन्नेता नेष्टृदीक्षायां तृतीयांशं प्राप्नोति, आचार्यप्रेषितो ब्रह्मचारी उन्नेतृदीक्षायां चतुर्थांऽशं प्राप्नोति । तत्र 'इतरमन्यस्तेषां यतो विशेषः स्यादि'तिन्यायेनाऽध्वर्युपुरुषाणामाद्यः प्रतिप्रस्थातैवाऽध्वर्युदीक्षायां दक्षिणां पूर्णां प्राप्नोति । ब्राह्मणाच्छं-

यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः। यथा 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यग्निहोत्रयवागूपाकयोः। अत्र हि यवाग्वा

---

स्यादिदीक्षासु तु सत्रप्रकरणपठितेन 'न पूनः पावयेदि'तिवचनेन अध्वर्योर्दीक्षासु दीक्षाख्यसंस्काररहितपुरुषकर्तृविधायकेन तेन वचनेन पर्युदासात् प्रतिप्रस्थातृप्राप्तिः सुलभा। प्रतिप्रस्थात्रादिदीक्षासु नेष्टुः, प्रतिप्रस्थात्रनन्तरस्य नेष्ट्रादिदीक्षासु चोन्नेतुः, नेष्ट्रनन्तरस्य प्राप्तिर्न्यायादेवेति न विनेयान्तराशंका। अतः क्रम एवाऽत्राऽप्राप्तः, स एव तत्तद्दीक्षोद्देशेन विधीयते। अत एवैतानि द्वादशवाक्यानि श्रौतक्रमविधायकानि अर्धित्वाद्युद्देश्यतावच्छेदकमंगीकृत्य षडेव वा। उन्नेतृदीक्षावाक्ये तु वैकल्पिकब्रह्मचारिविधानात् हृदयाद्यवदातादिन्यायेन पाठादेव क्रमसिद्धेः 'ततः' इत्यनुवादः। निपातत्वाच्च 'वा' शब्दस्य ब्रह्मचारिविशेषणत्वेन न वाक्यभेदः, ब्राह्मणानामेवाऽऽर्त्विज्यविधानात् 'ब्राह्मण'इति चानुवादः। ब्रह्मचारिणश्चाचार्याधीनत्वस्मृतेः 'आचार्यप्रेषित' इत्यप्यनुवादः, 'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ। (याज्ञव० १।४९) 'गुरुं चैवाऽप्युपासीत स्वाध्यायार्थं समाहितः।' (याज्ञव० १।२६) 'उपासीत—तत्परिचर्यापरस्तदधीनस्तिष्ठेत्' इति मीताक्षरा। इत्याचार्याऽधीनत्वस्मृतिः। क्त्वाप्रत्ययः क्रमवाचकः। क्रम एव तत्र तत्राऽप्राप्तस्तत्तद्दीक्षोद्देशेन विधीयते 'क्त्वा'-प्रत्ययोक्तः 'तत' इतिशब्दोक्तश्च क्रमः॥

**इतरप्रमाणेति**। अर्थपाठस्थानमुख्यप्रवृत्त्याख्यक्रमार्थकप्रमाणाऽपेक्षया बलवती। क्रमसाध्ये साधकत्वस्य एकवाक्यत्वभंगाऽभावादिसाहाय्यकृतप्राबल्येन युक्ताऽस्तीति। **तेषामिति**। अर्थपाठादीनाम्, श्रुत्यात्मकवचनकल्पनद्वारा क्रमे प्रामाण्यात्। तदुदाहरति—**अत एवाऽऽश्विनग्रहस्येति**। ज्योतिष्टोमे ग्रहाः। सोमपात्राणि ग्रहाः। धाराग्रहप्रचारे स्विष्टकृदन्तमनुष्ठायाऽध्वर्युरैन्द्रवायवमैत्रावरुणाऽऽश्विनान् त्रीन् ग्रहान् प्रचरेत्। तत्र श्रूयते—'ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते'। मन्त्रकाण्डविधिकाण्डयोर्ग्रहाणामयं पाठक्रमः—'उपांशुग्रहः प्रथमः, अन्तर्यामग्रहो द्वितीयः, ऐन्द्रवायवग्रहस्तृतीयः, मैत्रावरुणग्रहश्चतुर्थः, आश्विनग्रहः, इत्यादि। ततः आश्विनो ग्रहो दशमो गृह्यते' इतिवाक्यानि। तत्र—ऐन्द्रवायवो मैत्रावरुण आश्विनश्चेत्येवम् ऐन्द्रावायवाऽपेक्षया पाठेन क्रमेण तृतीयस्थानत्वमाप्तुं गृहीतुं युक्तोऽपि प्रसक्तोऽपि पाठाऽपेक्षया 'आश्विनो दशमो गृह्यते' इतिश्रुतिशब्देनाऽऽम्नातः। **अत एवेति**। **एतदाश्विनग्रहग्रहणश्रुतिहेतुना प्रबलेन प्रमाणेन 'आश्विनः आश्विनदेवताको ग्रहः, दशमस्थाने दशमक्रमे चमसरसो द्रव्यं, घृतमपि द्रव्यं तत्र गृह्यते,**

**होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते, स चाऽयं पाठक्रमाद्बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वं च स्यात्। नहि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्टं प्रयोजनमस्ति।**

---

यवागूपाकश्चापि क्वचित्। तत्राऽग्निहोत्रहोमादनन्तरम् यवागूपाठः पठितः, किन्तु यवागूं विना यवाग्वाः पूर्वम् अग्निहोत्रमनुष्ठातुमसमर्थम्, द्रव्यमन्तरेण होमाऽभावात्, तस्मात् पाठादपि श्रुतिः प्रबला, श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः, पाठो हि न क्रमस्याऽभिधायकः, किन्तु अन्यथाऽनुपपत्त्या क्रमं कल्पयति, दशम इत्येष श्रुतिस्तु साक्षात् क्रमम् अभिधत्ते, इत्युक्तम् (५।४।१) 'आश्विनो दशमः पाकः' इति॥

अथ राजसूयेऽपि नवमः आश्विनो द्विकपालः पुरोडाशः क्रमेणोक्तः— 'द्वादशेष्टयः,—१–बार्हस्पत्यश्चरुः, २–ऐन्द्रः एकादशकपालः पुरोडाशः, ३–आदित्यश्चरुः, ४–नैर्ऋत्यश्चरुः, ५–आग्नेयोऽष्टाकपालः पुरोडाशः, ६–वारुणो दशकपालः पुरोडाशः, ७–मारुतः सप्तकपालः पुरोडाशः, ८–सावित्रो द्वादशकपालः पुरोडाशः, ९–आश्विनो द्विकपालः पुरोडाशः, १०–पौष्णश्चरुः, ११–रौद्रोऽरण्यगोधूमसम्पाद्यश्चरुः, १२–भगाय चरुरिति। तत्रापि श्रुतिवचनबलात् क्रमः॥

अथार्थक्रमं दर्शयति—**यत्र प्रयोजनवशेनेति**। यत्रार्थे, प्रयोजनाऽधीननिर्णयगोचरः क्रमः, अर्थेन प्रमाणेन क्रमः, प्रयोजननिर्धारणाविषयत्वं क्रमत्वमर्थक्रमत्वम्। प्रयोजनं फलं तस्य वशेन, तदधीनतया निर्णीतः। क्रमस्य निर्णयो निर्णीतः प्रमितः क्रमः, शाब्दविषयीकृतः क्रमः। प्रयोजनम् अनुपपद्यमानं सत् क्रमं चाऽऽक्षिपतीति, अक्रमो प्रयोजनं न सिद्ध्यति, व्युत्क्रमे प्रयोजनमिष्टमनुपपद्यमानं सत् अर्थानां व्युत्क्रमाणामपि क्रमिकत्वं सम्पादयत् स्वयं स्वरूपसत् सम्पद्यते—इत्यर्थापत्तिः प्रमाणम्। दृष्टान्तं—**यथेत्यादिना**। 'अग्निहोत्रं जुहोति' 'यवागूं पचती'तिवाक्यक्रमोऽस्ति, परं तत्र यवाग्वा प्रथमसिद्ध्या लपसीद्रव्येण होमः सिद्ध्यतीति। अग्निहोत्रयवागूपाकयोर्मध्ये। **अत्र**—यवागूहोमानुष्ठाने होमार्था यवागूरिति हि निश्चयस्तत्रानुष्ठाने, तस्या यवाग्वाः पाकः होमात्मकदृष्टप्रयोजनसम्पादकः, पक्वयवागूः होमद्रव्यमिति। वशः—अन्वयव्यतिरेकात्मको नियमः, यवागूसत्त्वेऽग्निहोत्रहोमसत्त्वं यवाग्वा अभावेऽग्निहोत्रविशेषहोमाऽभाव इति। वशो व्यतिरेकोऽन्यथाऽनुपपत्तिरूपः, अर्थक्रमेण प्रयोजनोपपत्तिर्यवागूपाकं पूर्वमाक्षिपति

**पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव**

---

**तत्पाकः होमात् पूर्वमनुष्ठीयते इति ।** यवागूपाकस्य पाठक्रमेण पश्चात्करणे पाकसंस्कृताया यवाग्वाः होमरूपप्रयोजनस्य 'यवाग्वाऽग्निहोत्रं जुहोती'ति-वचनसिद्धस्याऽनिष्पत्तेः, पाकस्य च यवागूत्पादकत्वेऽपि तस्या अनुपयुक्तायाः प्रयोजनत्वाऽनुपपत्तेः, तदन्यथाऽनुपपत्त्या पूर्वं पाकः पश्चाद्धोमोऽनुष्ठीयते । निगमयति—**स चाऽयमिति ।** सोऽर्थक्रमः पाठक्रमाद् बलवान् । आकांक्षतो योग्यता बलवतीति । पाठक्रमेण यवागूपाकस्तरलापाकः लापसीविशेषद्रव्यं तु अनुष्ठितं चोपयोगिकृतं सत् दृष्टः क्लृप्तो यो होमः तदेव प्रयोजनं फलं तस्य,—**बाधः**—साध्यत्वाभावः स्यात् साध्यहोमाऽभावः स्यात्, होमस्य प्राप्तस्य बाधोऽनुपपत्तिः स्यात्, 'यवागूपाकः होमसाधनम्, अर्थक्रमेण पूर्ववृत्तत्वात्' अत्र बाधः पाठक्रमेण पश्चाद्वृत्तत्वात् होमसाधनत्वाऽभाववान् पक्ष इति । प्रतिहेतुः पाठक्रमेण पश्चाद्वृत्तत्वादिति । एवं च सत्प्रतिपक्षोऽपि स्यात्, बाधसत्प्रतिपक्षयोर्दूषकत्वं पृथगेव । दृष्टहोमप्रयोजनबाधे सति अदृष्टप्रयोजनवान् स्यात्, 'यवागूं पचेत्' पाकेन अदृष्टं भावयेत्, अदृष्टेन स्वर्गं भावयेदिति' वाक्यभेदापत्तिरपि स्यात् । अतोऽर्थक्रमेण 'पक्वयवाग्वा होमं भावयेदि'ति बोधान्न वाक्यभेदः ।।

नन्वदृष्टं न कल्पनीयं दृष्टमेव कल्पनीयं तच्चाग्निहोत्रिणां क्षुन्निवृत्तिरूपं भक्षद्वारा स्यादिति चेन्न, होमोत्तरपक्वस्य होमाऽप्रसादतया भक्षणस्याऽविधानात् तथापि क्षुन्निवृत्त्युपयोगे कृते प्रत्यवायाऽऽपत्तिः स्यात् अपूर्वभंजकता स्यात् उत्तरकर्माऽनधिकारिता स्यात् । यज्ञीयप्रयोजने तूक्तदोषाऽनापत्तिः, तादृशं दृष्टं तु किमपि नास्तीत्याह—**नहीति ।** अग्निहोत्रहोमानन्तरं पाठक्रमेण **क्रियमाणस्य** यवागूपाकस्य **किञ्चिदपि** यागीयं दृष्टं प्रयोजनं न ह्यस्ति, नास्त्येव । वैदिकविधिर्हि निरर्थको न भवति, यवागूपाकोऽनुष्ठानवाक्यमध्यपतितोऽवश्यं सार्थकः सन् होमार्थकतां प्राभिकर्षयन् स्वस्य होमपूर्वकालीनत्वं व्यवस्थापयति, तच्चाऽर्थक्रमं विना न स्यादित्यर्थक्रमस्य बलिष्ठं प्रामाण्यमिति तत्सारार्थः ।।

अथ पाठक्रमं लक्षयति—**पदार्थेति ।** पदानां ये येऽर्थास्तत्तद्बोधकानि यानि वाक्यानि वेदवाक्यानि, तेषां वाक्यानां यः पौर्वापर्यात्मकः क्रमः सः पाठक्रमः, शब्दो नित्यो, द्रव्यं गुणश्च काले वाऽऽकाशे स्थितो वा स्वतन्त्रस्तररूपो ब्रह्मेति स्वयं यथाभिप्रायं कार्यनिष्पादनानुसन्धानवान् पूर्वं मध्ये चरमं

**क्रमेणाऽधीतान्यर्थप्रत्ययं जनयन्ति। यथाप्रत्ययं च पदार्थानामनुष्ठानम्। स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राऽऽग्नेयाऽग्नीषोमीययोस्तत्तद्याज्याऽनुवाक्यानां पाठाद् यः क्रमः**

---

चेत्यादिरीत्याऽव्यवहितोत्तरस्थितिरीत्या व्यवस्थितः यथा यथा यत्र यत्र क्लृप्तस्तेषां वाक्यानां वाक्योत्तरं वाक्यं तदुत्तरं वाक्यमिति यः क्रमः सः वर्णरेखाभिरभिव्यंग्योऽनुमेयो वा शब्दव्रातस्तत्सन्धानक्रमः स पाठक्रमः, पाठानुसारक्रमः, पठ्यते इति पाठः, यथाप्रणाल्योच्चार्यते सा प्रणाली पूर्वनिरूपिताऽपरगता सती क्रमतां भजते सः पाठक्रमः। कालस्योत्तरगत्यैव पाठानामुत्तरगत्या क्रमो व्यवतिष्ठते, गतेरुत्तरत्रगामित्वात् औत्तर्यं क्रमः, पठनानुसारि औत्तर्यं पाठक्रमः। **तस्माच्चेति**। पाठक्रमाच्च, पदार्थानां पठितार्थानां क्रम औत्तर्यं समाश्रियते स्वीक्रियते। तत्स्वीकृत्या यथार्थप्रतीत्याऽर्थानुष्ठानं सत्फलं स्यादित्युपपादयति—**येन हि क्रमेणेति**। कर्ता कर्म क्रियादि, करणं कर्म भावादि च, सकर्मकाऽकर्मकद्विकर्मकप्रेरकादिप्रयोगाः शब्दाः वाक्यानि च पदानि येन औत्तर्येण क्रमेण जिह्वयोच्चार्यमाणानि पठितानि अथवा मौनानि रेखात्मव्यञ्जनागोचराणि पंक्तिस्थितानि भवन्ति, तेनैवाऽऽनुपूर्वीक्रमेण औत्तर्येण क्रमेण पौर्वापर्येण क्रमेणाऽधीतानि प्रकाशे शाब्दीकृतानि नादध्वनिभाषितीकृतानि पूर्वान्वितपरेषां शक्यानां लक्ष्याणाम् अर्थानां प्रत्ययात् बोधान् जनयन्ति। **यथेति**। प्रत्यया बोधा यथा प्रकारप्रकारिभावेन शेषशेषिभावेन गुणप्रधानभावेन अंगांऽगिभावेनोपकारकोपकार्यभावेन साधनसाध्यभावेन वाचकवाच्यभावेनाऽवयवाऽवयविभावेन गुणगुणिभावेन वा येन क्रमेण जायन्ते तेन क्रमेण पदार्थानाम् पूर्वापराणामनुष्ठानं भवति दृष्टाऽदृष्टान्यतरफलदं भवति, इत्येवं पाठक्रमेण वैदिकविध्यादिसार्थक्यं तत्साफल्यं भवति सफलकाण्डस्वरूपता भवतीति॥ वैदिकपाठानां द्वैविध्यमाह—मन्त्राणां पाठाः 'शोंसावो३म्, शोंसामोद इव, ओं मो३थामोद इव, ओथामोद इव' इत्याद्याः॥ तदनुस्मृतानां ब्राह्मणवाक्यानां पाठाश्च। ब्राह्मणैः स्मृत्वा 'अध्वर्यु त्वां वृणे, होतारं त्वां वृणे'। 'आश्रावय, अस्तु श्रौषट्',—इत्यादीनि श्रावितानि पठितानि प्रोक्तानि वाक्यानि, वाक्यानां पाठाः॥

मन्त्रपाठक्रममुदाहरति—**तत्राऽऽग्नेयेत्यादिना**। तत्र—मन्त्रपाठब्राह्मणपाठयोर्मध्ये। आग्नीषोमीययागः तैत्तिरीयब्राह्मणपञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः 'ताभ्यामेतदग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदि'त्यादिना। आग्नेययागः षष्ठप्रपाठके तृतीयाऽनुवाके आम्नातः—यदाग्नेय-

**आश्रीयते स मन्त्रपाठात्। स चाऽयं मन्त्रपाठो ब्राह्मणपाठाद् बलीयान्, अनुष्ठाने ब्राह्मणवाक्याऽपेक्षया मन्त्रपाठस्याऽन्तरङ्गत्वात्। ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदं कर्तव्यमित्यवबोध्य कृतार्थम्।**

**मन्त्राः पुनः प्रयोगकाले व्याप्रियन्ते, अनुष्ठानक्रमस्य स्मरण-**

---

योऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाऽच्युतो भवतीत्यादिना। तत्र ब्राह्मणोक्तविध्यधीनतयाऽग्नीषोमीयस्य प्रथमाऽनुष्ठानप्राप्तावपि मन्त्रोक्त आग्नेयः प्रथमोऽनुष्ठेयो भवति, मन्त्रकाण्डे आग्नेयमन्त्राणां पूर्वपठितत्वात्, हौत्रकाण्डे आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम् 'अग्निर्मूर्धे'-त्यादिके आग्नेय्यौ याज्याऽनुवाक्ये आम्नाते। ततः 'प्रजापतये न त्वदेतानी'-त्यादिके प्राजापत्ये आम्नाते। ततः 'अग्नीषोमासवेदसे'त्यादिके आग्नीषोमीये। आध्वर्यवे 'काण्डेऽपि "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं निर्वपामीत्यग्नीषोमाभ्यामि'त्याग्नेयः पूर्वमाम्नातः। याजमानकाण्डेऽपि 'अग्नेरहं देवयज्ययाऽन्नादो भूयासमि'त्याग्नेयस्य पश्चात् 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इत्याम्नायते। तत्र तत्र मन्त्रपाठः प्रबलः, मन्त्रैरेव स्मृत्वा पश्चादर्थानुष्ठानात्, ब्राह्मणपाठस्तु अप्राप्तपदार्थेषु विधिना चरितार्थ एव भवति। अतोऽनुष्ठानस्मरणायैवोत्पन्नान्मन्त्रान् बाधितुं नाऽलं ब्राह्मणपाठः। मन्त्रक्रमेणैवाऽऽग्नेयस्यैव प्रथममनुष्ठानात्, मन्त्रपाठस्य ब्राह्मणपाठाद्बलीयस्त्वमिति दर्शितं— **तत्राग्नेयाग्नीषोमयोरित्यादिना**। आग्नेये यागे अग्नीषोमीये यागे च तत्तदीयानाम् आज्यमन्त्राणाम् ऋचाम् अनुवाक्यमन्त्राणाम् ऋचां च, तेषां मन्त्राणां पाठात् यः क्रमो मन्त्रोदितः मान्त्रस्थितिकः समः क्रमः सः क्रमः **मन्त्रपाठात्** आश्रीयते, न तु ब्राह्मणपाठात्। 'यजे'ति प्रैषानन्तरं या ब्रह्मणा समुच्चार्यते सा याज्या ऋक्, 'अनुब्रूही'तिप्रैषानन्तरं या ब्रह्मणा समुच्चार्यते सा ऋक् अनुवाक्या, ऋचां मन्त्राणां बलीयस्त्वमाह— **स चायमिति**। 'अग्निर्मूर्धेत्यादिर्मन्त्रपाठः, मन्त्रपाठब्राह्मणपाठयोर्मध्ये मन्त्रपाठोऽयं बलीयान्। ब्राह्मणपाठस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविधयैव क्रमनियामकत्वोक्तेर्मन्त्रसत्त्वे च मन्त्रस्यैव स्मारकतया विधानोपयुक्तस्याऽसमर्थस्य च विधेः स्मारकत्वाऽभावात् मन्त्रपाठक्रमो बलीयान्। तेन च याज्याऽनुवाक्यादिमन्त्रपाठक्रमात्। आग्नेयस्य प्रथमानुष्ठानं पश्चाच्च उपांशुयाजोत्तरम् आग्नीषोमीयस्याऽनुष्ठानम्। मन्त्रपाठस्य बलीयस्त्वहेतुं स्पष्टयति— **अनुष्ठाने इति**। ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यपाठस्य, अनुष्ठाने

क्रमाधीनत्वात् , तत्क्रमस्य च मन्त्रक्रमाऽधीनत्वाद् अन्तरंगोऽयं मन्त्रपाठ इति ।

प्रयाजानां 'समिधो यजति, तनूनपातं यजति' इत्येवंविधपाठ-क्रमाद् यः क्रमः स ब्राह्मणपाठक्रमात् । यद्यपि ब्राह्मणवाक्यान्यर्थं

---

प्रयोगकाले व्याप्रीयमाणे, अन्तःपातित्वेन सहांऽगतयोपकारवत्त्वात्, अनुष्ठा-नार्थबोधकाऽन्तःप्रविष्टांऽगत्वात् बलीयस्त्वम् । ब्राह्मणवाक्यस्य बहिरंगत्व-माह— **ब्राह्मणवाक्यं हीति** । प्रयोगाऽनुष्ठानव्यापारात् बहिरेव पूर्वकाले एव 'इदं कर्तव्यमि'ति मन्त्रोक्तमनुष्ठेयमिदं कर्तव्यमिति । **'अवबोध्य'** यज्ञानुष्ठा-तृभ्यो बोधयित्वा, **कृतार्थम्**—निवृत्तप्रयोजनं भवति, ततो मन्त्रा उच्चार्य-न्तेऽनुष्ठानानि क्रियन्ते चेत्याह— **मन्त्रा** इति । मन्त्राः पठ्यन्ते प्रयोगाः क्रियन्ते मन्त्राः स्वस्वार्थेषु व्याप्रियन्ते, क्रमाः स्मर्यन्ते, अनुष्ठानानि संक्रम्यन्ते आक्रम्यन्तेऽधिक्रम्यन्ते उपक्रम्यन्ते मन्त्रोच्चारणं यावत् तावत् क्रमानुष्ठान-व्यापृतिरिति मन्त्रोक्तानुष्ठानेऽन्तरंगा मन्त्रपाठाः । द्वयोरविनाभावत्वमाह— **अनुष्ठानक्रमस्येति** । मन्त्रपाठस्माग्तिक्रमाऽधीनोऽनुष्ठानक्रमोऽत एवाऽन्तः-सहायकृत् अंगम् । स्मरणक्रमस्त्वनुष्ठानेऽनुष्ठानप्रवर्तनासहायकृत् अंगम् । **तत्क्रमस्येति** । अनुष्ठेयपदार्थस्मरणक्रमस्य अनुष्ठेयपदार्थस्मारकमन्त्रोपयोग-क्रमाधीनत्वात् , मन्त्रपाठक्रमात् मन्त्रार्थस्मरणक्रमः मन्त्रार्थस्मरणक्रमात् यागक्रियाऽनुष्ठानक्रमः, त्रिकमिदं द्विक्षणतस्त्रिक्षणतः सहवर्ति भवति मन्त्र-क्रमाधीनक्रमत्वम् अन्तरंगक्रमत्वम् , अधीनत्वसंसर्गेण मन्त्रक्रमोऽर्थस्मरण-क्रमांगम् , वाक्यप्रमाणात् क्रमः समस्थानप्रमाणाच्चांऽगम् मन्त्रारम्भक्षणा-त्पूर्वमेव तु ब्राह्मणवाक्यपाठो विरमते, स त्रिकाद्बहिर्विरामप्रतियोगी, नाऽन्तरंगं न केवलमंगं वा । किं तर्हि ?, तत्तु स्वधात्वर्थांऽगं भवतु, यत्र क्रमस्मारकमन्त्रक्रमो नास्ति, तत्र क्रमस्मारकमन्त्रान्तराऽभावात् प्रयाजा-नामनुष्ठानक्रमः **'समिधो यजति,** तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति'—इत्यादिब्राह्मणपाठक्रमात् क्रमः स्वीक्रियते, तदाह— **प्रयाजानामिति** । प्रयाजानुष्ठानक्रमस्तु 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति, इति 'समित् , तनूनपात्, इट् , बर्हिः, स्वाहाकारः, इति पञ्चानां प्रयाजानां नामानि, देवता अपि ता एव चतुर्णाम् , पञ्चमस्य परं तेषु तेषु कर्मसु वक्ष्यमाणाः प्रधानदेवताः स्विष्ट-कृदाज्यभागप्रयाजाऽनूयाजदेवता एव । 'समिधो यज' इतिप्रथमः प्रैषः, 'यज' इति चत्वारः प्रैषाः ॥

विधाय कृतार्थानि तथापि प्रयाजादीनां क्रमस्मारकान्तरस्याऽभावा-
चान्येत्र क्रमस्मारकत्वेन स्वीक्रियन्ते ॥

---

अध्वर्युः इन्द्रायाऽऽज्यधारात्मकमाघारं दत्वा जुहूमुपभृतं च परस्परम-संस्पर्शयन्नेव हस्ते धृत्वा यथागतं वेदेरुत्तरभागं प्रतिनिवृत्य, जुह्वा ध्रुवां द्विस्त्रिर्वा समज्य, ध्रुवाया आज्यमादाय जुहूं, जुह्वा आज्यमादाय ध्रुवां चाभिघार्य ध्रुवां प्रत्यभिघार्य वेदिमध्ये ते स्थापयित्वा उदग्गत्वा ब्रह्माणमा-मन्त्र्य प्रवरकथनायाऽऽश्रावणं कुर्यात्—'आश्रावये'ति । तत आग्नीध्रेण 'अस्तु श्रौषट्' इति प्रत्याश्राविते ऽध्वर्युर्होतुरार्षेयं ब्रूयात्—'भृगुवत् वीतहव्यवत् सवेदोवत्' इति 'भार्गव वैतहव्य सावेदस' इति आर्षेयवरणम् । ततो होत्रा यथावदनुष्ठीयमानेषु स्वकर्मसु 'घृतवतीमध्वर्यो स्रुचमास्यस्व' इति यदा मन्त्रैकदेशः पठ्यते तदाऽध्वर्युर्जुहूपभृतावादाय वेदेर्दक्षिणदेशं गत्वा, आश्रा-व्याऽऽग्नीध्रेण प्रत्याश्रावणे कृते प्रयाजार्थं होतारं प्रति 'समिधो यज' इत्यादि-प्रैषं दद्यात् । तत्र पञ्च 'समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकारः, इति पञ्च प्रयाजाः । प्रतिप्रयाजम्—आश्रावण,-प्रत्याश्रावण,-प्रैषदान,-याज्या-पाठा भवन्ति । याज्याया अन्ते वषट्कारे उक्ते आहवनीये होमा भवन्ति । तत्र आश्रावणमध्वर्युकर्तृकम्, प्रत्याश्रावणमाग्नीध्रकर्तृकम्, याज्यावषट्कार-पाठो होतृकर्तृकः । 'आश्रावय' इत्याश्रावणम्, 'अस्तु श्रौषट्' इति प्रत्याश्रावणम्, 'यज' इति प्रैषः, 'येयजामहे' इत्यारभ्य निर्दिष्ट-मन्त्रपाठो याज्यापाठः, 'वौषट्' इतिवषट्कारः, आश्रावणप्रत्याश्रावणेऽ-ध्वर्युणाऽऽग्नीध्रेण च तिष्ठद्भ्यामेव कर्तव्ये, 'यजति'चोदनाचोदितेषु स्थलेषु होमाश्च कात्यायनश्रौतसूत्रोक्ताः ( १, २, ५, ६, ७ ) दातव्याः । एवं जुहूस्थेनाऽऽज्येन त्रीन्प्रयाजान् हुत्वा चतुर्थप्रयाजार्थम् औपभृतस्याऽऽज्या-ऽर्धं जुह्वां समानीय तेन चतुर्थपञ्चमौ प्रयाजाविष्ट्वा जुह्वां किञ्चिदाज्यमव-शेष्य तेन वेद्यामासादितौ पुरोडाशौ अभिघारयेत् । एवमेव सर्वत्र प्रयाजाऽऽ-ज्यशेषेण यागीयप्रधानहवींषि अभिघारयेत् । ततो यथेतं प्रतिनिवृत्याऽऽयतने जुहूपभृतावासाद्य ध्रुवातः स्रुवेणाऽऽज्यमादाय तेन प्रस्तरमंक्त्वाऽऽज्यभागार्थं होत्रे प्रैषं दत्वा तेन याज्यापुरोनुवाक्ययोरुक्तयोः सत्योः आह—वनीयाऽग्ने-रुत्तरार्धपूर्वार्धे अग्निदेवतायै पूर्वमाज्यभागं दक्षिणार्धपूर्वार्धे सोमदेवतायै अपरं चाऽऽज्यभागं जुहुयात् । तत्र स्रुवेण ध्रुवाया आज्यमादायैकां दोष-निर्घातार्थां व्रातपतीष्टिस्थानीयाम् आज्याऽऽहुतिमाहवनीये हुत्वा हस्तौ प्रक्षाल्य प्रधानयागाननुतिष्ठेत् । ततोऽध्वर्युरुपांशुयागमनुतिष्ठेत् । तत्र 'अग्नि

यज' इतियाज्या प्रैषः, 'अग्नयेऽनुब्रूही'तिपुरोनुवाक्या प्रैषः। आज्यं द्रव्यम्। विष्णुः प्रजापतिः अग्नीषोमौ च देवताः। याज्यापुरोनुवाक्ययोरुपांश्वेव पाठः। ततो नारिष्ठहोमाः। ततः स्विष्टकृद्याग:' तत इडाभक्षणादिः। ततः ऋत्विग्दक्षिणा अनुयाजाश्च। तत्र देवो बर्हिः, देवो नराशंसः, देवोऽग्निः स्विष्टकृत्। त्रयोऽनुयाजाः तिस्रो देवतास्ता एव। 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि'—इतिसूक्तवाकप्रैषः। अथ 'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयुवाकाय शंयोर्ब्रूहि' इतिशंयुवाकप्रैषः।। ततः पत्नीसंयाजादिकम्। ततो याजमानं कर्म यागविसर्जनम्।। रातत्पौर्णमासयागेऽनुष्ठानम्।।

**इत्येवंविधपाठक्रमादिति**। समिदादिपञ्चप्रयाजानामनुष्ठानक्रमः, अनुष्ठानात्मकः **यः क्रमः**, सः याज्यानुवावाक्यापदपाठक्रमाद् भवति, सः 'समिधो यजति तनूनपातं यजति इडो यजति। बर्हिर्यजति स्वाहाकारं यजतीति ब्राह्मणवाक्यपाठक्रमादेव भवति॥ **यद्यपीति**। यच्चापि मन्त्रवाक्यम् 'समिधोऽग्न आज्यस्य व्यन्तु' इत्यादिमन्त्राणां प्रयाजक्रमस्मारकाणां सत्त्वमस्ति, तथापि न तेषां सर्वथा प्रयाजादिक्रमस्मारकत्वम्, तन्मन्त्रपाठस्याऽन्यादृशत्वात्, तन्मन्त्राणां देवतामात्रस्मारकत्वेन कर्मस्मारकत्वाऽभावात्। अतो ब्राह्मणवाक्यपाठक्रमादेव प्रयाजक्रमोऽङ्गीकर्तव्यो भवति। ब्राह्मणवाक्यानि। अर्थं विधाय **कृतार्थानि**—कृतप्रयोजनानि भवन्त्यपि प्रयाजादीनाम् अनन्यादृशक्रमस्य सदृशक्रमस्य स्मारकान्तरस्य मन्त्रवाक्यस्याऽसत्त्वादेवाऽर्थबोधोत्तरं क्रमेणाऽऽकृष्यमाणानि क्रमस्मारकाणि पुनरेव तानि प्रयाजादिब्राह्मणवाक्यानि येन क्रमेणाऽधीतानि तेनैव कमेणाऽर्थस्मारकाणि तेनैव क्रमेण अनुष्ठापकानि चेति। तान्येवाऽर्थक्रमबोधकानि तान्येवाऽर्थस्मारकाणि तान्येवाऽनुष्ठानशेषाणीति 'एकस्मिन्नेव पुत्रे ज्येष्ठत्वमध्यमत्वकनिष्ठत्व' न्यायवत् **स्वीक्रियन्ते**—स्वीकृतानि भवन्ति। अप्रामाणिकक्रमाऽनंगीकारात् प्रामाणिकक्रमस्मारकमन्त्रवाक्याऽभावात् यागाऽन्यथाऽनुपपत्तेः क्रमांगीकाराऽऽवश्यकत्वात् यान्यर्थबोधकानि तान्येव क्रमस्मारकाणीति तेषामेव। प्रथमाविकारत्वात् समत्वादेकवाक्यताकत्वात् स्मारकत्वं गृह्यते इत्युक्तं—**तथापीत्यादिना**। प्रयाजानुयाज्यादिवाक्यानाम्, प्रयाजादिक्रमानुष्ठानार्थं क्रमस्मारकमन्त्रान्तरस्य सदृशस्याऽभावादेव तत्स्थानापन्नतया तेषां ब्राह्मणवाक्यानामेव क्रमस्मारकत्वं पुनराकृष्य स्वीक्रियन्ते उपस्थितानाम् अन्यावरोधशून्यानां पुनराकृष्टानामवेक्षितानां सर्वत्र क्रमेऽधिकारवत्त्वात् प्राबल्यस्य प्राप्तत्वात् ब्राह्मणवाक्यानां क्रमस्मारकत्वम्॥ **वस्तु-**

स्थानं नामोपस्थितिः। यस्य हि देशे योऽनुष्ठीयते तत्पूर्वतने

---

तस्तु—तूष्णीं विहितानां कर्मणामुपांशुयाजनामकयागादीनां यत्र याज्या-पुरोनुवाक्ययोरुपांश्वेव पाठस्तत्राऽऽपस्तम्बीयानां पौर्णमास्यामेव यष्टव्यानां बह्वृचबौधायनीकातीयानां चाऽमावास्यायामेषां यष्टव्यानां तत्र तत्र क्रमो ब्राह्मणपाठक्रमादेव भवति तत्र तेषामेव ब्राह्मणवाक्यानां प्रयोगसमवेतार्थ-स्मारकत्वात्। प्रयाजादिक्रमस्तु 'समिधाऽग्ने आज्यस्य व्यन्त्वि'त्यादि-मन्त्राणामसदृशानामपि मन्त्राणां पाठक्रमात् क्रमो भवति। उक्तं चाऽर्थवाद-पादे 'तदर्थशास्त्रात्' (१।२।४।३१) इत्यस्य भाष्ये—'मन्त्रा उच्चारण-मात्रेणैवोपकुर्वन्तीति, कुतः?, तदर्थशास्त्रात्। अस्य वार्तिकम्—किमर्थ-वन्तो मन्त्रा उताऽनर्थका इति?। किं विवक्षितवचना मन्त्रा उताऽविवक्षित-वचना? इति। किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उतोच्चारणमात्रेणेति च—भाष्यम्। उत्तरं—'मन्त्राणाम् अविवक्षितवचनता' भाष्यम्। वार्तिकम्—

"दर्शपूर्णमासादिभ्यः क्रमप्रकरणाभ्यां यावत्संस्पृश्यते तत्सर्वम् उपकारकत्वेन स्वीक्रियते, प्रयाजादिवाक्यानि मन्त्ररूपमपि च। तत्र प्रयाजादि-वाक्यानि अर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रति-पद्यन्ते। मन्त्राः पुनः कर्माऽनौपयिकार्थाभिधायित्वात् तेनांऽशेनाऽनपेक्षिताः। स्तुतिविधिस्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां रूपमेवांगी-क्रियते। प्रयाजादिवाक्येष्वपि तावद्रूपग्रहणमेव प्रसक्तमासीत् तत्तु अभि-प्रेतार्थदानेन युक्तं, शब्दे च कार्यस्याऽसंभवात् अर्थे कार्यं विज्ञायते, मन्त्राणां तु शब्दे एव संभवति, अवश्यं हि अर्थप्राधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः, तद्व्यापारोत्तरकालत्वात् अर्थाभिधानस्य, तस्माद्रूपमेवांऽगम्, तथा च तदर्थ-शास्त्रादीन्युच्यन्ते"॥ इति॥

तस्मात् मन्त्रक्रमादेव प्रयाजक्रम इति। अतो ब्राह्मणपाठक्रमात् न प्रयाज-क्रमः—'समिधोऽग्ने आज्यस्य व्यन्त्वि'त्यादिभिः क्रमप्रकरणप्राप्तैर्देवताः-गुणत्वेन समर्प्यन्ते,—इति नवमतन्त्ररत्ने प्रोक्तम्। (९।२।१९।२०।५९।६०)। 'प्रयाजेऽपीति चेत्' (५९) 'नाऽचोदितत्वात्' (६०)। प्रयाजपञ्चकाऽऽ-म्नातं 'समिधो यजती'त्यादि। प्रयाजमन्त्रेषु 'समिधो अग्ने आज्यस्य व्यन्तु' इत्यादिषु समिदादिशब्दैर्बहुवचनैकवचनान्तैर्देवता निर्दिष्टाः, तदेव निमित्ती-कृत्य तादृशैरेव शब्दैरिह यागा अभिधीयन्ते—'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति। तस्मान्नाऽत्र देवतासंस्कारविधिः, किन्तु यागाः केवला विधीयन्ते। तेषां श्रुत्यादिभिः

**पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम्। अत एव साद्यस्क्रे अग्नीषोमीय-सवनीयाऽऽ-नुबन्ध्यानां सवनीयदेशे सहाऽनुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानमितरयोः**

---

कार्यविशेषाऽनवगमात् प्रकरणेन आरादुपकारकत्वम्, पञ्चमप्रयाजस्य तु वक्ष्यमाणाऽऽज्यभागादिदेवतादिसंस्कारकत्वं दशमेऽभिधास्यते। अथ शाबरभाष्यम्—"तस्मात्—'समिधो यजतीत्ययमर्थः, समिद् यजिः कर्तव्यः, यदि च यजि प्रति अनुष्ठानं चोद्यते, तदा यजिः उपदिष्टो भवति, यदि पुनरत्र देवतोपदिश्येत, उपदिष्टे यजौ देवतोपदिश्येत, तत्रोपदिष्टोपदेशे वाक्यं भिद्येत, तस्मान्न देवतोपदेशः, यदा न देवतोपदेशस्तदा मान्त्रवर्णिको देवताविधिः, तदा चोपादेयत्वात् एवं—शब्दिका देवताश्चोद्यन्ते, तस्मान्मान्त्रवर्णिको देवताविधिः। प्रयाजेष्वपि च मान्त्रवर्णिको देवताविधिः। 'विष्णुं यजति' 'वरुणं यजती'तिपरिचोदना। वाक्यान्तरेण वैष्णवयागो विहितः, तस्याऽयमनुवादः, यदि वा याग एवाऽत्र विधीयते, तस्य प्रकरणसन्निधिभ्यां मान्त्रवर्णिको विष्णुः प्राप्तः, तस्याऽयमनुवादो यागः स्तुत्यर्थः। न चाऽत्र नामधेयं विष्णुः, द्वितीयान्तस्य यजतिसामानाधिकरण्याऽभावात्"। (६।२।२०।५९,६०)। तस्मान्मन्त्रक्रमादेव प्रयाजाद्याः। समन्त्रककर्मणां मन्त्रपाठक्रमात् क्रमः, अमन्त्रककर्मणां क्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक्॥

अथ क्रमे स्थानं प्रमाणं निरूपयति—**स्थानं नामेति**। उपस्थितित्वं स्थानत्वम्, उपस्थितिः स्मृत्याऽग्रगतिः प्रथमप्राप्तिः यस्य पदार्थस्य ततस्ततश्चेति स्मृतिप्राप्त्या क्रमोऽवक्लृप्त्यते, यस्य यागस्य काले प्रदेशेऽनुष्ठानं तत्र पूर्वतनः पदार्थ उपतिष्ठन्नेवाऽऽनन्तर्यक्रमोऽनुष्ठानगोचरो भवति, प्रकृतौ नानादेशानां पदार्थानां विकृतौ चोदकवचनैरेकस्मिन् देशेऽनुष्ठाने कर्तव्ये **यस्य**—पदार्थस्य यागप्रदेशेऽनुष्ठीयन्ते ये पदार्थाः तेष्वेकस्मिन्पदार्थे पूर्वतने स्मृते उपस्थिते तदवलम्बिनोऽन्येऽनुष्ठीयन्ते क्रमात्, अतः **स एव** पूर्वमुपस्थितो भवतीति तस्य प्रथममनुष्ठानम्, ततो द्वितीयोऽप्याकांक्षायोग्यतासहाय उपस्थितो भवति ततस्तस्याऽनुष्ठानम्, इत्येवं स्मृतस्याऽपेक्षार्हत्वसंगत्या क्रमेणाऽनुष्ठानम्। **यस्य** ज्योतिष्टोमादि प्रकृतेः समस्तदेशेषु तत्र यो यः पदार्थोऽनुष्ठीयते, ज्योतिष्टोमे त्रयः पशुयागाः—अग्नीषोमीयः, सवनीयः, आनुबन्ध्यश्चेति। ते च भिन्नदेशाः, अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकालेऽह्नि, आनुबन्ध्यश्चाऽवभृथाऽन्तेऽह्नि

पश्चात् । तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितिः । तथाहि ज्योतिष्टोमे त्रयः पशुयागाः—अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति । ते च भिन्नदेशाः—अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, आनुबन्ध्यस्त्वन्ते । साद्यस्को नाम

---

अनुष्ठीयन्ते, साद्यस्को नाम यागः ज्योतिष्टोमविकृतिविशेषः,—सोमयागविशेषः, स चाऽव्यक्तत्वेन ज्योतिष्टोमविकारः, अतस्ते त्रयोऽपि यागाः साद्यस्के चोदकप्राप्ताः, तेषां तत्र साहित्यं 'सह पशूनालभेते'तिश्रुतम्, तच्च साहित्यं सवनीयपदेशे साद्यस्कस्य प्रत्यासत्तेः स्थानातिक्रमसाम्याच्चाऽभिप्रेतं भवति, उपस्थितिकृतं भवति, सवनीये देशे मध्येऽनुष्ठाने क्रियमाणे अग्नीषोमीयाऽनुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति, अग्नीषोमीयदेशेऽनुष्ठाने क्रियमाणे तु सवनीयस्य स्वस्थानातिक्रममात्रं, किन्त्वानुबन्ध्यस्य स्वस्थानातिक्रमः सपवीयस्थानातिक्रमश्च स्याताम्, एवमानुबन्ध्यदेशेऽनुष्ठाने क्रियमाणेऽग्नीषोमीयस्य स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्याताम्, सर्वेषां सवनीयदेशेऽनुष्ठाने कर्तव्ये तु सवनीयस्य प्रथममनुष्ठानं ततः 'प्रकृतौ—आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोती'ति आश्विनग्रहणानन्तरं सवनीयस्य विहितत्वात् साद्यस्केऽपि आश्विनग्रहणे कृते एव सवनीय एवोपस्थितो भवतीति युक्तं सवनीयस्य प्रथममनुष्ठानम्, अग्नीषोमीयाऽऽनुबन्ध्ययोश्च पश्चात् ॥

**यस्येति** । यस्य सवनीयादेः, ज्योतिष्टोमादिप्रकृतेः साद्यस्कादिविकृतौ चोदकेन 'प्रकृतिवद्विकृतिः कर्तव्ये'तिवाक्येन प्राप्तस्य, तदनन्तरं मध्यस्थाने सौत्येऽह्नि 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोती'तिवाक्येन च प्राप्तस्य यस्य सवनीयादेः, **देशे**—मध्ये प्रदेशे सुत्याकालेऽह्नि:, **यः**—अग्नीषोमीयोऽनुबन्ध्यादिश्च **अनुष्ठीयते**—आलब्धव्यविषयो भवति, **तत्पूर्वतने**—तस्मात्सवनीयादेः पूर्वतने प्रथमे आश्विनग्रहणे, **पदार्थे**—आलम्भनयोग्ये कृते सति, **स एव**—सवनीयादिरेव, **प्रथमम्**—अग्नीषोमीयाऽनुबन्ध्यापेक्षया प्रथमम्, **उपस्थितः**—उपस्थितिः अनुष्ठातव्यस्मृतिः, तद्गोचरः स्मृतिविषयः उपस्थितः । **भवतीति**—मध्यस्थानीयाऽनुष्ठानविषयो भवतीति । **तस्य**—सवनीयस्य, प्रथमं त्रिषु मध्ये आद्यम्, अनुष्ठानम्—आलम्भनाद्यात्मकम् अभिविधानं, युक्तं—चोदकन्यायप्राप्तम् । **अत एवेति** । प्रथमोपस्थितप्रथमाऽनुष्ठानस्य युक्तत्वादेव । **साद्यस्के**—

यागविशेषः, स चाऽव्यक्तत्वात् ज्योतिष्टोमविकारः, अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः, तेषां च तत्र साहित्यं श्रुतं 'सह पशूनालभेते'ति, तच्च साहित्यं सवनीयदेशे, प्रधानप्रत्यासत्तेः, स्था-

---

अग्नीषोमीयविकृतौ साद्यस्के यागे, अग्निष्टोमदेवताकपशूपालम्भोऽनुष्ठानम् युक्तम् ॥

सोमयागश्चतुष्प्रकारः—एकाहः, अहीनः, साद्यस्कः, सत्रं चेति । एकस्मिन्दिने संकल्पप्रभृत्यवभृथान्तमनुष्ठानं यस्य सः—साद्यस्कः । सद्यः क्रम्यतेऽनुष्ठानं यत्र साद्यस्कः । सवनीये दिने कर्तव्यमनुष्ठानमित्येकदिनीयः, 'सह पशूनालभेते'तिसाहित्याऽऽलम्भनोक्तत्वात् । सवनं पूजनं यागः, तत्राऽनुष्ठेयपशुः सवनीयः, सवनीयाऽनुष्ठानम् अग्नीषोमीयाऽनुष्ठानम् आनुबन्ध्याऽनुष्ठानं च सवनीये एव दिने, न तु भिन्ने भिन्ने । सोऽयं सुत्यादिवसः, सूयते इति, सोमलताकण्डनेन सोमरस उत्पाद्यते यत्र दिने सा सुत्यादिवसः । सवनं 'सुत्याऽभिषवः सवनं च सा'इत्यमरः । सवनस्य दिवसः सुत्या । सुत्यादिने—

महारात्रेऽपरभागे ऋत्विजः प्रबुध्य स्नात्वा सोमाभिषवसम्बन्धीनि कर्माण्यारभेरन् , अध्वर्युः ग्रहचमसादिपात्राणि योजयेत्, होता पक्षिप्रबोधपूर्वं प्रातरनुवाकाख्यं शस्त्रमारभेत, प्रतिप्रस्थाता सवनीयहविषां निर्वापं कुर्यात् । हवींषि—भ्रष्टयवाधानाः, याज्यमिश्रिता यवसक्तवः करम्भः, लाजाः परिवापः, सान्द्रभागः पुरोडाशः, पयस्या आमिक्षा चेति पञ्चहवींषि, इन्द्रो हरिवान्, इन्द्रः पुषण्वान्, सरस्वती भारती, इन्द्रः, मित्रावरुणौ, इतिक्रमेण देवताः । उदुम्बरनिर्मितोलूखलनिभे चतुष्कोणे पात्रे दधि प्रजापतिदेवतायै जुहुयात्, दधिग्रहप्रचारे दधि द्रव्यम् , प्रजापतिर्देवता, ततोऽदाभ्यग्रहः—पात्रं पयसा दध्ना वा प्रपूर्य उपनह्य सोमलतांऽशुत्रयं प्रवृह्य ग्रहोपरि स्थापयित्वा ग्रहं पात्रं पञ्चकृत्व आधूय तं जुहुयात् । अत्र सोमो देवता । ततोंऽशुग्रहः, एकग्रहपर्याप्तं सोमं पाषाणे वसतीवरीजलैः संसिच्य ग्रावभिरभिषुत्य अदाभ्यग्रहपात्रे गृहीत्वा जुहुयात् । प्रजापतिर्देवता, अश्व-दाभ्यग्रहयोरेकं पात्रं तद्गतसोमरसं सदःप्रविश्य भक्षयित्वा पात्रं खरे सादयेत् । तत उपांशुग्रहः । प्राणो देवता । ततोऽन्तर्यामपर्यन्ता धाराग्रहाः । सोमाभिषवो महाभिषवोऽयम् । अत्र सोमरसम् अन्तर्यामपात्रे गृहीत्वा सशेषं जुहुयात्, इन्द्रो देवता, दधिग्रहाद्यन्तर्यामान्तानां ग्रहाणां ग्रहणानन्तरं होमः । ततः ऐन्द्रवायवादिग्रहाः, ऐन्द्रयायवं, मैत्रावरुणं, शुक्रं, मन्थिनम् , आग्रयणं,त्रीनतिग्राह्यान्—आग्नेयम् ऐन्द्रं सौर्यं च, उक्थ्यं ध्रुवं चेति । ध्रुवग्रहग्रहणानन्तरं

नातिक्रमसाम्याच्च। सवनीयदेशे ह्यनुष्ठानेऽग्नीषोमीयाऽऽनुबन्ध्ययोः स्वस्वस्थानातिक्रमो भवति, प्रधानप्रत्यासत्तिलाभश्च। अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रम्। अग्नीषोमीयस्य सवनीयस्थानातिक्रमः आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीय-

---

धारां विरमयेत्। ततो हविर्धानमण्डपात् बहिष्पवमानस्तोत्रकरणाय पञ्च ऋत्विजः—१—प्रथमोऽध्वर्युः, २—प्रस्तोता, ३—प्रतिहर्ता, ४—उद्गाता, ५—ब्रह्मा, ६—यजमानः, क्रमेण पूर्वस्य पृष्ठे पृष्ठे कच्छं धृत्वा गच्छेयुः, चात्वालदेशं गत्वा उपविश्य कच्छं विसृजेयुः। मध्ये विसर्गे प्रायश्चित्तं विहितम्। ते सदः प्रविश्य ततः सवनीयहविषां सांगानुष्ठानं कुर्युः। ततो धाराग्रहप्रचारः, ततः शुक्रामन्थिग्रहप्रचारः, चमसहोमाः, चमसभक्षणम्, ततः ऋतुदेवताभ्यो—मधुः, माधवः, शुक्रः, शुचिः, नभः, नभस्यः, इषः, ऊर्जः, सहः, सहस्यः, तपः, तपस्यः, इतिनातिकाभ्यो देवताभ्यः, क्रमेण इन्द्र[1]–मरुत्[2]–त्वष्ट्र[3]–ग्नी[4]–न्द्र[5]–मित्रावरुण[6]–चतुर्द्रविणोदा–ऽश्विनीकुमारा[10]ऽ–ग्नि[11]-संज्ञकाभ्यो[12] देवताभ्यो हवनं दद्यात्। यथावद्धोमाः। ततः शस्त्रपाठ-प्रतिगरादि, ततो नाराशंसहोमः, तत उक्थ्यग्रहप्रचारः, ततो माध्यन्दिनं सवनं, दक्षिणादानं, ततो मरुत्वतीयग्रहप्रचारः, ततस्तृतीयं सायंसवनम्, आर्भवपवमानाय प्रसर्पणम्, चमसप्रचाराः, सौम्यचरुः, हारियोजनग्रह-प्रचारः, अवभृथेष्टिः, एतत्सुत्यादिनीयाऽनुष्ठानमुक्तम्। ततः आनुबन्ध्य-पशुयागादिः, वन्ध्यागौरानुबन्ध्यपशुः, आमिक्षायाग एवाऽत्र आनुबन्ध्य-पशुयागो बोध्यः॥

अवभृथेष्टयन्तानुष्ठाने साद्यस्के एकदिनीयेऽग्नीषोमीयपशुसवनीयपश्वनु-बन्धनीयपशूनां ग्रहाणां मध्ये सवनीये देशे सुत्यादिने सहाऽनुष्ठाने कर्तव्ये सहपशूनालभेतेतिमन्त्रबलेन मध्येऽनुष्ठानारम्भे आदौ सवनीयपशोरनुष्ठानम्, ततोऽग्नीषोमीयाऽऽनुबन्ध्ययोरनुष्ठानमिति॥ **तस्मिन्**—सवनीयदेशे, आश्विन-ग्रहणोत्तरं सवनीयस्यैव विकृतौ प्रधानप्रत्यासत्तिबलात् आग्नीषोमीयाऽऽनु-बन्ध्यापेक्षया प्रथममुपस्थितिः। विकृतावाश्विनग्रहणाऽनन्तरमेव सवनीय-स्थानप्रदर्शनाय प्रथमं प्रकृतौ सवनीयस्थानं दर्शयति—**तथाहीत्यादिना**। ज्योतिष्टोमे यागे त्रयः पशुयागाः—१—अग्नीषोमीयपशुयागः, २—सवनीय-पशुयागः, ३—आनुबन्ध्यपशुयागश्चेति। ते त्रयो **भिन्नदेशाः**, भिन्न-दिवसीयाः। अग्नीषोमीयपशुयागाः औपवसथ्येऽह्नि यज्ञीयव्रतदिने नक्त-भोजनादिव्रतदिने। सवनीये दिने सवनं यजनमभिषवस्तद्दिने सुत्यादिने,

स्थानातिक्रमश्च स्यात् इति त्रयाणां स्वस्वस्थानातिक्रमः। एवमानु-बन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः स्थानातिक्रमः। तथाच सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम्। आश्विनग्रहणा-

---

सोमरसनिष्पादनदिने। आनुबन्ध्या वन्ध्या गौस्तत्पशुपुरोडाशदिने आनुबन्ध्य-दिने आनुबन्ध्य पशुयागः। अन्ते—अवभृथोत्तरकाले, साद्यस्कः—सहक्रियते साद्यस्कः सोमयागविशेषः साद्यस्कः सोमयागविशेषः साद्यस्कः, स च अव्यक्त-त्वात्—स्वार्थचोदितदेवताव्यक्तिरहितत्वात्। अव्यक्तत्वं स्वार्थचोदितदेवता-रहितत्वम्। अतः सः साद्यस्कः ज्योतिष्टोमविकार एव। **अतः**—ज्योतिष्टोम-विकारत्वात्। **ते त्रयोऽपि**—अग्नीषोमीयसवनीयाऽऽनुबन्ध्याश्चेति यागाः, पशुद्रव्यकयागाः। **साद्यस्के यागे** 'प्रकृतिवद्विकृतिः कर्तव्ये'तिचोदकेन वाक्येन प्राप्ताः, विकृतयस्त्रयो यागाः प्रकृतिवत्त्वं साद्यस्कवत्त्वं प्राप्ताः, साद्यस्काऽ-नुष्ठानप्राप्ताः, अतस्तेषां त्रयाणां तत्र साद्यस्के साहित्यं श्रुतम् 'सहपशूनाल-भेते'ति। **तच्च साहित्यम्**—एकदिनीयमेवाऽनुष्ठानम्। सवनीये मध्ये देशे दिने भवति। तस्य सवनीयदेशस्य प्रधानप्रत्यासत्तिमत्त्वम्—प्रकृतिभूते ज्योतिष्टोमे सुत्याकालिकः सवनीयः प्रधानप्रत्यासन्नः, तथा तद्विकृतिविशेषे साद्यस्केऽपि सवनीयकालिकः प्रधानप्रत्यासन्नश्च प्रत्यासत्तिः—प्रधानता-प्राप्तिः। तथा सवनीयदेशे साहित्ये त्रयाणां स्वस्वस्थानातिक्रमसाम्यं च हेत्वन्तरमपीत्याह—**स्थानातिक्रमसाम्याच्चेति**। स्थानस्य पार्श्वयोर्द्वयोर्मध्ये क्रमणं गमनं तत् साम्यम्। प्रान्ते गमनं तु एकस्य मध्यस्य ह्रस्वं प्रान्तान्तस्य तु मध्यव्यवधानयुतं तत् मध्यप्रान्तयोः समं स्थानं न भवति, अतिक्रमणमभि-गमनं समं न भवति, इत्येतद्दर्शयति—**सवनीयदेशे** इति। मध्ये सवनीयदेशे त्रयाणां सहानुष्ठाने प्रान्तस्थयोरग्नीषोमीयानुबन्ध्यानुष्ठानयोः स्वस्य स्वस्य प्रान्तस्य स्थानस्याऽतिक्रमस्त्यागः समानो भवति अव्यवधानो भवति सुत्या-कालिकसवनीयस्य स्वस्थानस्थितिर्भवतीति लाघवम्। प्रधानकर्मसम्बन्धश्च समो भवति। प्रथमेऽग्नीषोमीयदेशे तद्दिने औपवसथ्ये आदिमध्यमान्तानाम-नुष्ठाने तु **सवनीयस्य स्वस्थानत्यागमात्रमिति** स्वीयानुष्ठानीयमध्यमस्थान-त्यागमात्रम्, अग्नीषोमीयस्थाने औपवसथ्येऽह्नि सर्वेषामनुष्ठाने **अग्नीषो-मीयस्य** सवनीयप्रधानसोमप्रत्यासत्तिबलात् साहित्यविधिप्राप्तसुत्याकालरूप-सवनीयस्थानरूपनिर्णीतस्वस्थानत्यागः, **आनुबन्ध्यस्य तु स्वस्थानेति**। स्वीयान्तस्थानातिक्रमो भवति, तथा, **सवनीयेति**—तादृशसवनीयस्थानरूप-निर्णीताऽनुष्ठानीयमध्यमस्वस्थानत्यागो भवति, इत्यौपवसथ्येऽह्नि **त्रयाणां**

नन्तरं हि सवनीयदेशः। प्रकृतौ 'आश्विनग्रहं कृत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोती'त्याश्विनग्रहणानन्तरं सवनीयो विहित इति साद्यस्क्रेऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवति।

---

स्वस्वनियमितनिर्णीतत्यागात्मकाऽतिक्रमणम्, केवलम् औपवसथ्यस्थानस्यैवाऽग्नीहोत्रस्य श्रुत्यनभिमतस्य रक्षणं भवतीति चतुर्थोऽपि दोष एव न तु गुणः। एवं त्रयाणाम् आनुबन्ध्यस्थानेऽनुष्ठानेऽग्नीषोमीयस्य दूषण्य इति। अग्नीषोमीयस्य श्रुतिनिर्णीतमध्यमसवनीयस्थानात्मकस्वस्थानाऽनुष्ठानस्याऽतिक्रमोऽगमनं त्याग एको दोषः, स्वीयाऽन्तस्थानस्याऽतिक्रमो द्विदीयो दोषः, आनुबन्ध्यस्य सवनीयस्थानीयानुष्ठानरूपस्वस्थानत्यागस्तृतीयो दोषः, अनभिमते स्थानेऽनुष्ठानं चतुर्थो दोषो भवति। अनभिमतस्थानेऽनुष्ठाने सर्वेषां नैष्फल्यदोषश्चाऽकृत्वीयत्वमपीति सर्वथाऽतिक्रमणं स्वरूपातिक्रमणमपि विनाशे पर्यवसानो दोषश्च। **स्थानातिक्रम इति**। प्रान्तेऽनुष्ठाने, अननुष्ठातव्यस्थानग्रहणम्, अनुष्ठातव्यस्थानत्यागः, त्रयाणां दूषणं स्वदिनस्थानत्यागश्चेति द्वयोः दूषणानि भवन्ति। **तथा चेति**। अतिक्रमणानुपस्थानार्थम्। **सवनीयदेशे**—सुत्यादिने सवनीयपश्वनुष्ठानप्रदेशे मध्यमदिने। **सर्वेषां**—सवनीयस्य प्रान्तस्थयोश्चाऽग्नीषोमीयाऽऽनुबन्ध्ययोश्च। **अनुष्ठाने** कर्तव्ये श्रुतिनिर्णीते सति। मध्यस्य **सवनीयस्य** पशोः प्रथममनुष्ठानं भवति। कुतः ?, **आश्विनग्रहणानन्तरं हीति**। (५।१।६।१३)। 'स्थानाच्चोत्पत्तिसंयोगादि'त्यस्य सूत्रस्य भाष्ये वार्तिके न्यायमालायां च निर्णीतम्। किं निर्णीतम् ?, तत्पूर्वपक्षीकृत्य ज्ञातव्यम् 'अश्विनीकुमारदेवताको ग्रहः आश्विनग्रहः, आश्विनग्रहणादूर्ध्वं सवनीयपशुरालभ्यते, इत्येवम् उक्तम्, तथाहि—स्थानात् सवनीयस्य प्राथम्ये निश्चितस्थानभ्रष्टयोः अग्नीषोमीयाऽऽनुबन्ध्ययोर्मध्यतः अग्नीषोमीयस्य प्रथममनुष्ठानम् आनुबन्ध्यस्य तु पश्चादनुष्ठानम्, तत्र न्यायमालायां—साद्यस्क्रनामकः कश्चित्सोमयागः, तत्र श्रूयते—'सह पशूनालभते' इति। प्रकृतौ अग्नीषोमीयपशुः औपवसथ्ये दिने आलभ्यते, सवनीयपशुः सुत्यादिने, प्रातःसवने आश्विनग्रहाद् ऊर्ध्वम् आलभ्यते, आनुबन्ध्यः पशुः अवभृथादूर्ध्वम् आलभ्यते, इह तु त्रयोऽपि पशवः सहाऽऽलब्धव्याः, सोऽयं सहाऽऽलम्भः सुत्यादिने आश्विनग्रहादूर्ध्वं सवनीयस्थाने भवतीति, एतदवश्यमभ्युपेयम्, तथा सति प्रधानसोमप्रत्यासत्तिलाभात्। सवनीयो हि स्वस्थाने वर्तते; आश्विनग्रहसमीपस्य सवनीयस्थानत्वात्, आश्विने गृहीते सति सव-

**अतो युक्तं तस्य स्थानात्प्रथममनुष्ठानम्, इतरयोस्तु पश्चादित्युक्तम् ॥**

**प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः, येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव क्रमेण चेत्तेषामंगानुष्ठीयन्ते, तदा सर्वेषा-**

---

नीय एव बुद्धिस्थो भवति, प्रकृतौ तदानन्तर्यस्य क्लृप्तत्वात्। ततः सवनीयस्य प्राथम्ये स्थानान्निश्चिते सति स्थानभ्रष्टयोरग्नीषोमीयाऽऽनुबन्ध्ययोः प्रकृताविव पूर्वत्वमुत्तरत्वं च द्रष्टव्यम्। आदौ सवनीयपशोरनुष्ठानं पश्चादितरयोः, तत्राऽपि अग्नीषोमीयस्य प्रथमम्, आनुबन्ध्यस्य पश्चात् अनुष्ठानमिति प्रथमतृतीयस्थानानुक्रमबलात् निर्णीतम्। प्रातःसवने आश्विनग्रहाऽनुष्ठानोत्तरं सवनीयदेशः सवनीयाऽनुष्ठाननिर्देशः। वैकृतसवनीयस्थाननिर्णयोपायः प्राकृतं सवनीयस्थानं श्रुतिरेव दर्शयतीत्याह **प्रकृताविति**। प्राकृते मन्त्रबोधिते सवनीयस्थाने प्रकृताविवाऽनुष्ठितौ। 'आश्विनग्रहं कृत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' प्रातः आश्विनग्रहानुष्ठानानन्तरं त्रिवृता त्रिगुणितरज्ज्वा दर्भरशनया, यूपं यज्ञीयस्तम्भं खादिरादिपवित्रकाष्ठकृतम् ऊर्ध्वहस्तपुरुषपरिमाणं लम्बं, परिवीय परिवेष्टनं कृत्वा, आश्विनः अश्विनीकुमारदेवताकः सोमग्रहो द्रव्यम् आग्नेयः सवनीयपशुरूपः सोमरसोग्रहीतव्यः, तद्ग्रहणानन्तरं ज्योतिष्टोमे **सवनीयो विहितः। इति**— इत्येवं **साद्यस्केऽपि** यागे आश्विनग्रहेऽनुष्ठिते सत्येव सवनीयग्रहः स्थानात् क्रमस्थानात् उपस्थितः स्मृतिविषयो भवति, सोऽनुष्ठातव्यः। **अतो** हेतोः, **तस्य**—सवनीयस्य, स्थानक्रमप्रमाणबलात् प्रथममनुष्ठानं, **युक्तम्**—चोदकसाहाय्ययुक्तिमत्, **इतरयोस्तु**—आग्नीषोमीयाऽऽनुबन्ध्ययोस्तु। **पश्चात्**—सवनीयानन्तरमिति। तयोरपि प्रथमम् अग्नीषोमीयस्य तत आनुबन्ध्यस्याऽनुष्ठानमिति। 'प्रकृतिवद्विकृतिः कर्तव्या' भवतीति तयोः प्रकृताविव पूर्वोत्तरभावः। **इत्युक्तम्** (५।१।६।१३) न्यायमालादावपि ॥

अथ मुख्यक्रमं लक्षयति—**प्रधानक्रमेणेति**। अंगानां स्वेषां स्वेषां प्रधानानां क्रमैः ये स्वेषां क्रमास्ते मुख्यक्रमाः, प्रधानाऽधीना मुख्याऽधीना मुख्याः क्रमाः। **येनेति**। यदा येन पूर्वमध्यमचरमादिक्रमेण प्रधानान्यनुष्ठानानि क्रियन्ते, तेनैव क्रमेण प्रधानक्रमानुवर्तिक्रमेण तेषां प्रधानानां यानि यानि यथायथम् अंगानि समनुष्ठीयन्ते तदा तदा सर्वेषामंगानां स्वैः स्वैः स्वैः स्वस्वक्रकनियामकप्रधानैस्तुल्यं क्रमिकं व्यवधानं समपंक्तौ समांकपतितं **व्यवधानं** समानुधानं **भवति,** चेत्! तदा, यदा यत्राऽनेकेषां सांगानां प्रधानानां सहकर्तव्यताऽवर्ज्या भवति तत्र तत्र तदा प्रयोगविधिनाऽगप्रधानयोः साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वी-

मङ्गानां स्वैः स्वैः प्रधानैस्तुल्यं व्यवधानं भवति। व्युत्क्रमेणानुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानं केषाञ्चिदत्यन्तं व्यवधानं स्यात्।

---

कारेऽपि तदधिकव्यवधाने प्रमाणाऽभावात् प्रधानप्रत्यासत्यनुग्रहाय मुख्य-क्रमेणैवांऽगक्रमनियमो भवति। अत एव मुख्यक्रमस्य बीजं प्रधाननिरूपित-प्रत्यासत्त्यनुग्रहः। प्रवृत्तिक्रमस्य बीजं तु अंगनिरूपितप्रत्यासत्त्यनुग्रहः॥

दर्शपूर्णमासप्रकरणे प्रयाजोऽनुयाज उपांशुश्चेति प्रधानयागा उक्ताः प्रधानाः, तत्र प्रयाजाः पञ्च—१. समित्, २. तनूनपात्, ३. इट्, ४. बर्हिः, ५. स्वाहाकारः इति। तन्नामानो देवाः प्रधानदेवताश्चतुर्णाम्, पञ्चमस्य स्विष्टकृत्। आज्यभागः, प्रयाजः, अनुयाजश्चेति देवतास्तत्र तत्र कर्मसु निर्दिष्टाः। अनुयाजास्त्रयस्त्रिदेवताकाः—देवो बर्हिः, देवो नराशंसः, देवोऽग्निः स्विष्टकृत्। इत्येतन्नामानो यागाश्च। उपांशुयाजः आपस्तम्बीयानां काण्डेन॥

अथ पूर्णमासे यागे—प्रयाजे त्रयस्त्रयो यागाः,—आग्नेयः, उपांशुः, अग्नीषोमीयश्चेति प्रधानाः। तत्र १. अग्निदेवताकः आज्यद्रव्यको व्रीहियव-पुरोडाशद्रव्यकश्च यागः आग्नेयः। २. विष्णुप्रजापत्यग्नीषोमान्यतमदेवताकः आज्यद्रव्यकः उपांशुयाजः। ३. अग्नीषोमदेवताकः आज्यभागद्वयद्रव्यकः व्रीहियवपुरोडाशखण्डद्वयद्रव्यकश्च॥

अथाऽमावास्यायां दर्शयागेऽपि प्रयाजे त्रयो यागाः, आग्नेयः, ऐन्द्रः, ऐन्द्रश्च, तत्र १. अग्निदेवताकः आज्यद्रव्यको व्रीहियवपुरोडाशद्रव्यकश्च यागः आग्नेयः। २. इन्द्रदेवताको दधिद्रव्यकः आज्यद्रव्यकश्च ऐन्द्रयागः। ३. इन्द्रदेवताकः पयोद्रव्यकः आज्यद्रव्यकश्च माहेन्द्रो यागः, यद्वा दधिपयसो-र्मिलितयोर्यागः सान्नाय्ययागः ऐन्द्रदेवताकः। एते एकद्वित्रितयप्रधानक्रमानु-सारेण तत्तन्नियतमुख्यांऽगक्रमेणाऽनुष्ठेयाः। आज्यं सर्वदेवताकं द्रव्यं, तस्य धर्माः पुरोडाशस्य दध्नः पयसश्च धर्माः, पात्र्यां घृतादिक्षेपणम् उपस्तरणं घृतादिक्षारणम्, अभिघारणं हवनम् आसादनमित्याद्याः, एतानि अंगानि धर्मात्मकानि। तत्र—आग्नेयो यागः पौर्णमास्यां यथा कृतः, तथैव सः, तदंगानि च, अमावास्यायाम् अनुतिष्ठेरन्। अमायां तत्र प्रधानक्रमाधीन-मुख्यक्रमेण तद्धर्माणामपि क्रमेणैवाऽनुष्ठानम्। तत्र प्रथम आग्नेयोऽतः प्रथमम् आज्यपुरोडाशाभिघारणम्, ततश्च ऐन्द्रः, अत एव ततः ऐन्द्रदध्यभिघारणं, तत एवापि ऐन्द्रः, अतः पयोऽभिघारणम्, इत्येवम् एकैकमेषाम् इति-

तच्चाऽयुक्तं, प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधान-

---

कर्तव्यतां सन्निहिताम् अभिलषति, सहत्वयोगात् द्विक्षणव्यवहितामेकैकम् , प्रत्यक्षपाठाच्च पूर्वं पूर्वस्य धर्माः, ततो द्वितीयस्य, ततस्तृतीयस्य धर्मा अनुष्ठातव्याः, इत्येवं प्रधानक्रमाधीनतदंगधर्मक्रमः ॥

तत्र यदि दध्नोऽवधारणं प्रथमं क्रियेत, पयसो वाऽवधारणं प्रथमं क्रियेत, पश्चात् आज्यपुरोडाशद्रव्यस्येति, तदा प्रधानाऽग्नेयांऽगक्रमो बाध्येत, आग्नेयस्यैकान्तरितं द्व्यन्तरितं वा स्वांगाऽवधारणं स्यात्, एकस्मिन् द्वये वा बाध्यमाने विप्रकृष्टता स्यात्, तेन प्रवृत्तिक्रमोऽपि बाध्येत; तेन यागक्रिया बाध्येत, अपूर्वाऽजनकत्वेन सर्वमपि निष्फलं स्यात् । तस्मात्पूर्वस्य पूर्वमवधारणम् , द्वितीयस्य द्वितीयमिति । अत्र शाबरभाष्यम्—"यथाप्रदानं वा तदर्थत्वात्" ( ५।४।२।३ ) । यथाप्रदानं वा कर्तव्यानि, यस्य प्रदानं पूर्वं तस्याऽवदानाभिघारणाऽऽसादनानि पूर्वम् । तस्माद् आग्नेयस्य । कुतः ?, प्रदानचोदनागृहीतत्वात् अवदानादीनाम् , प्रदानोपक्रमा एते, न पृथक्पदार्था इत्युक्तम् । अभिघारणम् अवदानं च तस्य प्रदानचिकीर्षयैव क्रियते, आसादनमपि प्रदानार्थमेवाऽऽसन्नकरणम् । एवं दृष्टार्थता भवति । तस्मान्मुख्यक्रमेणांऽगानां प्रयोगः । मुख्यक्रमे गृह्यमाणे प्रथमः एकः पदार्थो विप्रकृष्टकालः स्यात् , आवृत्तिके पुनर्गृह्यमाणे सर्वेषां विप्रकर्षः । तस्मान्मुख्यक्रमो बलीयानिति ॥ पूर्णायां त्रिरनुष्ठेयाः सकृत् । अमायां चिरनुष्ठेयाः सकृत् ॥

प्रधानक्रमेणेति । दर्शयागे प्रयाजादिषु प्रयाजे ये प्रधानास्त्रयः,—आग्नेययागः, ऐन्द्रदधियागः, ऐन्द्रपयोयागश्च, तत्र दधिपयसोरैक्यं सान्नायद्रव्यं, तस्य देवता इन्द्रः एकः एको यागश्च द्वयोर्मेलनेन भवतीति प्रधानौ द्वौ—१. आग्नेययागः, २. ऐन्द्रयागश्च । तयोः क्रमेण योंऽगानाम् आग्नेयहविरभिघारणं आज्याभिघारणं साज्यपुरोडाशाऽभिघारणम् , तथा ऐन्द्रहविरभिघारणम् आज्याभिघारणं साज्यदधिपयोरूपसान्नायाभिघारणम् , एतेषाम् अंगकर्मणां यः क्रमः—आग्नेयहविरभिघारणानन्तरैन्द्रहविरभिघारणात्मकोंऽगक्रमः, सोऽयं मुख्यक्रमः, प्रधानक्रमानुसारो तदीयांऽगक्रमः, तत एव आग्नेययागः, ऐन्द्रयागश्चांगी अनुष्ठातव्यो भवति । येन ह्रीति । दर्शे प्रयाजादौ, येन प्राथम्येन प्रधान आग्नेयः प्राथम्योत्तरेण ऐन्द्रः यागः प्रधानात्मकः क्रियते, पूर्णमासे तु प्रयाजादौ आग्नेय उपांशुरग्नीषोमीयस्त्रयः प्रधाना यागाः, तेषां प्रधानानां क्रमेण प्राथम्येनाऽऽग्नेयः, प्राथम्योत्तरेणोपांशुः, तदनन्तरमग्नीषोमीयः, इति प्रधानानि क्रियन्ते, तेनैव क्रमेणेति । तयोराग्नेयैन्द्रयागयोः क्रमेण, तथाऽऽग्नेयोपांश्वग्नीषोमीयानां क्रमेण प्रधामक्रमेण । चेत् तेषाम् ।

क्रमोऽप्यङ्गक्रमे हेतुः। अत एव प्रयाजशेषेणाऽऽदौ आग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः, आग्नेयैन्द्रयागयोः पौर्वापर्यात्। एवं च द्वयोरभिघारणयोः स्वस्वप्रधानेन तुल्यमेकान्तरितं व्यवधानम्, व्यु-

---

यदि द्वयोर्दर्शकालीनयोः, त्रयाणां पूर्णमासकालीनानाम्। अंगानि—आग्नेयहविरभिघारणम्, ऐन्द्रसान्नायात्मकदधिपयोऽभिघारणम्, अनुष्ठीयन्ते क्रियन्ते। तदा—तत्कालीनाऽनुष्ठेयानां **सर्वेषामङ्गानाम्**—आग्नेयहविरभिघारणमैन्द्रहविरभिघारणम्, आग्नेयहविरभिघारणविष्णुप्रजापत्यग्नीषोमाऽन्यतमीयहविरविघारणाग्निसोमहविरभिघारणानि, चैतेषां तत्तदीयांऽगानाम्। **स्वैः स्वैः**—स्वकीयैः स्वकीयैः। **प्रधानैः**—अनुष्ठेययागैः, आग्नेययागैन्द्रयागाभ्याम्। आग्नेययागोपांशुयागाऽग्नीषोमयागैश्च, **तुल्यं**—निकटं निकटं समानम् एकान्तरितत्वं **व्यवधानं** क्षणकृतमुपस्थानम्, आग्नेयहविरभिघारणात् आग्नेयस्य यथाक्षणिकं व्यवधानं तथैव तथाक्षणिकम् ऐन्द्रहविरभिघारणात् ऐन्द्रयागस्य भवति, नाऽधिकक्षणिकं न न्यूनक्षणिकम्, समविप्रकृष्टत्वसन्निकृष्टत्वं भवति, नाऽधिकविप्रकृष्टत्वसन्निकृष्टत्वं न न्यूनविप्रकृष्टत्वसन्निकृष्टत्वं भवति। एतत्तु मन्त्रऋक्क्रमेण महायागक्रमेण तदन्तःप्रधानयागक्रमेण तदंगक्रमेणानुष्ठानमिति सुव्यवस्थितं भवति॥ आग्नेयहविरभिघारणाऽऽग्नेययागयोर्व्यवधानम्, ऐन्द्रहविरभिघारणेन व्यवधानम् एकान्तरितं भवति, आग्नेयहविरभिघारणं तत ऐन्द्रहविरभिघारणं तत आग्नेययागः तत ऐन्द्रयागश्चेति आग्नेयहविरभिघारणाऽऽग्नेययागयोर्मध्ये ऐन्द्रहविरभिघारणक्षणान्तरायः, एवम्—ऐन्द्रहविरभिघारणैन्द्रयागयोः ऐन्द्रहविरभिघारणं तत आग्नेययागः तत ऐन्द्रयागश्चेत्येवं मध्ये आग्नेययागानुष्ठानक्षणान्तरायः, इत्येवम् एकान्तरितं व्यवधानं समं भवति न तु विषमम्। अथ पूर्णिमाप्रयाजे आग्नेयोपांश्वग्नीषोमीयानां क्रमेण त्रिहविरभिघारणोत्तरं त्रियागानुष्ठाने तत्र—आग्नेयहविरभिघारणाऽऽग्नेययागयोर्मध्ये उपांशुहविरभिघारणाऽग्नीषोमहविरभिघारणात्मकद्विक्षणान्तरायः, उपांशुहविरभिघारणोपांशुयागयोर्मध्ये अग्नीषोमीयहविरभिघारणाऽऽग्नेययागात्मकद्विक्षणान्तरायः, अग्नीषोमीयहविरभिघारणाऽग्नीषोमयागयोर्मध्ये आग्नेययागोपाँशुयागानुऽठानात्मकद्विक्षणान्तरायः, इत्येवं द्व्यन्तरितं व्यवधानं ततः तत्तद्यागा इति समं भवति व्यवधानं न तु विषमम्। एतत्प्रधानक्रमानुयाय्यंगक्रमानुसारिमुख्यक्रमेषु व्यवस्थानं तत्तन्मन्त्रादिप्रमाणमूलकं भवति। एवं सप्तदशप्राजापत्यानां क्रमे षोडशान्त-

**क्रमेणाऽऽघारे त्वाग्नेयहविरभिघारणाऽऽग्नेययागयोरत्यन्तमव्यवधा-नम् , ऐन्द्रदध्यभिधारणैन्द्रयागयोः द्वयन्तरितं व्यवधानं, तच्चाऽयुक्त-मित्युक्तमेव ।**

---

रितं तदंगयागयोर्व्यवधानं सप्तदशानां समानं सर्वेषां षोडशक्षणायं भवति, न तु विषमम् ।। अतः प्रधानक्रमानुसारी अंगक्रमः स मुख्यः क्रमः—दर्शप्रयाजे आदौ आग्नेयहविरभिघारणं तत ऐन्द्रहविरभिघारणं तत आग्नेययागः तत ऐन्द्रयाग इति क्रमो मुख्यक्रमात् सिद्धो भवति ।।

**व्युत्क्रमेणाऽनुष्ठाने इति** । अनुक्रमात् समस्थितस्यैकस्य कस्यचिदंगस्याऽनुष्ठानस्य । स्थानमनादृत्याऽक्रमस्थस्याऽनिकटस्थस्याऽन्यस्य विप्रकृष्टस्य निकटे स्वीकारेण निकटस्थस्य स्थानच्योतनेन परिवर्जनेन वा यदनुष्ठानं स्यात् स व्युत्क्रमोऽनुष्ठानपन्थाः । तथाहि—दर्शप्रयाजे—प्रथममेव ऐन्द्रहविरवघारणं तत आग्नेयहविरवघारणं ततः 'अग्निं यजे'तियाज्यायाः 'अग्नयेऽनुब्रूही'तिपुरोनुवाक्यायाः क्रमवशात् प्रथमम् आग्नेययागानुष्ठानं तत ऐन्द्रयागाऽनुष्ठानमिति व्युत्क्रमः विक्रमः स्वीक्रियते तदा । **केषाञ्चिदंगानाम्**—आग्नेयहविरवघारणस्यांऽगस्याऽऽग्नेययागस्य प्रधानस्याऽतिनैकट्यात् अव्यवधानेनाऽनुष्ठानं प्राप्तं भवति । यतः आग्नेयहविरभिघारणानन्तरमेवाऽऽग्नेययागानुष्ठानमुपतिष्ठते विक्रमसान्निध्यात् इत्यत्यन्तमव्यवधानम् । अथ ऐन्द्रहविरभिघारणस्य प्राथम्यं प्राप्तस्यांऽगस्य तदनन्तराऽनुष्ठीयमानस्य आग्नेयहविरभिघारणाऽनुष्ठानाऽऽग्नेययागानुष्ठानात्मकद्वयनुष्ठानात्मकद्विक्षणान्तरिततया तद्द्वयानुष्ठानोत्तरमेव ऐन्द्रयागस्याऽनुष्ठानं प्राप्तं स्यात् , तत् ऐन्द्रहविरभिधारणात् विषमक्रमवत्त्वेन दूरं विशेषतो विप्रकृष्टं स्यात्, द्वयोरंगांऽगिनोः ऐन्द्रहविरभिघारणैन्द्रयागयोरत्यन्तदूरं व्यवधानं स्यात्, द्वयोरंगांऽगिनोः आग्नेयहविरभिघारणाऽऽग्नेययागयोः अत्यन्तनिकटतयाऽव्यवधानमेव स्यात्, तेन च यथोदिताऽपूर्वाऽनुत्पत्तेर्यागस्य प्रधानस्य भंगेन महाऽपूर्वभंगेन यागनैष्फल्यं स्यात् । **स्वैः प्रधानैरिति** । ऐन्द्रयागेन प्रधानेन सह स्वस्यांऽगस्यैन्द्रहविरभिघारणस्य । **अत्यन्तम्**—निरवकाशम् , एकेन क्षणेनाऽपि अनन्तरितम् । अव्यवधानं, संश्लिष्टानुष्ठानं स्यात् । **केषाञ्चिदिति** । आग्नेयहविरभिघारणस्यांऽगस्य स्वेन प्रधानेन आग्नेययागेन सह तु **अत्यन्तम्**—द्वयन्तरितं, प्राथम्येनाऽनुष्ठितस्य ऐन्द्रहविरभिवारणस्य, ततोऽनुष्ठितेन आग्नेयहविरभिघारणेन तल्लग्नितानुष्ठितेनाऽऽग्नेययागेन च व्यवधायकेन द्वयेन युगलेन द्विक्षणाऽवस्थितिनियतेन, द्वाभ्यामत्यन्तं दूरं द्वयं त्रयं हित्वा तुर्यं स्थानमनुष्ठानार्थं प्राप्तं विप्रकृष्टतरं स्यात् ।। एवं

पूर्णातिथौ प्रयाजे प्रथमं द्वितीयं वा विहाय द्वितीयं तृतीयं वा हविरभिघारणमाद्यमनुतिष्ठेत ततः प्रथमं, तर्हि तु द्वितीयस्याऽऽग्नेयस्यैकान्तरितं व्यवधानं स्यात्, प्रथमस्य आग्नेयस्य निर्व्यवधानं स्यात्, उपांशुहविरभिघारणस्य तदनन्तरजायमानैः आग्नेयाऽभिघारणा-ऽग्नीषोमीयाऽभिघारणा-ऽऽग्नेययागैः, त्रिरनुष्ठितैरतिव्यवधानं स्वांगस्य उपांशुयागात्मकप्रधानेन सह स्यात्। यदि तु—अग्नीषोमहविरभिधारणं प्रथमं क्रियेत, तदा तदनन्तरम् आग्नेयाऽभिघारणो-पांशुद्रव्याभिघारणा-ऽऽग्नेययागोपांशुयागैश्चतुरनुष्ठितैरतितरव्यवधानम् अग्नीषोमदेवताकप्रधानयागेन सह स्वांगस्य स्यात्। आग्नेयहविरभिधारणस्य आग्नेययागेन सह तु निरवधानमेवाऽनुष्ठानम् उपांशुहविरभिघारणाऽऽग्नेययागयोरव्यवधानं चात्यव्यवधानं च स्यात्। इत्येवं व्युत्क्रमेऽपूर्वानुत्पत्तेर्यागाऽनिष्पत्तौ सर्वं निष्फलं स्यात्॥

**तच्चाऽयुक्तमिति**। व्युत्क्रमाऽनुष्ठानम्, केषाञ्चिदंगानां स्वस्य प्रधानैः अत्यन्तमव्यवधानं केषाञ्चिदत्यन्तं च व्यवधानम्, इत्येतत्, तत्तन्मन्त्रक्रमप्रधानक्रमनियमरहितं, न योग्यम्, अपूर्वाऽजनकत्वात्। हानिमाह—**प्रयोगेति**। प्रयोगविधिस्तेषां तेषां यथा यथा भवति ये ये प्रधानविधयस्ते प्रयोगविधयः—आग्नेयविधिरैन्द्रविधिः प्राजापत्यविधिः वह्निसोमविधिस्ते प्रयोगविधयः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन यजेत' 'सोमेन यजेत' 'प्रयाजान्यजति' 'अनुयाजान् यजति' 'उपांशून् यजति' 'पुरोडाशं सान्नाय्यं जुहुयात्' 'दध्ना जुहोति' 'पयसा जुहोति' 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाऽच्युतो भवति' 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' 'सह पशूनालभेत' इत्यादौ यत् यदवगम्यते साहित्यम्, अंगानां यथोदितं साहित्यम् अंगप्रधानसाहित्यम्, तस्य सहाऽव्यवहितोचरकर्तव्यादिरूपस्य साहित्यस्य सहानुष्ठानरूपस्य, बाधः—असाहित्यम्, अक्रमानुष्ठानम्, क्रमाऽनुष्ठानाऽभाववत्त्वं बाधः, विपरीतसहभावोऽपि बाधः, आपद्येत, 'साहित्यबाधः स्यात् अपूर्वसिद्धिर्न स्यादि'त्यापत्तिः स्यात्, अन्ततः यागस्वरूपमेव विलीयेतेति। **अतः**—उक्तबाधाद्यापत्तिर्न स्यात् अपूर्वसिद्धिः स्याच्चेति हेतोः। **प्रधानक्रम इति**। प्रधानानामाग्नेयैन्द्रादीनाम् आग्नेयप्राजापत्याऽग्नीषोमादीनां च यः क्रमो यथाऽऽवेदितस्तथाविध एव सः तत्तदीयांऽगानाम् आज्यहविरभिघारणादीनां क्रमे हेतुः नियामकः समव्यवधानानुप्रसक्तः सन्नेव प्रयोजको भवति। **अत एवेति**। प्रधानक्रमस्यांऽगक्रमो हेतुत्वादेव। **प्रयाजशेषेणेति**। दर्शयागादौ प्रयाजयागेऽनुष्ठितं शेषभूतं यदाज्यं तेनाऽऽज्येन शेषेण "जुहूस्थेनाऽऽज्येन त्रीन्प्रयाजान्

**स च मुख्यःक्रमः पाठक्रमाद् दुर्बलः। मुख्यक्रमो हि प्रमाणान्तर-सापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः। पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्।**

---

हुत्वा चतुर्थप्रयाजार्थम् औपभृतस्याऽऽज्याऽर्धं जुह्वा समानीय तेन चतुर्थ-पञ्चमौ प्रयाजाविष्ट्वा जुह्वां किञ्चिदाज्यमवशेष्य तेन वेद्यामासादितौ पुरोडाशौ अभिघारयेत्, एवमेव सर्वत्र प्रयाजाऽऽज्याऽवशेषेण यागीयप्रधान-हवींष्यभिघारयेत्", इत्येवं स्मार्तवचनैः, **आदौ**—प्रथमं क्रमप्राप्तस्याऽऽग्नेय-हविषोऽभिघारणम्, पश्चादैन्द्रहविषो दध्नः पयसः, उभयात्मकसान्नायस्याऽ-भिघारणम्। तत्र हेतुमाह—**आग्नेयेति**। दर्शप्रयाजे आग्नेयैन्द्रयागयोः पौर्वा-पर्यक्रमात्, आग्नेयः प्रथमः ऐन्द्रस्तत इति प्रधानक्रमात् मुख्यक्रमवत्त्वात्। **एवं चेति**। इत्युक्तप्रकारेणाऽनुष्ठाने। द्वयोः आग्नेयहविरभिघारणैन्द्रदध्याद्य-भिघारणयोरंगयोः स्वस्य स्वस्यांऽगस्य यत्प्रधानम् आग्नेययागः ऐन्द्रयागश्च तेन तेन प्रधानेन आग्नेययागेन सहाऽऽग्नेयहविरभिघारणस्य ऐन्द्रहविरभि-घारणव्यवधानात् एकान्तरितत्वम्, ऐन्द्रहविरभिघारणस्याऽऽग्नेययागमात्रव्-व्यवधानात् एकान्तरितस्वरूपं व्यवधानं समं भवति। **व्युत्क्रमेणाऽऽघारे**—ऐन्द्रदध्याद्याघारे प्रथमे कृते सति तु। **आग्नेयेति**। आग्नेयहविरभिघारणाऽऽ-ग्नेययागयोरत्यन्तमव्यवधानं भवति, ऐन्द्रहविरभिघारणैन्द्रयागयोर्मध्ये आग्नेयहविरभिघारणाऽऽग्नेययागकरणात्मकद्व्यन्तरितं व्यवधानं भवति तद्विषयानुष्ठानं क्रमविरुद्धम् अपूर्वाऽजनकम्, **तच्चाऽयुक्तमित्युक्तमेवेति**। क्व उक्तम्?, प्रयोगविध्यंवगतसाहित्यबाधापत्तित्वाद् अयुक्तत्वयुक्तं पूर्वं तत्पंक्तिव्याख्याने स्पष्टीकृतं गतप्रदमेव॥

अथ पाठक्रमात् मुख्यक्रमस्य दौर्बल्यमाह—**स चेति**। उक्तोऽङ्गक्रमात्मको मुख्यक्रमः प्रधानक्रमानुवर्त्यपि पाठक्रमात्प्रमाणात् दुर्बलप्रमाणको भवतीति दर्शयति—**मुख्यक्रमो हीति**। हिः हेत्वर्थे। यतो मुख्यक्रमः मन्त्रात्मकप्रमा-णान्तरसापेक्षा या प्रधानक्रमस्य प्रतिपत्तिः प्राप्तिः सिद्धिः, तत्सापेक्षत्वेन विलम्बितपारम्परिकप्रतिपत्तिकत्वेन दुर्बलः। **पाठक्रमस्त्विवति**। प्रमाणान्तर-निरपेक्षो यः, स्वाध्यायपाठक्रमः, स्वस्य पाठक्रमस्य बोधकोऽधीयमानो यः पाठः क्रमः; तत्क्रमसापेक्षः पाठक्रमः सः। **न तथेति**। न प्रमाणान्तरसापेक्ष-प्रधानक्रमसम्प्रतिपत्तिसापेक्षः। **इतिहेतोः**। बलवान्, न तु दुर्बलः, तद्बलेन **बलवानिति**।

दर्शपूर्णमासयोः प्रकरणे पौर्णमास्याम् आग्नेयः उपांशुः अग्नीषोमीयश्चेति

**स चाऽयं मुख्यः क्रमः प्रवृत्तिक्रमाद् बलवान् । प्रवृत्तिक्रमे हि बहूनामंगानां प्रधानविप्रकर्षात् , मुख्यक्रमे तु सन्निकर्षात् ।**

---

त्रयो यागा आम्नाताः तत्राऽऽग्नेययागस्याऽग्निदेवताकस्य द्रव्यमाज्यं व्रीहियवपुरोडाशः । उपांशुयाजस्य द्रव्यं विष्णुप्रजापत्यग्नीषोमान्यतमदेवताकं द्रव्यमाज्यम् । आज्यस्य धर्मा उत्पवनचतुर्गृहीतत्वादयः । अग्नीषोमीययागस्याऽग्निसोमदेवताकस्य द्रव्यमाज्यं व्रीहियवपुरोडाशः, तस्य धर्मा निर्वापाऽवघातादयः । तत्र पूर्वपक्षः । मुख्यास्त्रयः प्रधानाः । तत्र द्वितीयतृतीययोरत्र विचारः । मुख्यौ उपांशुयाजाऽग्नीषोमीयौ पूर्वोत्तरभाविनौ । तत्र च प्रधानक्रमेणांऽगक्रमाश्रये प्रथममाज्यधर्माणाम् उत्पवनचतुर्गृहीतत्वादीनामनुष्ठानं प्राप्तं, न तु पुरोडासधर्माणां निर्वापाऽवघातादीनाम् ॥ तत्र सिद्धान्तः— ओषधकणधर्मा हि निर्वापादयः पूर्वमाम्नाताः । आज्यधर्मा रसधर्माः पश्चादाम्नाताः । अतो मुख्यक्रमप्रयुक्तम् आज्यधर्माणाम् प्राथम्यम् बाधित्वा पाठक्रमानुरोधेन ओषधकणधर्माः प्रथमतोऽनुष्ठेयाः । पाठक्रमो हि वैदिको वैदिकशब्दैः सहसा प्रतीयते । मुख्यक्रमानुसारो तु क्रम उपपत्त्या कल्पनीयो न सहसा प्रतीयते । तस्मात् अग्नीषोमीयपुरोडाशार्था ओषधधर्माः प्रथममनुष्ठेयाः । आज्यधर्मास्तु पश्चादनुष्ठेया इति पाठक्रमो बलवान् न तु मुख्यक्रम इति ॥

**स चाऽयं मुख्यक्रम इति ।** प्रवृत्तिप्रमाणकक्रमापेक्षया तु मुख्यक्रमो बलवान्, मुख्यक्रमे बहूनामंगानां प्रधानसन्निकर्षात् । प्रवृत्तिक्रमे तु बहूनामंगानां प्रधानविप्रकर्षात् । अतः प्रवृत्तिक्रमो निर्बलः । तथाहि—'दर्शपूर्णमासयोर्देशे आदौ आग्नेययागस्य अग्निदेवताकस्य आज्यपुरोडाशद्रव्यकस्य यागस्य प्रथममनुष्ठानम् । ततः सान्नाय्ययागस्य दधिपयोमिश्रणद्रव्यकस्येन्द्रदेवताकस्य पश्चादनुष्ठानम् । सान्नाय्यधर्माः केचन वत्सापाकरणदोहनादयः पूर्वमनुष्ठीयन्ते, तत्र प्रवृत्तिक्रममाश्रित्य सान्नायधर्मा अन्येऽपि यदि अवदानाऽभिघारणहविरासादनादयश्चापि पूर्वमेवाऽनुष्ठीयेरन् , तत आग्नेयधर्मा अवदानादयः आग्नेययागानुष्ठानं च क्रियेत । ततः सान्नाय्ययागानुष्ठानं, तदा सान्नायधर्माणां सर्वेषां स्वप्रधानेन यागेन सह, द्वाभ्यामाग्नेयधर्मतद्यागानुष्ठानाभ्यां विप्रकर्षो दूरत्वं स्यात् । यदा तु सान्नायधर्माणां केषाञ्चिद्वत्सापाकरणदोहनादीनां पूर्वमनुष्ठानम्, अन्यधर्माणामवदानादीनां मुख्यक्रममाश्रित्य आग्नेयधर्मानुष्ठानानन्तरमनुष्ठानं, तदा सर्वेषामाग्नेयधर्माणां सान्नाय्यधर्माणाम् एकैकेन विजातीयेन व्यवधानं भवति । आग्नेयधर्माणां स्वप्रधानेन

सहप्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्याऽनुष्ठाने कर्तव्ये हि द्वितीयादिपदार्थानां प्रथमाऽनुष्ठितपदार्थक्रमाद् यः क्रमः सः प्रवृत्तिक्रमः ।

---

सह सान्नाय्यधर्मैर्व्यवधानात् सान्नाय्यधर्माणां च स्वप्रधानेन सहाऽऽग्नेयाऽनुष्ठानेन व्यवधानात् न विप्रकर्षः ॥

तत्र दर्शेऽमावास्यायां प्रातर्गोभ्यो वत्सानां दूरीकरणम् , वत्सापाकरणम्, गवां गोचरप्रदेशान्प्रतिप्रेषणम्, सायं तासां गवां दोहनम् , तत्पयसां सुश्रुतीकरणम्, कवोष्णे आतञ्चनाऽऽसिञ्चनम् , श्वः शुक्लप्रतिपदि प्रातः पुनर्वत्सापाकरणम् , प्रातर्दोहनम्, पात्रासादनम् , मध्याह्नोत्तरं पिण्डपितृयजनम् , सायं दुग्धदध्नोः पर्यग्निकरणम्, हविरभिमर्षणम्, दोहपयोजदध्नोरासादनम्, दधिपयोभिघारणम् , द्विरवदानम् ; सम्मिश्रणम् , इत्यादयो धर्माः । केचन सान्नाययागस्य पूर्वदिनीयाः, केचनोत्तरदिनीयाः धर्माः । तत्र प्रवृत्तिः सान्नायार्थं पूर्वदिनीया, सान्नाययाग उत्तरदिनीयः, पूर्वधर्मा दोहनापर्यग्निकरणोष्णीकरणाऽऽतञ्चनाद्याः । उत्तरधर्मा अवदानाऽभिघारणाऽऽसादनमिश्रणाद्याः । आग्नेययागस्य द्रव्यमाज्यं पुरोडाशोऽपि, तद्धर्माः अवदानाभिघारणाऽवसानाद्याः । तत्र प्रवृत्तिक्रमबलेन यदि सान्नाययागद्रव्यधर्मक्रमः स्वीक्रियेत तदा सर्वे दुग्धदधिसान्नाय्यद्रव्यधर्माः पूर्वेद्युरनुष्ठिताः स्युः, ततो द्वितीये दिने प्रतिपदि आग्नेययागीयद्रव्याऽऽज्यपुरोडाशधर्माणामनुष्ठानम् प्रवृत्तिक्रमात् , ततश्चाऽवशिष्टानां सान्नायद्रव्यधर्माणामनुष्ठानं प्रवृत्तिक्रमात् । तत आग्नेययागानुष्ठानम् , ततश्च सान्नाययागानुष्ठानमिति प्रवृत्तिक्रमबलेन निर्वर्त्यमानेऽनुष्ठाने पूर्वदिनीयदोहनाऽऽतञ्चनादिधर्माणां स्वधर्मिसान्नाय्ययागे प्रापणं तु द्वितीयाऽऽग्नेयद्रव्यधर्मानुष्ठानोत्तरसान्नाय्यद्रव्यधर्मानुष्ठानोत्तराऽऽग्नेययागानुष्ठानोत्तरसान्नाय्ययागाभिप्रायणं स्यादिति प्रवृत्तिक्रमेण त्रिव्यवधानिकं स्वांगिप्रापणं स्वप्रधानप्रापणं स्यादिति चाऽतिविप्रकृष्टता । उत्तरकालीनसान्नाय्यधर्माणां तु पार्थक्याऽनुष्ठितौ स्वानुष्ठानोत्तरम् आग्नेयपुरोडाशांऽगितदाग्नेययागानुष्ठानोत्तरं स्वसान्नाय्ययागानुष्ठानमिति स्वप्रधानयागप्रापणं सांऽगाऽऽग्नेयाऽनुष्ठानव्यवधानिकं स्यात् , आग्नेयधर्माणां तु सान्नाय्यधर्माऽनुष्ठानव्यवधानिकं स्वीयाऽऽग्नेययागप्रापणं स्यादिति सान्नाय्यानां विजातीयः आग्नेययागः, आग्नेयानां धर्माणां विजातीयाः उत्तरीयाः सान्नाय्यधर्मा व्यवधानरूपाः स्युः, एवमेकैकं विजातीयं व्यवधानं स्यात् । ततश्च प्रधानक्रमाऽधीनमुख्यक्रमेणाऽनुष्ठातव्यौ आग्नेयसान्नाय्यौ, न तु प्रवृत्त्या

यथा प्राजापत्यपश्वंगेषु, प्राजापत्या हि "वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'तिवाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः, अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं

---

क्रमेण, तथा च पूर्वं स्वीयाऽऽज्यपुरोडाशादिसर्वधर्मान्विताऽऽग्नेययागानुष्ठानं ततः स्वीयसान्नाय्यादिसर्वधर्मान्वितसान्नाय्ययागाऽनुष्ठानमिति मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान् ।।

**प्रवृत्तिक्रमे हीति** । बहूनां सर्वेषां सान्नाय्यांऽगानां स्वप्रधानेन सान्नाय्ययागेन सहाऽऽग्नेयांऽगयागद्वयान्तरितव्यवधानात् दूरत्वात् । मुख्यक्रमे प्रधानक्रमाऽधीनक्रमे तु सन्निकर्षात् , सान्नाय्यांऽगानामाग्नेययागव्यवधानात् , आग्नेययागांऽगानां सान्नाय्यांऽगाऽनुष्ठानव्यवधानात् , एवं स्वस्वप्रधानेन सह एकान्तरितव्यवधानं नाऽतिविप्रकर्षः किन्तु सन्निकर्षः समानं सान्निध्यमिति ।।

अथ प्रवृत्तिक्रमं लक्षयति—**सहप्रयुज्यमानेष्विति** । सोमयागे षष्ठीसंस्थात्मके वाजपेये यागे प्राजापत्यांऽगेषु प्राजापत्या हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'तिवाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः, अतस्तेषां तदंगानां चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पादनीयम् । ते प्राजापत्याः सप्तदश सप्तदशपश्वालम्भनं च 'सप्तदशप्राजापत्याः भवन्ति सप्तदशप्राजापत्यान् पशूनालभेते'ति तद्विधिरुक्तः । सप्तदशप्राजापत्याः एकप्रजापतिदेवताकाः सेतिकर्तव्यताका एककालेन विहिताः । प्रधानाः सप्तदशैव, देवता एकैव, पशवः सप्तदश । **सन्निपातिनाम्**—एककालकर्तव्यतया प्रपन्नानामंगानां प्राजापत्यपशूनामनेकेषाम् उपाकरणं नियोजनमालभनं चेत्याद्या अनुष्ठानविशेषाः, ते आवृत्या कर्तव्या भवन्ति, आवृतिः पुनर्नियमः, प्रथममुपाकरणं क्रमशः सप्तदशानां सप्तदशानां ततो नियोजनं क्रमशः सप्तदशानां तत उपालभनं क्रमशः सप्तदशानां, यः क्रमः प्रथमो गृहीतोऽनुष्ठितस्तत एवाऽऽरभ्य सर्वानुष्ठानानां क्रमः, सोयमावृत्याऽनुष्ठानक्रमः, तादृशेऽनुष्ठाने कर्तव्ये प्राप्ते, हि—निश्चयेन निर्णयेन क्रमनियमेनैव । द्वितीयादिसप्तदशपर्यन्तपशूनां प्रथमे पशौ योऽनुष्ठितः पदार्थः एकः उपाकरणं, तत् क्रमश एव नियतोत्तरोत्तरसंख्यासहकृतक्रमश एव, यत्र प्राथम्यं कृतं ततस्तत्क्रमात् द्वितीयस्तृतीय इत्येवं सप्तदशपर्यन्तं यया संख्यया यः पशुर्गृहीतस्तत्संख्ययैव तत्र यदुपाकरणं तत् सर्वेषां क्रमः, अयं प्रवृत्तिकर्मानुसारःक्रमः, अतः प्रवृत्तिक्रमोऽनुष्ठानात्मकक्रमः कथितः । सः प्रवृत्तिक्रमप्रमाणाख्यः अनुष्ठाननियामकः । यथेति । प्रजापतिदेवताके प्राजापत्ययागे

**सम्पाद्यम्। तच्च प्राजापत्यपशूनां सम्प्रतिपन्नदेवताकत्वेन युगपद-नुष्ठानादुपपद्यते। तदङ्गानां चोपाकरणादीनां युगपदनुष्ठानमशक्यम् अतस्तेषां साहित्यम् अव्यवहिताऽनुष्ठानात् सम्पाद्यम्। तच्च एकस्यो-**

---

प्राजापत्यसप्तदशपश्वात्मकेषु अंगेषु सप्तदशसु, उपाकरणाद्यनुष्ठानं प्रवृत्ति-क्रमप्रमाणेन कार्यमिति ॥

**प्राजापत्या हीति**। प्राजापत्याः सप्तदशपशवः, 'वैश्वदेवीं विश्वेदेवाना-मिष्टि यागीयपूजां कृत्वाऽऽमिक्षानुष्ठानं कृत्वा, ततः प्राजापत्यैः प्रजापति-देवताकैः सप्तदशपशुभिः। **चरन्ति**—प्राजापत्याऽनुष्ठानं याज्ञिकाः ताण्डच-ब्राह्मणाधारं छान्दोगसूत्राधारं च कुर्वन्ति। तैत्तिरीयशाखिनस्तु वाजपेययागं सप्तदशदीक्षात्मकं त्र्युपसदात्मकम् एकसुत्यात्मकं सप्तदशप्राजापत्यसवनीय-पश्वात्मकद्रव्यकं सप्तदशाऽरत्नियूपलक्षितं सप्तदशवस्त्रवेष्टितयूपीयं प्रजा-पतिदेवताकसप्तदशसोमग्रहाऽनुष्ठानात्मकं सप्तदशसुराग्रहानुष्ठानात्मकं सप्तदशपयोग्रहात्मकं कुर्वन्ति। तत्र सुत्यादिने ऋत्विजः हिरण्यमालाः धार-येयुः, ऋत्विग्भ्यः सप्तदशसप्तदश रथाश्वगजशकटदासीदासनिष्कगोऽजाऽवि-दुन्दुभीनां दक्षिणात्वेन दद्युः। सवनीयपशुकाले सप्तदशप्राजापत्यैः सह पञ्चाऽधिकान् ऋतुपशूनपि उपाकृत्य पर्यग्निकरणान्तमनुष्ठानं सर्वं कृत्वा प्रथमतश्चतुरः पशूनुपाकृत्य वपान्तं कृत्वा विरम्य ब्रह्मसामकालेऽवशिष्टैः पशुभिः प्रचरेत्। अत्र होतृचमसगणो होतुश्चमस एको मुख्यः; वाजपेय-संज्ञकमेकं स्तोत्रम्, सप्तदशस्तोमकं तत् स्तोत्रं होतुरेव शास्त्रम्, वाजिद्रव्यं देवतापेयमिति वाजपेयमित्यपि संस्थानाम। अत्र च सप्तदशशरावपरिमितो नैवारश्चरुः। अन्यत्सर्वं सोमाख्यप्रकृतिवत्। अयम् आप्तो वाजपेय उच्यते। कुरुवाजपेयोऽन्योऽपि अनुष्ठीयते। तत्र वैलक्षण्यं बहुविधं सूत्रेषु वर्णितम् ॥

'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'तिवाक्येन प्राजापत्यैरिति तृतीया-विभक्तिनिर्देशात् सप्तदशपशुषु सेतिकर्तव्यताप्रवृत्तिरेककालेन विहिता, अनुष्ठानान्येककालीनानि विहितानि। अतस्तेषां प्राजापत्यानां यागीयपशूनां तदुपाकरणादिसंस्काराणामंगानां नाम्ना पशूपाकरणं पशुनियोजनं पशू-पालभनमित्यादीनामनुष्ठानानां चैककालीनत्वं साहित्यं सहानुष्ठानत्वं सम्पाद्यं कर्तव्यं भवति। **तच्चेति**। तत्साहित्यं च। अतः एककालविहितत्वेन सम्पाद्यम्। तत्साहित्यं प्राजापत्यपशूनां, सम्प्रतिपन्नो नाम्ना निर्दिष्ट एकः प्रजापतिर्देवतारूपः, तदीयत्वेन सर्वपशूनां **युगपत्**—एककाले, वैश्वदेवी-ष्टयनुष्ठानाऽनन्तरकाले प्रजापतिदेवताकम् अनुष्ठानं भवेत् तर्हि साहित्यं

पाकरणं विधायाऽपरस्योपाकरणं विधेयम् । एवं नियोजनादिकमपि । तथा च प्राजापत्येषु कस्माच्चित्पशोरारभ्य एकं सर्वत्राऽनुष्ठाय द्विती-

---

सहानुष्ठानं सार्थकम् अपूर्वकृत् भवेत्। **तदंगानामिति**। प्राजापत्ययागांऽगानाम् उपाकरणादीनां **युगपत्** एकक्षणेऽनुष्ठानम्, उपाकरणं नियोजनम् आलभनमित्यादीनामुत्तरोत्तरं कर्तव्यस्वभावानां, कर्तुमशक्यमनुष्ठानम्, कालभेदेन साहित्याऽनुपपत्तिः, एककर्त्रा च सप्तदशकार्याऽपर्याप्त्या चाऽनुपपत्तिः। **अतः**—उपाकरणादीनां युगपदनुष्ठानाऽनुपपत्तेः हेतोः। तेषामुपाकरणादीनां साहित्यं नैकक्षणीयत्वं, किन्त्वव्यवहितोत्तरक्रमकर्तव्यताकत्वरूपं सम्पाद्यम्। **तच्च**—अव्यवहितोत्तराऽनुष्ठानरूपम् प्रथमत्वेन स्वीकृतस्य पशोरुपाकरणं द्वितीयादिसप्तदशसु-षोडशसु कृत्वा ततः प्रवृत्तिक्रमेणैव सख्यानियमित-स्वीकृतरीत्यैवाऽऽदितो नियोजनं सचरमं कृत्वा तत उपालभनमित्येवमनुष्ठानं विधेयम्। **तथा चेति**। प्राजापत्येषु सप्तदशसु द्रव्यात्मकपशोरेकपशुमारभ्यैकः उपाकरणपदार्थः संस्कारोऽनुष्ठानविशेष आरब्धः तमेव पशुमारभ्य द्विती-यादिपदार्थोऽपि नियोजनादिः पदार्थोऽनुष्ठेयः, इत्ययम् एकप्रवृत्तिमनुवृत्य द्वितीयसंस्काराऽऽवृत्तिप्रवृत्तिरितिप्रवृत्तिक्रमनाम्ना प्रमाणमुच्यते। अयमन्तिमः प्रवृत्तिक्रमः पौर्वापर्यरूपः। प्रवृत्तिक्रमः—श्रुति-अर्थ-पाठ-स्थान-मुख्यक्रमेभ्यो निर्बलः। पूर्वः पूर्वो बलवान्। उत्तरोत्तरो निर्बल इति। कदाचित् चोदका-दिबलेन निर्बलोऽपि बलमाप्नोतीति। **संक्षेपत इति**। तत् एवमुक्तेषु विविध-स्वरूपेषु, षड्विधक्रमप्रमाणनिरूपणेन, प्रयोगप्राशुभावबोधकः अंगानां क्रम-बोधकश्च प्रयोगविधिः—अनुष्ठानविधिः पौर्वापर्यक्रमाऽनुष्ठापकविधिरूपः। **संक्षेपतः एव**—तथाहि 'सप्तदशसु प्राजापत्येषु पशुषु कंचित्पशुमारभ्यो-पाकरणं सप्तदशसु कृत्वा तमेव पशुमारभ्य नियोजनं कर्तव्यमिति तत्तत्पशूपा-करणानां तत्तत्पशुनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति तथा सति 'सप्तदश प्राजापत्यान्पशूनालभेते'त्युत्पत्तिवाक्ये 'वैश्वदेवीं कृत्वा प्राजा-पत्यैश्चरन्ती'तिप्रयोगवाक्ये च श्रुतं सांगानां सप्तदशपशुयागानां साहित्य-मुपपद्यते। अन्यथा तु तेषु सप्तदशसु एकैकस्मिन्नुपाकरणनियोजनादिसर्व-संस्काराणां समापने प्रत्यक्षाऽवगतपशुसाहित्यं बाधितं भवेत्। प्रावृत्तिकक्रम-परित्यागे पश्वन्तराणां पूर्वं नियोजनं कृत्वा पश्चात्प्रथमपशोर्नियोजने द्वात्रिंशद्भिः पदार्थैर्द्वात्रिंशत्क्षणैर्व्यवधानं स्यात् तत्तु नाऽभ्यनुज्ञातम्। अतः प्रवृत्त्या क्रमो निरूप्यते। एवं यत्र यत्र व्रीहियवदधिदुग्धाऽऽज्यपुरोडाशदर्भाऽऽ-स्तरणदर्भमुष्टयादिपदार्थानां पिण्डक्रमा गृह्यन्ते न त्वान्तरवयवक्रमाः,

यादिपदार्थस्तेनैव क्रमेणाऽनुष्ठेयः सः प्रवृत्तिक्रमः। सोऽयं श्रुत्यादिभ्यो दुर्बलः। तदेवं संक्षेपतो निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिः॥

कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यफल-स्वाम्यं कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकामः' इत्यादि-

---

आन्तरवयवसंयोगानां सर्वानुष्ठातृकृत्यनाक्रान्तत्वेन पिष्टादिपिण्डान्तर्वर्त्य-वयवयोगानां तु क्रमा अनियततयैव परिवर्तन्ते न तत्र नेदृङ्नियमः, अनुष्ठे-याऽवयविक्रमगोचरतया शास्त्रोपक्रमात्। मन्त्राणां यथाक्रमस्तथा चोदक-वाक्यानामपि क्रमस्तथोपकरणानां व्यूहानां सामूहिकयजनद्रव्याणां कपालानां चरूणां ग्रहाणां शस्त्राणां स्तोत्राणां समयानाम् अवसराणां देवतानाम् अनुष्ठातॄणां यजमानानां महावीरपुत्तलानां चमसानां धाराग्रहाणां होमानां सवनानां दानानां चमसभक्षाणां प्रसर्पणानाम् अवभृथानां षोडश्यादिसंस्थानां स्तोमानां विष्टुतीनां चितीनां वसुधाराणाम् अष्टाकपालानाम् एकादश-कपालानां द्वादशकपालानां त्रिकपालानां दशकपालानां पञ्चशारदीयानां सहस्रसम्वत्सराणां च तत्तदंगाऽगिनां क्रमत एवानुष्ठानेऽपूर्वजनकत्वे सार्थक्य-मिति निवेदनार्थमुक्तं—**संक्षेपत इति**।:

अथाऽधिकारविधिं निरूपयति—**कर्मजन्येति**। कर्म यागादि तज्जन्यं फलं स्वर्गादि पारलौकिकम्, ऐहिकं वा रूपेन्द्रियसमृद्धिपशुधनसुखादिरूपं, तन्निरूपितस्वामित्वं यस्मिन् सोऽधिकारी यागादीनां फले भोग्यता तन्नि-रूपिता भोक्तृता यस्मिन्पुरुषादौ सोऽधिकारी'ति 'अधिकारविधिना बोध्यते'। 'यजेत स्वर्गकाम' इत्यधिकारिणं स्वर्गकामनावन्तं यागाधिकारवन्तं दर्शयति। 'यजेत स्वर्गकामः' स्वर्गफलकामपुरुषनिष्ठो यागानुकूलव्यापार इति बोधः। स्वर्गं शाश्वतसुखं स्वर्गं प्राप्तीच्छाविषयीकृत्य यागविधानकर्त्रा वाक्येनाऽनेन 'यजेत स्वर्गकाम' इत्यनेन वाक्येन स्वर्गकामनायुक्पुरुषस्य यागाऽपूर्वजन्यफल-रूपस्वर्गस्य भोक्तृत्वं स्वामित्वं प्रतिपाद्यते।

अथ पापक्षयरूपफलस्वामित्वमुदाहरति—**यस्येति**। आहितो गृहीतो होमार्थमग्निर्येन सः तस्याऽग्निहोत्रिणः पुरुषस्येवंविधाऽन्याऽग्निसेविनोऽपि जनस्याऽपि नित्याऽग्निसम्बन्धेन कदाचिदपि अग्निरग्निगृहान् वा दहेत् तन्मा दहेदित्याशावान् सन् सोऽग्निशान्तिकामः पुरुषः **क्षामवते**—क्षामः क्षमा क्षामता कृशता शान्तता, क्षामवत्त्वगुणविशिष्टायाऽग्नयेऽग्निदेवतायै अष्टा-कपालम् अष्टकपालपुरोडाशद्रव्यं निर्वपेत् अर्पयेत् जुहुयात्,—इत्यादिमन्त्रेण, यदाऽग्निदाहो वा तद्वदन्यो विनाशो वा निमित्तो भवेत् तदा तद्बीजमव-

रूपः। स्वर्गमुद्दिश्य यागं विदधताऽनेन स्वर्गकामस्य यागजन्यफल-भोक्तृत्वं प्रतिपाद्यते। "यस्याऽऽहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्' इत्यादिनाऽग्निदाहादौ निमित्ते कर्म विद-धता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवम् 'अहरहः सन्ध्यामुपासीते'त्यादिना शुचिविहितकालजीविनः सन्ध्यो-पासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते। तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः, अधिकारश्च स एव यद्विधिवाक्येषु पुरुष-विशेषणत्वेन श्रूयते, यथा काम्ये कर्मणि फलकामना, नैमित्तिके कर्मणि निमित्तनिश्चयः, नित्ये सन्ध्योपासनादौ शुचिविहितकाल-

---

लम्भ्य तन्निमित्तकं तदुद्देश्यकं कर्म अष्टाकपालनिर्वपनात्मकं विदधताऽनु-ष्ठानवता जनेनाऽधिकारिणा शान्तिकामेन, विदधता प्रदर्शयता विधिना मन्त्रेण तेन। **निमित्तवतः**—अग्निना गृहदाहादिरूपनिमित्तवतः पुरुषस्य। इत्यादिना विधिना कर्मविदधता वाक्येन :अग्निदेवताककर्मजन्यो यः पाप-क्षयोऽपूर्वस्थानीयस्तद्रूपं यत्फलं भोग्यं निष्पापता पुण्यवत्ता तत्स्वामित्वम् प्रतिपाद्यते, फलस्वामित्वात्मकाऽधिकारित्वं तत्कर्मविधिना प्रतिपाद्यते। एवं तृतीयमपि प्रत्यवायपरिहारफलाधिकारत्वमुदाहरति—**अहरहरिति**। नित्यं प्रतिदिनं नित्यं त्रिविधां सन्ध्यां प्रातर्मध्यसायन्तनीयास्त्रेधा, सन्ध्यां तद्विधिनोपासीत, गायत्रीजपाऽर्कध्यानादिरूपामनुतिष्ठेत्। इत्यादिना वाक्येन, शौचविशिष्टत्वे सति विहितैः कर्मभिर्नित्यानुष्ठितैर्लक्षिते काले यो जीवति तस्य शुद्धस्य विहितकर्मानुष्ठानवतः तत्तत्कालीनयथावत् षट्कर्म-कारिणः सकामभक्तस्य, सन्ध्यायाः प्रातःसायंमध्याह्नश्चेतिकालस्य कर्मा-नुष्ठानस्य सवितृदेवताध्यानस्य, चेति त्र्यर्थकसन्ध्यायाः योपासना जपादिना सान्निध्यं सेवनं स्मरणं यथाविहितकालविधानाऽनुष्ठानादि, तज्जन्यो यः प्रत्यवायस्य दुरितस्य पापस्य परिहारः, सन्ध्याद्यकरणे यो दोषस्तस्य दूरी-करणं त्रिदोषीकरणं त्यागो नाशः शुद्धिरिति, तद्रूपं यत्फलं प्रत्यवायराहित्यं दुरितराहित्यम् अदुरिताऽवस्थानम् अप्रत्यवायभावत्वम्, तस्य स्वामित्वं तत्फलभोगित्वं तत्फलस्वामित्वं बोध्यते। तदेवंविधं फलविधिबोधितं फल-स्वाम्यं फलस्वामित्वं, तस्यैव फलकामनावतोऽधिकारिपुरुषस्य बोध्यते,—**अधिकारश्चेति**। फलनिरूपितसत्ताश्रयत्वमधिकारत्वम्, सत्तावान् अधिकारी, विधिवाक्येषु स्वर्गकामः आहिताऽग्निः प्रत्यवायपरिहारी स्वाराज्यकामश्चे-

जीवित्वम्। अत एव 'राजा राजसूयेन स्वाराज्यकामो यजेते'त्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य विदधताऽपि न स्वाराज्यमात्रकामस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किन्तु राज्ञः सतः स्वाराज्यकामस्यैव, राजत्वस्याऽप्यधिकारिविशेषणत्वेन श्रवणात्। क्वचित्तु पुरुषविशेषणत्वेनाऽश्रुतमप्यधिकारिविशेषणम्। यथा—अध्ययनविधिसिद्धा विद्या, क्रतुविधीनामर्थज्ञानाऽपेक्षणीयत्वेनाऽध्ययनविधिसिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः। एवम् अग्निसाध्यकर्मसु आधानसिद्धाऽग्निमत्ता, अग्नि-

---

त्येवं यानि पुरुषे विशेषणानि श्रूयन्ते तद्विशेषणविशिष्टोऽधिकारी, विशेषणं चाऽधिकारः, अधिष्ठाय क्रियमाणं कर्म विशेषणमधिकारः। **यथेति**। काम्ये कर्मणि 'स्वर्गकामो यजेते'त्यादौ स्वर्गकामता विशेषणम् अधिकारः तद्वान् अधिकारी। **अत एवेति**। विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयमाणस्याऽधिकारपदार्थत्वादेव। 'राजा राजसूयकामो राजसूयेन यजेते'ति 'राजसूयनामकयागेन स्वाराज्यं भावयेत्'। राजा सार्वभौमो हि भूपतिः राजसूयनामकेन यज्ञेन स्वाराज्यकामः यावती पृथिवी तत्र सर्वत्र सर्वस्यैव राज्यं भवेदिति कामनावान् सन् स्वाराज्यमुद्दिश्य विधिवाक्येन तेन, **विदधताऽपि** राजसूययागं विदधताऽपि विधिवाक्येन तेन न स्वाराज्यकामनावतो भूपतेरेव न केवलतद्यज्ञफलभोक्तृत्वं प्रतिपाद्यते। किन्तु क्षत्रियेतरे राजनि तद्विध्यप्रवृत्तेः, क्षत्रियस्य राज्ञः सतः तस्य स्वाराज्यकामनावतः सतः एव, राजसूययागविधानम्,। **राजत्वस्येति**। अधिकारी राजसूये क्षत्रियः, तस्य विशेषणं श्रुतौ राजत्वमिति। 'राजा राजसूयेने'तिश्रवणात् क्षत्रिये राजत्वविशेषणात् क्षत्रियोऽधिकारी न तदन्यो ब्राह्मणादिः राज्यसम्बन्धवान् वा राज्यवान् अधिकारी। राज्यधुरं वहता क्षत्रियेणाऽनुष्ठेयः। अयं यज्ञो बह्वीनामिष्टीनां द्वयोः पशुयागयोः सप्तानां दर्विहोमानां षण्णां च सोमयागानां समुदायरूपः। राजा सूयतेऽभिषूयते सोमो यागार्थमत्रेति व्युत्पत्तिः राजसूययागस्य। इष्टिपशुसोमयागानां समप्राधान्यमत्र। नेतरेतराऽङ्गभावः। पशुयागाऽङ्गभूता इष्टयः। सोमयागांगभूता इष्टयश्च। पशुयागाश्च प्रकृतितोऽतिदेशप्राप्ता यथावदनुष्ठेया एवेति भवत्येषां तु तत्तदंगत्वम्। किञ्चिदधिकैकवत्सरसाध्योऽयं राजसूयः। अत्र होमाऽवशिष्टं न्यग्रोधजटामूलाऽन्तप्ररोहाणां रसं राजानं यजमानं पाययेत्। चैत्रपूर्णिमापूर्वदिने पवित्राख्यसोमयागदीक्षा, दिनत्रये दीक्षाः, दिनत्रये चोपसदः, सप्तमदिने सुत्या, अग्निष्टोमसंस्थाकोऽयं

**साध्यकर्मणाम् अग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाऽग्निमन्तं प्रत्येव प्रवृत्तेः ।**

---

क्रतुः, सहस्रगावो दक्षिणाः । सप्तमदिने समाप्तिः । अष्टमदिनप्रभृतितः अनुमत्यादयोऽष्टौ यागाः,—१. अनुमत्यै पुरोडाशोऽष्टाकपालः, २. आदित्यश्चरुः, ३. आग्नावैष्णवएकादशकपालः, ४. अग्नीषोमीय एकादककपालः, ५. ऐन्द्र एकादशकपालः, ६. आग्नेयोऽष्टाकपालः ऐन्द्रं दधि, ७. ऐन्द्राऽग्नो द्वादशकपालः, वैश्वदेवश्चरुः, सौम्यः श्यामाकश्चरुः, ८. सरस्वत्यै सरस्वते च चरुः । तदनन्तरदिनप्रभृतिसम्वत्सरपर्यन्तं चातुर्मास्यपशुभिर्यजेत । तत्र १. आग्नेयोऽष्टाकपालः, २. रौद्रो गावीधुकश्चरुः, ३. ऐन्द्र दधि, ४. यवमयो वारुणश्चरुः । इति इन्द्रतुरीययागः । निशायां पञ्चेध्म कर्म । प्रातः अपामार्गबीजचूर्णहोमाः । अग्निहोत्रम् । पञ्चदेविकाहवींषि । तत्र १. धात्रे पुरोडाशो द्वादशकपालः, २. अनुमत्यै चरुः, ३. राकायै चरुः, ४. सिनीवाल्यै चरुः, ५. कुह्वै चरुः । एका गौर्वृषभश्च दक्षिणा । हविस्त्रयविशिष्टानि त्रीणि कर्माणि ( नव )। द्वादशदिनीया द्वादशेष्टयः । एताः 'रत्निनां हवींषि' प्रोच्यन्ते । ततोऽभिषेचनीयः सोमयागः। दीक्षणीयेष्टिः । अग्नीषोमीयपशुपुरोडाशयागः । देवसुवां हवींषि । अष्टौ यागास्ते । मारुतस्य एकविंशतिकपालपुरोडाशः 'अयं भवतां राजे'तिराजत्वख्यातिः । पार्थसंज्ञकाः षड्होमाः । रथाऽवरोहः । रथविमोचनीयहोमाः । शुनःशेपकथा' हरिश्चन्द्रस्य रोहितः पुत्रो वरुणेन दत्तः, यज्ञार्थविनिमयेन पित्रा कल्पितः, रोहितः शुनःशेपं वने क्रीत्वा यज्ञे वरुणायाऽऽर्पयत्, वरुणः कृपया स्वस्मै अर्पितं शुनःशेपं कुमारं जीवन्तमेव, ररक्ष, न तु तं हिंसितवान्, अतोनरमेधोऽहिंसयज्ञः इति कथा । माहेन्द्रयागः । अवभृथेष्टिः । संसृपां दशहवींषि । सोमाऽभिषवः । शतं ब्राह्मणाः । दशपेयक्रतुः । बहुविधा दक्षिणाः । केशवपनीयोऽतिरात्रसंस्थाकयागः । अग्निष्टोमसंस्था । अतिरात्रसंस्था । सर्वमन्यत् यथाप्रकृति । **समाप्तो राजसूयः** ॥

अथ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र क्रियानिष्पादकत्वं कर्तृत्वं फलभोक्तृतया स्वामित्वमधिकारः । 'यजेते'त्यत्र लिङ्प्रत्ययत्वेन विधिरूपत्वम्, प्रत्ययत्वेन आख्यातरूपत्वम्, आख्यातत्वाकारेण भावनामाचष्टे, विधित्वाकारेण पुरुषं प्रवर्तयति, पुरुषश्च स्वाभिमतफलमन्तरेण न प्रवर्तते इति तदपेक्षितं स्वर्गमेव भाव्यतया विधिः उपादत्ते । स्वर्गः—उत्कृष्टसुखे रूढः । द्रव्ये लाक्षणिकः । विधिश्रुत्या सुखस्य भाव्यत्वं सिद्धयति । धात्वर्थस्य भाव्यत्वं प्रकृत्या गम्यते । कर्मियोगात् स्वर्गस्य भाव्यत्वम् । स्वर्गभाव्यत्वं

एवं सामर्थ्यमपि 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'ति न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः। तदेवं निरूपितो विधिः॥

---

भावनायां प्रत्यासन्नम् एकविधिनाऽऽख्यातेनाऽवगम्यते। फलभोगसंभवेन कर्तुरधिकारोऽस्तीति॥

अथ विधिवाक्येषु अश्रुतमपि किञ्चित् अधिकारिविशेषणत्वेन अन्यथाऽनुपपत्त्या आश्रीयते—इति दर्शयति—**क्वचित्त्विति**। अश्रुतं पुरुषे विशेषणम्, तदपि अधिकारिणि पुरुषे तत्र विशेषणम्। अन्यथाऽनुपपत्त्या क्वचिद् विधौ स्वीक्रियते—**यथेति**। अध्ययनविधिवाक्ये 'अधीयीते'त्यत्र पुरुषविशेषणत्वेन विद्याऽश्रुताऽपि विधिसिद्धाऽधिकारिविशेषणतयेत्याश्रीयते—विद्याकामुकस्याऽध्ययनविधिरस्ति। विद्याकामनां विना विद्यां विनाऽध्ययनविधेरनुपपत्तेः, विद्याकामोऽधीयीतेति स्मार्तं विशेषणम् अर्थापत्त्या प्रमाणितं भवति विद्याकामत्ववानध्ययनाऽधिकारीति। क्रतुविधिवाक्यानाम् वाक्यार्थंक्रतुज्ञानाऽपेक्षणीयत्वं भवति, तदनुष्ठानविषयस्तदनुष्ठानज्ञानहीने न प्रवर्तन्ते, तदनुष्ठानज्ञानवत्येव प्रवर्तन्ते, अनुज्ञानज्ञानवत्स्वेव विषयः सार्थकाः। 'अधीयीते'त्यध्ययनविधिनैव स्वाधिकारिणि जनेऽर्थज्ञानं विद्यात्मकं सिद्धीकृतं भवति, ततोऽर्थज्ञानवन्तं प्रति विधीनां प्रवृत्तिः। अतोऽर्थज्ञानं विद्यारूपम् अधिकारिणि विशेषणं भवति, अतः 'अधीयीते'ति अधिकारविधिः। 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'त्यत्रोपनीतब्राह्मणोऽधिकारी द्विजः शास्त्रसिद्धः,॥ 'वर्षासु रथकारोऽग्नीनादधीते'त्यत्र तु अध्ययनविधिसिद्धविद्याया अभावात् न तत्र रथकारोऽधिकारी। **एवमग्नीति**। 'वसन्ते ब्राह्मणोऽग्नीनादधीते'ति 'अग्निहोत्रं जुहुयात्' इत्येवम् अग्निसाध्यानि यानि यानि कर्माणि आधानहोमादीनि तेषु तेषु आधानेन होमेन वाऽग्निमत्ता सिद्ध्यति, तत्राऽश्रुतमपि पुरुषे विशेषणम् अधिकारिणि सिद्ध्यति। **अग्निसाध्येति**। अग्निसाध्यं यत्कर्म आधानहवनाद्यात्मकं, तद्बोधकविधीनां विधिवाक्यानाम्, अन्यपेक्षान्वितत्वेन अग्निसाध्यकर्मविधिवाक्यानाम् आधानसिद्धाऽग्निमत्त्वं ब्राह्मणेऽश्रुतमपि विशेषणम् अधिकारिविशेषणं सिद्ध्यत्येव। अग्निसाध्यकर्मविधीनां विनाऽग्निमनुपपत्त्याऽग्निमत्त्वं सिद्धमेवेति वीक्ष्य तथा—सिद्धविशेषणाऽग्निमन्तं प्रत्येव प्रवर्तनात्। 'यवागूं पचेदि'त्यग्निमन्तं पुरुषं प्रत्येव पाकार्थबोधने विधेः प्रवृत्तिमत्त्वमिव कुतोऽप्यप्राप्तं पुरुषे विशेषणं विधिप्रवृत्त्या पूर्वमेव सिद्धं भवतीति तादृशास्तद्वन्तोऽधिकारविधिष्वप्यन्तर्भवन्ति॥ अथ क्षत्रियाद्वैश्यायां माहिष्यः, वैश्याच्छूद्रायां करणी, करण्यां माहिष्यादुत्पन्नो रथकारः स न विद्याधिकारवान्।

'अथ वास्तुमयं रौद्रं चरुं निर्वपेदि'तिप्रकृत्य 'एतया निषादस्थपतिं याजयेदि'तिश्रवणात् 'निषादश्चासौ स्थपतिरि'तिकर्मधारयात् तात्कालिकाऽऽचार्योपदेशादिना विद्यां सम्पाद्य धनिको निषादो रौद्रं यागं कुर्यादिति औपदेशिकविद्यावत्त्वं विशेषणं तत्र तदधिकारिणि गृह्यते ।।

अध्ययनविधिसिद्धविद्यादिरिव पुरुषसामर्थ्यमपि विधिवाक्येऽश्रुतमपि अधिकारिविशेषणं सिद्धं भवतीत्याह—**एवं सामर्थ्यमपीति**। आज्याऽवेक्षणादिकमपि लौकिकपुरुषसामर्थ्यं तदपि पुरुषेऽधिकारिणि विशेषणम् , सामर्थ्यवानधिकारी वीक्षेतेति सोऽपि भवत्यधिकारविधिः स्मार्तः। श्रौतस्तु वैदिकसामर्थ्यं प्रागेव भवति यस्मिन् पुरुषेऽध्ययनविधिसिद्धविद्यारूपं स विद्यावानधिकारी भवतीति पुरुषविशेषणं विद्याधिकरणरूपा तत्र। उक्तार्थे वृद्धोक्तन्यायं हेतुरूपमाह—**आख्यातानामर्थमिति**—अर्थं भावनाद्यर्थं ब्रुवतां प्रभृत्याख्यातानां तत्र स्वस्मिन् स्थितं सामर्थ्यं शक्तिलक्षणाऽन्यतररूपं शक्तिज्ञानं सहकारिकारणम्। इतिनियमो न्यायः, सर्वदार्शनिकशाब्दिकसम्मतः। विध्यर्थाऽनुष्ठानकर्तारं समर्थं प्रत्येव विधीनां प्रवर्तनात् , असमर्थं प्रत्यप्रवर्तनात् , नहि पाषाणं वा बालं विचित्तं प्रति 'यजेते'तिप्रवर्तते। तस्मादश्रूयमाणमपि सामर्थ्यं पुरुषेऽधिकारिणि विशेषणं भवतीतिविशेषणम् अधिकारः तद्वान् अधिकारी, तत्प्रवर्तकोऽधिकारविधिरिति। **ब्रुवतामिति**। 'यजेते'तियागं भावयेदित्यर्थं ब्रुवतां जनानामपि यागीयभावनात्मकाऽर्थभानं सहकारिशक्तिसम्पाद्यमिति शक्तिः सामर्थ्यं पुरुषे विशेषणं भवत्येवेत्यपि मतान्तरेण सामर्थ्यं चाधिकारस्तद्वानधिकारी। तथाच—अन्धः पङ्गुर्बधिरो मूकश्चैतेऽपि पुरुषार्थे यथाशक्त्यंगाऽनुष्ठातारोऽपि क्रत्वंगतया विधानेनाऽधिकारिणस्ते, क्रतोरनिष्पत्तिप्रसंगाऽऽपत्त्याऽन्धाद्यसमर्थानां क्रतौ नास्त्यधिकारः। पृथक्तया जपादौ तु स्यात् ।।

अथ सोमयागे ज्योतिष्टोमे प्रातःसवने महाभिषवः, सोमरसधारास्रावणम् आग्रायणस्थाल्यां सम्पातः, धाराग्रहाणां होमः, ध्रुवग्रहग्रहणानन्तरं धाराविरामः। ततो बहिष्पवमानस्तोत्रकरणाय पञ्च १–अध्वर्युः, २–प्रस्तोता, ३–प्रतिहर्ता, ४–उद्गाता, ५–ब्रह्मा, षष्ठो यजमानश्च, क्रमशः पूर्वपूर्वस्य परः परः कच्छं धृत्वा शालाबहिःप्रसर्पन्तश्चात्वालदेशं गत्वोपविष्टाः सन्तस्ततः सर्वे कच्छधृतिविसर्जनं कुर्युः, तत्र धृतिकाले मध्ये विच्छेदे विसर्गे प्रायश्चित्तं कुर्युः, यद्युद्गाताऽपच्छिद्येत,:अदक्षिणो यज्ञः संस्थाप्येत, अथाऽन्यो यज्ञश्चाऽऽहर्तव्यः, तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यं स्यात् यदि प्रतिहर्ताऽपच्छिद्येत सर्वस्वं दद्यात्, यदि उद्गातृप्रतिहर्तारौ युगपत् तन्मुञ्चेतां तदानीं-

प्रयोगसमवेताऽर्थस्मारका मन्त्राः, तेषां च तादृशार्थस्मारकत्वे-नैवाऽर्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थम्, सम्भवति दृष्टफलकत्वेऽ-

---

युक्तंप्रायश्चित्तनिमित्तं व्याहन्येत ॥ अथ एककर्तृको ह्यपच्छेदो निमित्तत्वेन श्रुतः, अयं तूभयकर्तृकः, निमित्तो ह्यपच्छेदस्तु एक एव स तु नास्ति, अतो न प्रायश्चित्तमिति चेन्न। द्वयोर्ह्यपच्छेदयोरेक एव कर्ता, अतो निमित्तमस्ति प्रायश्चित्तं भवति। किञ्च—अदक्षिणत्वं सर्वस्वदक्षिणत्वं च प्रायश्चित्तद्वयमपि निमित्तभेदेन श्रुतम्, तत्समुच्चयः कर्तव्यः, कर्मण एकत्वात्। अथ अदान-सर्वस्वदानयोः समुच्चयो न स्यात्, स्वरूपतोऽन्योन्यविरोधात्। तर्हि प्रयोग-भेदेन व्यवस्थापनीयम्। प्रथमप्रयोगे दक्षिणा न दातव्या, उत्तरप्रयोगे सर्वा दातव्या, प्रयोगभेदेऽपि कर्मणः एकत्वात् समुच्चयः सुतिष्ठेत्। उभयोर्विधा-नाद् विकल्पस्तु नैव स्यात्। विकल्पे पक्षे बाधः स्यात्। अतो द्विस्तस्य प्रयोगः कर्तव्यः, एकस्मिन्प्रयोगे एकः कल्पः, अपरस्मिन्प्रयोगेऽपरः कल्पः। एवम्—अविरोधः, उभयं च प्रायश्चित्तम्। नैतदेवम्, कुतः ?, स एक एव यागः पुनः क्रियेत, एकसंयोगात्। अन्यतरस्मिन् वैगुण्यं तूभयोः समानम्। अतो विकल्प उचितः। तत्र पूर्वाऽपच्छेदे बलीयसि अदानं प्रायश्चित्तम्। विरुद्धं कर्तुम् अशक्यत्वात्, न चाऽशक्यम् उपदेशार्हम्, अतस्तन्निर्बलम् असत्। तस्मात् पूर्वविज्ञानं बलवत्। अथ पूर्वं न बलवत्। आख्यातेनोक्ते कर्तव्यार्थे दौर्बल्यं हि प्राप्यते, पूर्वविज्ञानं बाधित्वा इदं कर्तव्यमिति भवति शब्दार्थः, तदिदानीं बाधितं न शक्नोत्युत्तरं बाधितुम्, पौर्वापर्ये पूर्वदौर्बल्यात्। तस्मात् परबलो-यस्त्वं न्याय्यम्। सति निमित्तेऽपि सर्वस्वं देयमिति। यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यादिति। प्रतिहर्तुः प्रथमम् अपच्छेदे सति तन्नि-मित्तकं सर्वस्वदानरूपं प्रायश्चित्तं प्रथमप्रयोगे प्राप्तं तेन च सर्वस्वं दित्सितम्। यद् दित्सितं तदुत्तरप्रयोगे देयमित्येतावदेव तत्रोच्यते। दित्सितं च सर्वस्वम्। अतः उत्तरकालीनोद्गात्रपच्छेदनिमित्तेऽपि पुनःप्रयोगे पूर्वकालीनप्रतिहर्त्र-पच्छेदप्रयुक्तं सर्वस्वमेव दातव्यमित्यादिकम् अर्थजातं निरूपणीयमिति। विधिस्वरूपनिरूपणमुपसंहरति—**तदेवमिति**। उक्तरीत्या बहूपपत्तिभिर्विधि-र्निरूपितः ॥

अथेदानीं मन्त्ररूपं वेदभागं निरूपयति—**प्रयोगसमवेतेति**। प्रयोगाः क्रियाऽनुष्ठानानि इतिकर्तव्यप्रकाराणि तत्र समुदिताः समवायं प्राप्ता ये येऽर्थाः पदार्थास्तेषां स्मारकाः स्मृतिजनका मन्त्रा भवन्ति। तेषां मन्त्राणां क्रियाऽनुष्ठानाऽनुरूपाऽर्थस्मारकत्वेन सफलत्वम्, प्रयोजनवत्त्वं सार्थकत्वं

दृष्टकल्पनाया अन्याय्यत्वात् । न च दृष्टस्याऽर्थस्मरणस्य प्रकारान्तरेणाऽपि सम्भवान्मन्त्राऽऽम्नानं व्यर्थमिति वाच्यम् । मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात् । नानासाधनसाध्यक्रियायामेकसाधन-

---

भवति । मन्त्रोच्चारणं प्रयोगार्थस्मारकम् । **नन्विति** । मन्त्रोच्चारणं नाऽदृष्टाऽपूर्वादिफलार्थम् । यत्र दृष्टफलं भवति तत्राऽदृष्टफलकल्पनस्याऽन्याय्यत्वात्, दृष्टफलेनाऽऽकांक्षाशान्तत्वात् । यदि तु दृष्टफलस्य ब्राह्मणवाक्यादिना सम्भावना क्रियते तदा मन्त्रस्याऽदृष्टार्थकत्वं सार्थकत्वं स्यात्, अन्यथा व्यर्थत्वं स्यादित्याशंकते—**न चेति**······**वाच्यमिति** । दृष्टो हि अर्थस्मृतिरूपोऽर्थोऽत्र मन्तव्यः, स च मन्त्रोतरेण ब्राह्मणेन वाक्येनाऽपि स्मार्तेन वाक्येनाऽपि स्यात्, अतो मन्त्रस्य प्रयोगसमाविष्टार्थस्मारकत्वम् आम्नानं—विधानं विधितया प्रयोगः, विगतार्थकत्वं—निरर्थकत्वं निष्फलकत्वं निष्प्रयोजनकत्वम् । तत्रोत्तरयति—**मन्त्रैरेवेति** । यागाद्यनुष्ठेयार्थानामविगानत्वाऽनापत्त्यर्थं मन्त्रार्थाधारकत्वमेव मन्त्रेतराऽस्मर्तव्यत्वं मन्त्रमात्रस्मर्तव्यत्वमिति 'मन्त्रैरेव स्मर्तव्यमि'ति नानासाधनसाध्यक्रियायाम् एकसाधनप्राप्तौ अप्राप्तस्याऽपरस्य साधनस्य प्रापको यो विधिर्नियमविधिः सः, अत्र आश्रीयते । यागाद्यनुष्ठेयार्था मन्त्रैर्वा ब्राह्मणवाक्यैः स्मर्तव्या निर्णेतव्या इति प्राप्तौ 'मन्त्रैरेव स्मर्तव्या' इति । नियमः क्रियते । अतः प्रयोगसमवेताऽर्थस्मारकत्वं मन्त्रत्वमिति लक्षणं युक्तम् ॥

नियमविधिं लक्षयति—**नानासाधनेति** । नानाप्रकाराणि यानि एकक्रियायां साधनानि स्वसाध्यक्रियायामुपतिष्ठन्ते, तत्रैकसाधनस्य प्रमाणान्तरेण प्राप्तिः, तदितरसाधनस्य प्राप्तिशून्यस्य केनापि बलेन नैर्बल्येन वा प्राप्त्यविषयस्य या श्रुतिः प्राप्तिविषयतां साधनतां स्मारयति सा मन्त्ररूपा श्रुतिर्वेदवाक्यं नियामकविधिनामकं नियमविधिस्वरूपं मीमांसयाऽऽश्रीयते । तत्र सम्मतिमाह—**यथाहुरिति** । अस्याऽयमर्थः—यस्य यदर्थत्वं प्रमाणान्तरेणाऽप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः, यथा 'यजेत स्वर्गकामः' । यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण प्राप्तं किन्तु अनेनैव विधिना ज्ञायते इति भवत्ययमपूर्वविधिः । पक्षेऽप्राप्तस्य तु यो विधिः स नियमविधिः, यथा 'व्रीहीन् अवहन्ति' इत्यादिः, अनेन हि विधिनाऽवघातस्य न वैतुष्यार्थत्वं बोध्यते, अन्वयव्यतिरेकसिद्धत्वात्, किन्तु नियमः, स चाऽप्राप्तांऽशपूरणम्, वैतुष्यस्य हि नानोपायसाध्यत्वात् यस्यां दशायाम् अवघातं परिहृत्योपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्याऽप्राप्तत्वेन

आप्तावप्राप्तस्याऽपरसाधनस्य प्रापको विधिर्नियमविधिः । यथाहुः—'विधिरत्यन्तमप्राप्तौ, नियमः पाक्षिके सति, । तत्र चाऽन्यत्र च प्राप्तौ परिसंख्येति गीयते' इति । अस्याऽर्थः—प्रमाणान्तरेणाऽप्राप्तस्य

---

तद्विधानात्मकम् अप्राप्तांशपूरणमेव अनेन विधिना क्रियते, अतश्च नियमविधावप्राप्तांशपूरणात्मको नियय एव वाक्यार्थः, पक्षे अप्राप्ततादशायाम् अवघातविधानमिति यावत् । न त्वपूर्वविधावित्र अत्यन्ताऽप्राप्तयागविधानमिति । उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः, यथा—'पञ्च पञ्चनखा भक्ष्याः' इति । इदं हि वाक्यं न भक्षणविधिपरं, तस्य रागतः प्राप्तत्वात् , नापि नियमपरम् ; पञ्चनखाऽपञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात् , अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः ॥

**अस्याऽर्थ इति**। 'अत्यन्तमप्राप्तौ विधि'रित्यस्याऽर्थः—प्रमाणान्तरेण मन्त्रेतरप्रमाणेन यदर्थेऽत्यन्तमप्राप्तौ सत्यां यस्य तदर्थत्वेन प्रापको यो विधिर्मन्त्रः सोऽपूर्वविधिः, पूर्वेणाऽन्येनाऽप्राप्तिविषये प्राप्तिविषयोऽपूर्वविधिरित्यर्थः, 'यजेत स्वर्गकामः'इतिमन्त्रेतरेणाऽप्राप्तो यागविधिः सोऽनेन मन्त्रेण प्राप्तः आद्य एवाऽर्थप्रापको विधिः अपूर्वाऽन्यकः। अपूर्वविधौ सम्मतिरूपं द्वितीयं पादम् **'नियमः पाक्षिके सति'** इति । यत्र पक्षद्वयादिकमुपतिष्ठते, अवघातेन वैतुष्यं स्यान्नखादिनाऽपि स्यात् उष्णोदकक्वोष्णाक्तेनाऽपि स्यादिति पाक्षिके भिन्नपक्षोयसाधनके वैतुष्ये उपस्थिते सति, नियमः कर्तव्यः, येन विधिना कृतेऽपूर्वं पुण्यमुत्पद्येत, तेन विधिना तेन पक्षेण साधनेन वैतुष्यं कर्तव्यमिति नियमः क्रियते येन वाक्येन सः 'व्रीहीणां वैतुष्यम् अवघातेनैव सम्पादनीयमि'नियमः प्रतिपाद्यते । एतदाह—**पक्षेऽप्राप्तस्येति** । एकस्मिन्प्राप्ते पक्षे साधनबले, साधने चाऽपरस्मिन् अपि बलिष्ठ प्राप्ते सति, द्वयोः पक्षयोर्बले, केन एकेन अन्यतरेण उभाभ्यां वा वैतुष्यं कार्यमिति विमर्शे सति । नियमः—साधननिश्चयस्य साधनप्राप्तिकारकस्य नियमितं विधानमेकत्र नाऽन्यत्रेति तादृशविधिर्नियमकर्ता नियमविधिरिति । 'व्रीहीन् अवहन्तो'ति मुसलेन अवहननेन व्रीहीणां वैतुष्ये सति अपूर्वमुत्पद्येत नाऽन्यथेति नियमः प्रतिपाद्यते । पक्षेऽप्रापकत्वं दर्शयति—**अनेन ह्यवघातस्येति** । अनेन 'व्रीहीनवहन्ती'तिविधिवाक्येन 'अवहननं वैतुष्यफलमिति न प्रतिपाद्यते, वैतुष्यं तु 'अवघातादिसाधनेषु सत्सु 'वैतुष्यम्—अन्वयः । साधनानामसत्त्वे 'वैतुष्याऽभावो व्यतिरेकः सहकारः । इति ताभ्यां सिद्धमेवाऽवघातादिसाधनानां

प्रापको विधिरपूर्वविधिः, यथा 'यजेत स्वर्गकामः' इत्यादिः स्वर्गार्थक-यागस्य प्रमाणान्तरेणाऽप्राप्तस्याऽनेन विधानात्। पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः। यथा 'व्रीहीनवहन्ती'त्यादिः। कथमस्य पक्षेऽ-प्रापकत्वमिति चेदित्थम्। अनेन ह्यवघातस्य वैतुष्यार्थत्वं न प्रति-पाद्यतेऽन्वयव्यतिरेकसिद्धत्वात्। किन्तु नियमः। स चाऽप्राप्तांऽश-पूरणम्। वैतुष्यस्य हि नानोपायसाध्यत्वाद् यदाऽवघातं परित्यज्यो-

---

वैतुष्यार्थत्वम्। एवं च सति यदि वैतुष्ये श्रुतिरनुवादिकाऽनुवादकतया च व्यर्था इति शङ्कोत्पद्येत। तद्वारणमाह—**किन्तु नियम इति**। **तत्रेति**। मुसलाऽवघातने। **अन्यत्र**—नखविदलने वैतुष्यकरणे, कवोष्णजलयोगे बाष्प-योगे च। तथाविधेऽन्यत्रापि, साधनतायाः **प्राप्तौ** सत्यां, नियमः क्रियते, **स च नियमः**—सम्पादनस्वरूपः, स च विधिः प्राप्तांशपूरणं करोति। प्राप्तस्यांऽशस्य मुसलेन अवहननस्य पूर्णं सम्पादनं प्रतिपाद्यते। नखैर्वैतुष्य-करणे तप्तजलान्तर्बाष्पदानेन वैतुष्यकरणेऽवघातांशः साधनरूपो न लभ्यते सः अप्राप्तांशस्तस्य 'व्रीहीनवहन्ती'तिमन्त्रेण विधिना शब्देनाऽवहननद्वारकं वैतुष्यकरणं नान्यद्वारकमित्यप्राप्तांऽशपूरकत्वेन विधानं विधिसार्थक्यम्, विधिं विना तन्नियमस्याऽलाभात्, अन्यसाधनकवैतुष्यस्य विध्यभावाच्च तद्विधिसार्थक्यं तथा च—'व्रीहिकर्मकाऽप्राप्तांऽशावहननपूरणानुकूलव्यापारा-श्रयः' इति बोधः। अवपूर्वकहन्पदस्य तिप्रत्ययान्तस्याऽप्राप्तांशपूरणरूपो वाक्यार्थः॥ **वैतुष्यस्य हि**। नखविदलनादिविविधोपायसाध्यं वैतुष्यं विनाऽ-वघातमुपायान्तरेण कर्तुमारभ्यते तत्र तदाऽवहननप्राप्तं, तद्विधाननामकम् अप्राप्तांऽशपूरणार्थकं विधानमनेन विधिना क्रियते। **अतश्चेति**। विधिनाऽ-नेनाऽप्राप्तांऽशपूरणरूपनियमस्य प्रतिपादितत्वादेव नियमविधिः अप्राप्तांश-पूरणार्थनियमे लाक्षणिकः, लाक्षणिकार्थोऽपि वाक्यार्थः स्वीक्रियते, यत्र शब्दशक्यार्थो न भवेत्। **पक्षे**। एकत्राऽवलम्बने उद्दिष्टसाधने, अपरत्र पक्षेऽनवलम्बनेऽनुद्दिष्टसाधनभावे सति। येनाऽर्थेन मन्त्रसम्मतेनाऽपूर्वजनका-दिद्वारा सार्थक्यं स्यात् तादृशस्य साधनस्य निरर्थकप्रतिपक्षिणा दूरीकरण-भावे उपस्थिते सति, अप्राप्ताऽवघातार्थस्याऽऽवश्यकग्रहविषयस्य, **विधानं**—सम्पादनमिति यावत्प्रयोजनवत्त्वं विधिवाक्यस्यार्थः॥

उक्ते श्लोके 'तत्र चाऽन्यत्र च प्राप्तौ परिसंख्येति गीयते' इति परि-संख्यापरं व्याचष्टे—**उभयोश्चेति**। शशः कूर्मो गोधा कपिः खड्गी शल्लकः

पायान्तरं ग्रहीतुमारभते, तदाऽवघातस्याऽप्राप्तत्वेन तद्विधाननामकम् अप्राप्तांशपूरणमेवाऽनेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांश-पूरणात्मको नियम एव वाक्यार्थः। पक्षेऽप्राप्ताऽवघातस्य विधान-मिति यावत् ॥

उभयोश्च युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा पञ्च पञ्चनखा भक्ष्या' इति। इदं हि वाक्यं न पञ्चनखभक्षण-परं, तस्य रागतः प्राप्तत्वात्। नाऽपि नियमपरं, पञ्चनखाऽपञ्चनख-भक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात्। अत इदम् अपञ्चनखभक्षण-निवृत्तिपरमिति भवति परिसंख्याविधिः। सा च द्विविधा—श्रौती

---

शृगालः एते पञ्चनखवन्तः पशवः। मयूरः सारसो हंसो जलकुक्कुटो भासः एते पञ्चनखाः पक्षिणः। अपञ्चनखाश्च हरिणोऽश्वः शूकरोऽजो मेषो महिषा-दिश्च। तामसदेहिनां रागप्राप्तं मांसभक्षणम्, अपञ्चनखा हरिणाद्याः पञ्च-नखाः शशकाद्याः ते रागतो भक्ष्याः, उभयोरुभयविषयोः रागप्राप्तयोर्युग-पत्प्राप्तयोर्भक्ष्यतया स्वीकृतयोर्भक्ष्यार्थं रागेण युगपत्प्राप्तौ सत्याम् 'अपञ्च-नखा अभक्ष्या' इति या **व्यावृत्तिः**—अपञ्चनखभक्षणनिवृत्तिः, तत्परो विधिः—**परिसंख्याविधिः**। परीक्ष्य सम्यक् ख्यापनं परिसंख्या, परीक्षा पञ्चनखभक्षणविधिर्न, रागप्राप्ते विध्यभावात्, नियमविधिरपि न, **रागतः**—पञ्चनखानाम् अपञ्चनखानां च भक्षणस्य युगपत्प्राप्तत्वादेव एकपक्षेऽप्राप्त-त्वाऽभावात् उभयपक्षे प्राप्तत्वात्, अतः—विधिद्वयाऽसम्भवात्, इदं 'पञ्च पञ्चनखा भक्ष्याः ब्रह्मक्षत्रेण राघव। शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः' इत्यार्षग्रन्थोक्तिः परिसंख्याविधिः, अपञ्चनखभक्षणनिवृत्तिपरम्, **परिसंख्याविधिः**। अपञ्चनखभक्षणनिवृत्तिर्न केनाऽपि प्राप्ता, तद्विधायकं वाक्यमिदम्। तथाच पञ्चसंख्याकाऽपञ्चनखभक्षणनिवृत्तिव्यापाराश्रय इत्यर्थः। लाक्षणिकोऽर्थोऽयम् ॥

परिसंख्या द्वेधा—**श्रौतीति**। श्रुतिशब्दबोध्या, 'अत्र ह्येवाऽवयन्ती'ति, प्रकृतेऽत्र, अनुष्ठानकाले हि अवयन्ति—अवजानन्ति गायन्ति पवमानस्तोत्रं गायन्तीति, नाऽन्यत्, एवकारेण पवमानाऽतिरिक्तस्तोत्रव्यावृत्तिरुक्ता, पव-मानः पावकः शुचिरिति त्रयोऽग्नयः, पवमानेष्टयो यागास्त्रयस्तत्पवमान-स्तोत्राणि तदितरस्तोत्राणि च गातव्यतयोपतिष्ठन्ते, तत्र पवमानातिरिक्त-

लाक्षणिकी चेति। तत्र 'अत्र ह्येवाऽवपन्ती'तिश्रौती परिसंख्या। एवकारेण पवमानाऽतिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। 'पञ्च पञ्चनखा भक्ष्या' इति तु लाक्षणिकी। इतरनिवृत्तिवाचकपदाऽभावात्। अत एवैषा त्रिदोषग्रस्ता। दोषत्रयं च—श्रुतहानिरश्रुतकल्पना प्राप्तबाध-श्चेति। तदुक्तम्—श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनम्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा' इति। श्रुतस्य पञ्चनखभक्षणस्य हानात्, अश्रुताऽपञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चाऽपञ्च-

---

स्तोत्राऽगानमिति अर्थो विधीयते, (१०।४।१४।२२) कौत्सं भवति, काण्वं भवति, प्रकृतपवमानव्यतिरिक्तेषु आज्यादिस्तोत्रेषु गायत्रीबृहत्यनुष्टुप्युक्तासु ऋक्षु आवापोद्वापयोः परिसंख्यावत्त्वात्। एवकारश्च एवमेवाऽऽम्नायते—'त्रीणिह वै यज्ञस्योदराणि यद् गायत्री बृहती अनुष्टुप् च अत्र ह्येवाऽऽवपन्ति एतमेतोद्वपन्ति' अनेन वाक्येन तद्विधानात्। न चाऽयमर्थवादः, अनन्यशेष-त्वात्, नाऽप्यनुवादः, अपूर्वाऽर्थत्वात्, तस्मात्पवमानेषु एव गायत्र्यादिषु आवापोद्वापौ। असंस्कृतो वह्निः पवमानादोष्टिभिः संस्क्रियते, ततः क्रतवः प्रवर्तन्ते (३।६।६)॥

लाक्षणिकी परिसंख्या 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र अपञ्चनखभक्षणस्य निवृत्तिवाचकपदाऽभावात् लक्षणया पञ्चनखेतरभक्षणाऽभावाऽर्थोऽभिधीयते, पञ्चनखान् भक्षयेदिति परिसंख्याविधिः। अत एवैषा **त्रिदोषग्रस्ता**—प्राप्तस्य विध्यर्थस्य त्यागः, अप्राप्तस्य निषेधार्थस्य स्वीकारः, अन्यत्र प्राप्तबाधः। **दोषत्रयमिति**। प्राप्तस्य श्रुतस्य हानिः, अप्राप्तस्याऽश्रुतस्य कल्पनया स्वीकारः, अन्यत्र प्राप्तस्य बाधः। अत्रार्थे श्लोकमाह—श्रुतार्थस्य परित्यागादिति। विध्यर्थस्य प्राप्तस्य परित्यागात्। अश्रुतार्थस्याऽप्राप्तार्थस्य परिकल्पनात्। अन्यत्र रागतः प्राप्तस्याऽर्थस्य बाधाच्चेति। परिसंख्या त्रिदूषणाधारा सती अर्थं परिसंख्यायते। अत्र दोषत्रयमध्ये **दोषद्वयम्**—श्रुतस्य शब्दस्य हानिः, अश्रुतस्य शब्दस्य कल्पनम्, इत्येवं शब्दनिष्ठं, हानिः शब्दनिष्ठा, कल्पनाऽपि शब्दनिष्ठेति। 'श्रुतार्थस्ये'त्यादौ श्रुत एवाऽर्थो विषयः श्रुतार्थः श्रुतशब्दात्मक-विषय इत्यर्थः। बाधो दोषोऽर्थनिष्ठः, असंगताऽनन्विताऽयोग्यार्थानामना-कांक्षितानां मिथ्योऽभावादेव मिथोऽन्वयाऽभावादेव बाध इति॥

ननु हुंफडादिमन्त्राणां प्रयोगसमवेतार्थस्मारकत्वाऽभावात् कथं प्रयोग-समवेतार्थस्मारकत्वं मन्त्रत्वं स्यादित्याशंक्य तत्समाधानमाह—**येषां त्विति।**

नखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्। आद्यबाधस्त्वर्थनिष्ठ इति दिक्। येषां तु प्रयोगसमवेतार्थस्मारकत्वं न सम्भवति तदुच्चारणस्याऽनन्यगत्याऽदृष्टार्थकत्वं कल्प्यते—इति नाऽऽनर्थक्यमिति ॥

नामधेयानां च विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्। तथाहि—

---

येषां हुंफडादिमन्त्राणां तु प्रयोगसमवेतार्थस्मारकत्वं नास्ति ते वैयर्थ्येऽपि तादृशस्मारकत्वसम्भवराहित्येऽपि तत्राऽव्याप्तिमत्त्वेऽपि 'हुंफडादिमन्त्रोच्चारणस्य किमपिफलाश्रवणे दृष्टे फलेऽसम्भविते, अदृष्टफलं कल्प्यते 'हुंफडाद्याः अदृष्टफलवन्तः मन्त्रत्वात् पवमानादिवत्'। अतो नाऽनर्थक्यम् अदृष्टार्थकत्वात् ॥

अथ नामधेयसार्थक्यमाह—**नामधेयानां चेति**। ये ये कर्मादिनामधेयमन्त्रवाक्यानि, तेषां स्वविधेया येऽर्थाः क्रियाव्यापारास्तेषां स्वार्थविजातीयार्थव्यावर्तकतया विधेयार्थनिश्चायकतया विधेयार्थस्यैव समर्थकतयाऽर्थवत्त्वं सार्थक्यम्। परिच्छेदो व्यावृत्तिः स्वार्थेतरभेदवदर्थकत्वम्। **तथाहीति**। 'उद्भिदा यजेत पशुकामः' 'पशुकामनावानधिकारी उद्भिन्नामकयागेन पशून् भावयेत्' इति तदर्थः। उद्भिन्ननामकयागव्यापारभावना पुरुषवृत्तिः, भावनाव्यापारो वा पुरुषवृत्तिरिति बोधः। उद्भिच्छब्दो यागनामधेयम्, तेन च विधेयाऽर्थपरिच्छेदः क्रियते, अनेन हि वाक्येनाऽप्राप्तत्वात् फलोद्देशेन यागो विधीयते। यागसामान्यस्य चाऽविधेयत्वाद् यागविशेष एव विधीयते। **तत्र कोऽसौ** विशेष इत्यपेक्षायाम् उद्भिच्छब्दादुद्भिन्ननामक उद्भिद्रूपो याग इति विशेषो ज्ञायते 'उद्भिदा यागेने'ति एकवाक्यस्थत्वरूपसामानाधिकरण्येन नामधेयाऽन्वयात्। भूमिमुद्भिद्य जायते तरुगुल्मादिरिति यौगिकार्थोऽत्र न; यागविशेषणत्वात्। उद्भिच्छब्दस्य यज्यवगतयागविशेषान्नाऽन्यो वाच्योऽर्थोऽस्ति, विशेषवाचित्वात्, सामान्यस्याऽविधेयत्वात् यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य उद्भित्पदस्य यजिना सामानाधिकरण्यम्, अतो नामधेयानां विधेयार्थपरिच्छेदकतया व्यावर्तकतया सामानाधिकरण्यात् यागनामधेयेऽर्थवत्त्वम्। 'उद्भिन्ननामकयागेन पशुं भावयेदि'ति। 'वैश्वदेवी आमिक्षे'त्यत्राऽऽमिक्षापदस्य वैश्वदेवीशब्दसामानाधिकरण्यमस्ति, वैश्वदेवीशब्दस्य देवतातद्धितत्वात्, तस्य 'साऽस्य देवता' इतिसर्वनामार्थस्मरणात् सर्वनाम्नां चोपस्थितिविशेषवाचित्वेन विशेषपरत्वात्, कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायाम् आमिक्षापदसान्निध्यादामिक्षारूपो विशेष

'उद्भिदा यजेत' पशुकाम' इत्यत्रोद्भिच्छब्दो यागनामधेयं, तेन च विधेयार्थपरिच्छेदः क्रियते । तथाहि—अनेन वाक्येनाऽप्राप्तत्वात् फलोद्देशेन यागो विधीयते, यागसामान्यस्याऽविधेयत्वात् यागविशेष एव विधीयते । तत्र कोऽसौ यागविशेष इत्यपेक्षायाम् उद्भिच्छब्दा-दुद्भिद्रूपो याग इति ज्ञायते। उद्भिदा यागेन पशुं भावयेदित्यत्र

---

इत्यवगम्यते। वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनाऽऽमिक्षापदस्य वैश्वदेवी-शब्देन एकार्थाऽन्वयित्वरूपसामानाधिकरण्यमेव, सामान्यस्याऽविधेयत्वात्, यज्यवगतविशेषसमर्पकत्वेनैव उद्भिच्छब्दस्य यजिसामानाधिकरण्यमित्युक्त-प्रकारेणैव नामधेयानामन्वयः साधुरिति ॥

नामधेयत्वे चत्वारि निमित्तान्याह—**नामधेयत्वं च निमित्तचतुष्टया-दिति**। निमित्तत्वम् आपादकत्वम्, भयप्रतियोगिनो विरोधितो भयद्वारा नामत्वनिर्मित्या निर्भयताऽऽसञ्जकत्वं निमित्तत्वम्। **मत्वर्थेति**। यत्राऽ-नामधेयत्वे मत्वर्थलक्षणाभयं, तद्भयान्निर्भयतार्थं नामधेयत्वम्। यत्राऽनाम-धेयत्वे वाक्यभेदाऽऽपत्तिभयं, तद्भयान्निर्भयतार्थं नामधेयत्वम्। तत्प्रख्य-शास्त्रबलेन निर्भयतार्थं नामधेयत्वम्। तद्व्यपदेशन्यायबलेन च निर्भयतार्थं नामधेयत्वं सिद्धयति। **तत्रेति**। 'उद्भिदा यजेत पशुकाम' इत्यत्र उद्भिदिति-नामधेयम्। अन्यथा मत्वर्थलक्षणाभयं जागर्ति, **तथाहीति**। उद्भिद्यते भूमि-रनेनेति व्युत्पत्त्या खनित्रं कुद्दालादि उद्भिद्वाच्यं भवेत्, तेन उद्भिदा यजेत पशुकामः' इत्यनेन वाक्येन 'यागेन पशुं भावयेत्, यागं च खनित्रेण भावयेत्' इत्येवं फलपशुलाभं प्रति यागविधानं यागं प्रति च उद्भिदिति गुणविधानं क्रियेत, तच्च न युज्येत, वाक्यभेदात्। **वाक्यभेदापत्तेरिति**। आवृतिरूप-वाक्यभेदापत्तेः, 'उद्भिदा यागं भावयेत्, यागेन च पशुं भावयेत्'। आवृत्तिर्हि दूषणम्, वाक्यद्वयप्राप्तेः। उद्देश्यविधेयादिसांकर्यापत्तेश्च।

'पशुकामो यजेते'तिपदद्वयस्याऽयमर्थः, पशुरूपं फलं यागेन कुर्यादिति, केन यागेनेत्यपेक्षायाम्, उद्भिदेति तृतीयान्तं पदं यागनामत्वेनाऽन्वेति, उद्भिद्यते पशुफलमनेन यागेनेति निरुक्त्या नामत्वमुद्भित्पदस्योपपद्यते, सामानाधिकरण्येन नामवाच्यत्वस्य निर्णयात्। उद्भिन्नामकेन यागेन पशुरूपं फलं कुर्यादित्युक्ते सामानाधिकरण्यं लभ्यते।

नन्वनेन वाक्येन खनित्ररूपो गुण एव विधीयते, पशूनां गुणफलत्वात्, खनित्रगुणस्य फलमस्त्विति चेन्न। गुणविधित्वे खनित्रेण साध्यो यो यागस्तेन

सामानाधिकरण्येन नामधेयाऽन्वयात् ॥ नामधेयत्वं च निमित्तचतुष्टयात् । मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति । तत्र 'उद्भिदा यजेत पशुकाम' इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात् । तथाहि—न तावदनेन वाक्येन फलं प्रति यागविधानम्, तं प्रति च गुणविधानं युज्यते, वाक्यभेदाऽऽपत्तेः । उद्भिच्छब्दस्य गुणसमर्पकत्वे च यागस्याऽप्यप्राप्तत्वात् गुणविशिष्टकर्मविधानं वाच्यम्,—उद्भिद्वता यागेन पशुं भावयेदिति विशिष्टविधौ च मत्वर्थलक्षणा—इत्युक्तमेव । 'चित्रया यजेत पशु-

---

तादृशं फलं कुर्यादित्येवं वैयधिकरण्यं स्यात्, तच्चाऽयुक्तम्, यदि अस्य उद्भिच्छब्दस्य खनित्ररूपगुणसमर्पकत्वं स्वीक्रियते तदा यत्र तेन गुणः समर्पणीयस्तादृशकर्मणोऽप्यप्राप्तत्वादनेन वाक्येन खनित्ररूपगुणविशिष्टकर्मविधानमेव वक्तव्यम्, अन्यथा वाक्यभेदप्रसंगात् । ततश्च उद्भिच्छब्दार्थरूपखनित्रवता यागेनेति सामानाधिकरण्येन अन्वयो भविष्यति, तथाच मत्वर्थलक्षणापत्तिरिति भयम् अनिष्टत्रसनम्, वाक्यभेदापत्तिरिति भयं स्यात्, तस्मान्न गुणविधानमनेन वाक्येनेति ॥ अथ गुणसमर्पकत्वे पुनर्मत्वर्थलक्षणापत्तिमाह—**उद्भिच्छब्दस्य गुणसमर्पकत्वे चेति** । उद्भिच्छब्दस्य खनित्ररूपगुणसमर्पकत्वं स्वीक्रियते तदा स गुणो यत्र समर्पणीयस्तादृशकर्मणोऽप्राप्तत्वात् अनेन वाक्येन खनित्ररूपगुणविशिष्टकर्मविधानमेव लक्षणया वक्तव्यं, तथा च उद्भिच्छब्दार्थखनित्रवता यागेनेतिविशिष्टार्थे मत्वर्थलक्षणापत्तिः । एनमर्थमाह—**उद्भिद्वता यागेनेति** । मतुवर्थो वैशिष्ट्यं, विशिष्टविधिर्मत्वर्थलाक्षणिककर्मविधानपरः स्यात् । सा नेष्टा लक्षणा, सम्भवति शक्यार्थे लक्षणाया अस्वीकारात् । सति मुख्यार्थे गौणाऽर्थवाननानौचित्यात् वाक्यस्वारस्यस्य विलोपात्, अनपेक्षिताऽपूर्वोत्थाने वैगुण्यात् अन्ततो हान्यापत्तेश्च । **उक्तमेवेति** । 'सोमेन यजेते'तिविध्यर्थनिरूपणाऽवसरे । यत्र शेषशेषिलक्षणमुभयं प्राप्तं तत्र विशिष्टं विधत्ते, सोमस्य द्रव्यत्वेन यागत्वाऽसंभवात् सोमपदे मत्वर्थलक्षणास्वीकारेण विशिष्टस्यैव विधेर्युक्तत्वात् 'सोमवता यागेनेष्टं भावयेदि'ति वाक्यार्थबोधः । यत्र शेषशेषिभावो नास्ति, गुणविधानं नास्ति, तत्र मत्वर्थलक्षणा दूषणम्, तद्भयात् नामधेयम् उद्भिदिति । वाक्यभेदभयादपि नामधेयमुद्भिदिति ॥

वाक्यभेदभयादपि नामधेयत्वं दर्शयति—**'चित्रया यजेत पशुकाम' इति** ।

काम' इत्यत्र चित्राशब्दस्य कर्मनामधेयत्वं वाक्यभेदभयात्। तथाहि—न तावदत्र गुणविशिष्टयागविधानं सम्भवति।

'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि'त्यनेन गुणस्य विहितत्वात् तद्विशिष्टयागविध्यनुपपत्तेः, यागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः। तस्माच्चित्राशब्दः कर्मनामधेयम्। तथा च चित्रायागेन पशुं भावयेदिति सामानाधिकरण्येनाऽन्वयान्न वाक्यभेदः। प्रकृतेष्टेः अनेकद्रव्यत्वेन चित्राशब्दवाच्यत्वोपपत्तिः॥

---

चित्रानामकयागेन पशुं भावयेदित्यर्थः। अत्र वाक्ये चित्रापदं कर्मनामधेयम्, न तु चित्रकर्बुरवर्णकरूपगुणविशिष्टपरम्, चित्रागुणविशिष्टार्थपरत्वे तु **वाक्यभेदप्रसङ्गात्**। वाक्यभेदमुपपादयति—**तथाहीत्यादिना**। **न तावदत्रेति**। 'चित्रया यजेत पशुकाम' इतिवाक्ये। तावद् वाक्यालंकारे। **न……सम्भवतीति**। चित्रागुणविशिष्टयागविधानं न सम्भवति, चित्राशब्दार्थभूतचित्रवर्णककिञ्चिद्गुणविशिष्टयागविधानाऽर्थसम्भवोऽपि नास्ति। असम्भवं व्युत्पादयति—**दधि मध्विति**। पिच्छलं सस्कृतं दधि, साऽऽतञ्चनं निरातञ्चनं वा दधि यथाऽनुष्ठानोक्तं ग्राह्यम्, मधु तरुरसः शर्करादि वा, पयः गवादिदुग्धं यथाऽनुष्ठानप्रोक्तं, घृतं हैयङ्गवीनीयम् आज्यं, धानाः—भ्रष्टयवाः, उदकं वसतीवरीजलम्, तण्डुलाः वितुषीकृता वित्वक्कृताश्च। तैर्द्रव्यैः सम्बन्धवत् प्रजापतिदेवताकं कर्माऽनुतिष्ठेत्, 'दधि……प्राजापत्यमि'त्यनेन वाक्येन दध्यादयो गुणतया विहिताः, एतद्वाक्यं दधीत्यादिप्रकृतवाक्यम् एतत्कर्मोत्पत्तिवाक्यम्, एतत्कर्मणश्चोत्पत्तिशिष्टदध्यादिगुणाऽवरुद्धत्वात् न तत्र गुणान्तरं विधातुं शक्यते, दध्यादिवाक्ये सोदकानि षड् द्रव्याणि विचित्राणि देवद्रव्याणि आम्नातानि, तत्र गुणान्तरं विधातुं न शक्यते, अतोऽयं गुणान्तरविशिष्टयागविधिर्नोपपद्यते। यदि चात्र वाक्ये उत्पत्तिवाक्यसिद्धस्वरूपयागस्य पशुरूपफलसम्बन्धः चित्राद्रव्यगुणसम्बन्धश्च विधीयते ततश्च न कर्मनामधेयत्वं चित्राशब्दस्येत्याशंक्याऽऽह—**यागस्येति**। 'चित्रया यजेते'ति यागस्य 'यागेन पशुं भावयेदि'तिफलसम्बन्धेन, यागं च चित्रागुणेनभावयेदि'ति गुणसम्बन्धेन गुणफलोभयसम्बन्धे विधीयमाने सति आवृत्तिलक्षणो वाक्यभेदो दुर्वारः। तेन उद्देश्यविधेयादिसांकर्यम्॥

चित्रत्वेन स्त्रीत्वेन च यागं भावयेदिति द्वयोर्गुणयोर्विधानेऽपि वाक्यभेदप्रसंगात्, प्राप्ते कर्मणि अनेकगुणविधाने वाक्यभेदस्य दुर्निवार्यत्वात्। यदि

'अग्निहोत्रं जुहोती'त्यत्राऽग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्य-शास्त्रात्। तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमान-त्वात्। अग्निहोत्रशब्दः कर्मनामधेयमिति यावत्।

नन्वयं गुणविधिरेव कुतो नेति चेन्न। यदि—अग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाऽऽधारत्वेनाऽग्निरूपो गुणो विधेय-स्तदा 'यदाहवनीये जुहोती'त्यनेनैवाऽग्नेः प्राप्तत्वात् तद्विधानाऽऽ-नर्थक्यम्, अग्नये होत्रमिति चतुर्थीसमासमाश्रित्याऽग्निदेवतारूपगुणो-नेन विधीयते इति चेन्न। तद्देवतायाः शास्त्रान्तरेण प्राप्तत्वात्। किं

---

तु गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयते, स्त्रीचित्रपशुद्रव्येण—इत्यर्थ-विधाने, गौरवलक्षणवाक्यभेदप्रसंगो दुर्वार एव॥ चित्रापदस्य कर्मनाम-धेयत्वे चित्रानामकयागेन पशुं भावयेदिति चित्रापदस्य यागे विशेषनाम-वाचकत्वेन, जनकतया फलं यागे तत्र स्ववाच्यत्वेन नामाऽपि यागे इति द्वयोः समानमेकम् अधिकरणम्, तादृशसामानाधिकरण्येन द्वयोः चित्रापद-यागयोः अन्वयात्—वाच्यत्वेनाऽन्वयात् न वाक्यभेदः, वैयधिकरण्ये हि वाक्य-भेददोषात्॥ नामधेयत्वे तु दध्यादिवाक्यं प्रकृतस्य चित्रानामकयागस्यो-त्पत्तिवचनं भवति। यागस्वरूपयोर्दधिद्रव्यप्रजापतिदेवतत्रोरत्रोपदिश्यमान-त्वात्। उत्पन्नयागस्य 'चित्रया यजेत पशुकाम' इतियागस्य फलसम्बन्ध-बोधनात् फलवाक्यमेव, प्रकृताऽर्थो लभ्यतेऽपि, तस्माच्चित्रापदं नामधेयं न तु गुणविधिरूपम्। चित्रेष्टेरनेकद्रव्यत्वेन, प्रकृतेष्टेः चित्राशब्दवाच्यत्वोपपत्तिः चित्राख्ययागत्वसिद्धिः॥

अथ तत्प्रख्यशास्त्रात् नामधेयत्वम् 'अग्निहोत्र'शब्दस्य दर्शयति—**'अग्निहोत्रं जुहोती'त्यत्रेति**। ज्योतिष्टोमादौ सर्वत्राऽग्निहोत्रहोमाख्यं कर्म अग्नि-होत्रमिति कीर्त्यते, **'तत्प्रख्यं चाऽन्यशास्त्रमि'ति** तत्प्रख्यशास्त्रसूत्रम्, सूत्रा-धारनिमित्तात् सूत्रोक्तन्यायनिमित्तादपि शब्दस्याऽग्निहोत्रात्मकस्य कर्मनाम-धेयत्वं भवति, तस्य गुणस्य या प्रख्या तस्या निर्णायकस्य प्रख्यापकस्य शास्त्रस्य सूत्रस्य न्यायस्य विद्यमानत्वात्। विधिना तावत् तदेव विधेयं यत् प्रकारान्तरेण अप्राप्तम्। 'अप्राप्ते शास्त्रमर्थवत्' इतिन्यायात्, अग्निहोत्र-शब्दस्य च गुणविधित्वे योगुणस्तेन विधेयः, सः शास्त्रान्तरेण प्राप्तः। **अग्नौ होत्रमस्मिन्निति** सप्तमीमाश्रित्य होमाधारत्वेनाऽग्निर्गुणो विधेयस्तदा तु सः

तच्छास्त्रान्तरमिति चेत् !, यदग्नये च प्रजापतये च सायं जुहोतीति' केचित् । अपरे तु—'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रवर्ण एवाग्निरूपदेवताप्रापकः ॥

ननु—अग्नेर्मान्त्रवर्णिकत्वे प्रजापतिदेवतया बाधः स्यात् । मन्त्रवर्णस्य चतुर्थीतो दुर्बलत्वात् । यथाहुः—तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः । देवताया विधिस्तत्र दुर्बलं तु परं परमि'ति चेन्न । 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र न केवलं प्रजापतिविधानम्, किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेः । एवं च न बाधः,

---

'आहवनीये जुहोती'त्यनेन प्राप्तः, तेन विध्यानर्थक्यम् । **अग्नये होत्रमस्मिन्निति** चतुर्थीमाश्रित्याऽग्निदेवता समर्प्यते, तदपि न, शास्त्रान्तरेण 'यदग्नये च प्रजापतये च सायं जुहोती'त्यनेन होमानुवादेनाऽग्निप्रजापत्योर्विधानात् नाऽग्निहोत्रपदं देवतासमर्पकम् , अग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकं सापेक्षविधिव्यापारात् 'च'शब्दश्रवणात् सापेक्षपदद्वयस्याऽऽख्याताऽन्वयान्न वाक्यभेदः, निरपेक्षविधाने वाक्यभेदात् , न त्वत्र । **तद्देवतायाः**—अग्निदेवतायाः । शास्त्रान्तरं पृच्छति—**किं तच्छास्त्रान्तरमिति** । 'यदग्नये च प्राजापतये च सायं जुहोती'तिशास्त्रान्तरम् । 'अग्निर्ज्योतिर्ज्योतिरग्नि'रित्यादिमन्त्रवर्णप्राप्तमग्निमनूद्य अग्निसमुच्चितप्रजापतिविधाने लाघवम् , उभयसमुच्चितविधाने गौरवमिति न समुच्चयितोभयविधानं 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र स्वीकर्तव्यमिति—अस्वरसबीजमुक्तम् ,—**केचिदि**त्यनेन । **अपरेत्विति** । 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे'तिसायंजुहोती'तिविहितो मन्त्रोऽग्निदेवताप्रापकः । तेन मन्त्रेण प्राप्तमग्निमनूद्य तत्समुच्चितस्य प्रजापतेः 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र सायंकालेऽग्निहोत्रदेवतात्वं विधीयते । 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोती'तिविहितेन च मन्त्रेण प्राप्तं सूर्यमनूद्य तत्समुच्चितस्य च तस्य 'यत्सूर्याय च प्रजापतये च प्रातर्जुहोती'त्यत्र प्रातःकालेऽग्निहोत्रदेवतात्वं विधीयते, तेन चाग्निर्मान्त्रवर्णिकतया प्राप्तः । **नन्वग्नेरिति** । एवं चेत् ! अग्नेर्मान्त्रवर्णिकतया प्राप्तत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धेः, 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रातर्जुहोती'ति वाक्यद्वयं व्यर्थम् । तन्न । सायं होमेऽग्निसमुच्चितस्य प्रजापतेर्विधानं प्रातर्होमे सूर्यसमुच्चितस्य प्रजापतेर्विधानं, तस्यैकवाक्येन कर्तुमशक्यत्वात् । अतो न वाक्यद्वयं व्यर्थम् ॥

केवलप्रजापतिविधानाऽभावात् । न चाऽत्र समुच्चितोभयविधानमेव कथं नेति वाच्यम् । समुच्चितोभयविधानाऽपेक्षयाऽन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात् ।

एवं प्रयाजेषु समिदादिदेवतानां 'समिधः समिधो अग्न आज्यस्य

---

अथ—अग्नेर्मन्त्रवर्णिकत्वे प्रजापतिना वह्नेर्बाधः स्यात् प्रजापतेश्चतुर्थ्या देवतारूपेण प्राप्तत्वेन प्रबलत्वात्, अग्नेस्तु मन्त्रवर्णप्राप्तत्वेन दुर्बलत्वाच्च ॥ ननु 'साऽस्य देवते'तितद्धितप्रत्ययस्य देवतात्वे स्मरणवच्चतुर्थी, न देवतात्वे स्मर्यते 'सम्प्रदाने चतुर्थी'तिसम्प्रदानमात्रे चतुर्थ्याः स्मरणात् । ततश्च प्रजापतिना कथमग्नेर्बाधः स्यादिति चेन्न । त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिगृहीतृत्वस्य सम्प्रदानपदार्थत्वेन त्यज्यमानद्रव्योद्देश्यत्वरूपस्य देवतात्वस्य सम्प्रदानस्वरूपाऽन्तर्गतत्वात्, ततश्चतुर्थीतः सम्प्रदानैकदेशतया देवतात्वप्रत्ययो भवत्येव, मन्त्रवर्णात्तु न देवतात्वप्रतीतिरस्ति किन्त्वधिष्ठानत्वमेव ततः प्रतीयते, तस्मान्मन्त्रवर्णश्चतुर्थीतो दुर्बल एव, प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताऽग्नेर्बाध दुर्वार एव ॥

**तद्धितेनेति** । तत्र—तद्धितादिषु मध्ये । 'साऽस्य देवते'ति ( ४।२।२४ पाणि. ) प्रथमान्ताद् देवतावाचकशब्दात् अस्याऽर्थेऽणादिः । इति तद्धितेन देवताया विधिरयम्, सा चतुर्थी सम्प्रदाने त्यज्यमानद्रव्योद्देश्यत्वे सति प्रगृहीतृत्वरूपे सम्प्रदानपदार्थे भवतीति चतुर्थ्या तद्धितेनाऽणा देवताया विधिरयम्, तद्धिताऽपेक्षया चतुर्थ्या दौर्बल्यम् । 'यदग्नये च प्रजापतये च सायं जुहोती'तिमन्त्रशब्देन वा देवताया विधिरयमित्यत्र चतुर्थ्यपेक्षया तु मन्त्रवर्णस्य दौर्बल्यं भवतीति तत्र परं परं दुर्बलं बोध्यम् । अतः प्रजापतिदेवतयाऽग्नेरेव बाधः स्यादिति **चेन्न** । **न केवलमिति** । यदि च 'यदग्नये च प्रजापतये च सायं जुहोती'ति 'प्रजापतये जुहोती'तिकेवलप्रजापतिविधानं स्यात्तदा तु भवेत् प्रजापतिनाऽग्नेर्बाधः, परन्तु न तथाविधानं क्रियते । **किन्त्विति** । मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितस्य प्रजापतेर्विधानं क्रियते । **एवं चेति** । अग्निसमुच्चितप्रजापतिविधाने च सति । न प्रजापतिनाऽग्नेर्बाधः । यतः, केवलप्रजापतेर्विधानस्याऽभावात् । **न चाऽत्रेति** । अत्र—'यदग्नये च प्रजापतये चे'तिवाक्ये होमानुवादेन समुच्चितस्यैवोभयस्य विधानं क्रियते इति कथं न स्वीक्रियते इति न च वाच्यम् । **समुच्चितोभयेति** । समुच्चयितयोरग्निप्रजापत्योर्द्वयोर्विधानाऽपेक्षया, **अन्यतः**—मन्त्रवर्णतः प्राप्तमग्निमनूद्य

**व्यन्तु' इत्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात् । 'समिधो यजती'त्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात् कर्मनामधेयम् ।**

**'श्येनेनाऽभिचरन् यजेते'त्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात् । तेन व्यपदेशात्, उपमानात् तदन्यथाऽनुपपत्तेः, इति यावत् । तथाहि—यद्विधेयं तस्य स्तुतिर्भवति । यदि—अत्र श्येनो विधेयः स्यात्, तदा अर्थवादैस्तस्य स्तुतिः कार्या । अत्र 'यथा वै**

---

लाघवेनाऽग्निसमुच्चितप्रजापतिमात्रविधाने **लाघवात्,** उभयोः पृथग्विधानाऽपेक्षयाऽपृथग्विधाने लाघवात्, तत्प्रख्यशास्त्रात् देवताप्रख्यापनात् अग्निहोत्रं कर्मनामधेयम् ।। वाक्ये चकारः समुच्चयं प्राधान्येन न ब्रूते, किन्तु कारकद्वयोपसर्जनत्वेन समुच्चयं ब्रूते । कारकद्वयं तु प्रधानम् ।।

तत्प्रख्यशास्त्रान्नामधेयत्वे उदाहरणान्तरमाह—**एवमित्यादिना।** प्रयाजेषु पञ्चप्रयाजेषु यागेषु—'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इत्यत्र यागेषु तन्नामकदेवतानां 'समिधः समिधो अग्न आज्यस्य व्यन्तु' इत्यादिमन्त्रवर्णेभ्यः **प्राप्तत्वात्,** तत्प्रख्यशास्त्रात् तत्र 'समिधो यजती'त्यादिषु **समिदादिशब्दाः** तनूनपादिड्बर्हिःस्वाहाकारशब्दाः, कर्मनामधेयम्, समित्कर्मनामकयजनतनूनपान्नामकयजनेण्नामकयजनबर्हिर्नामकयजनस्वाहाकारनामकयजनानि नामानि यागनामानीति, तत्तन्नामकयागा इति । तस्य गुणस्य या प्रख्या सा देवताप्रख्या कर्मप्रख्या चेति तत्प्रख्यापकं शास्त्रं सूत्रं तन्न्यायादिति ।।

अथ तद्व्यपदेशेन रूपेण श्येनशब्दस्य कर्मनामधेयत्वं दर्शयति—'श्येनेनाऽभिचरन् यजेते'त्यत्र—**श्येनशब्दस्येति ।** श्येननाम्ना श्येननामककर्मनामधेयमुच्यते । ननु श्येनः पक्षिद्रव्यरूपो गुणः सोमद्रव्यं बाधित्वा तत्स्थाने काम्यो विधीयते, श्येनो रूढ्या पक्षीति चेन्न । **तद्व्यपदेशादिति ।** तेन श्येनेन व्यपदेशात् । **तेन व्यपदेशात् ।** श्येनेन उपमानात्, श्येनोपमितं कर्म श्येनपदं विना नाऽवगतं भवेत्, अतः श्येनस्याऽभिधानं कृतम् । उपमानोपमेयभावो हि भेदघटितः, **अन्यथाऽनुपपत्तेरिति ।** अर्थवादवाक्ये 'श्येनेनाऽभिचरन् यजेते'त्यत्र श्येनोपमानेन विधेयस्य कर्मणः स्तुतिः, सा श्येननामककर्मविशेषं विना नोपपद्येत, अतः श्येननामकं कर्म विधीयते, न तु पक्षिरूपगुणो विधीयते । **तथाहीति ।** विधेयस्य स्तुतिः श्येननामकपक्षिविशेषस्य स्तुतिरर्थवादैः क्रियते, यदि अत्र श्येनो विधेयः स तदा स्तुत्य एव, यथा **श्येनः** पक्षिविशेषो

श्येनो निपत्याऽऽदत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते'इत्यनेनाऽर्थवादेन श्येनः स्तोतुं न शक्यः, श्येनेनोपमानेनाऽर्थान्तरस्तुतेः क्रियमाणत्वात् । न च श्येनोपमानत्वेन स एव स्तोतुं शक्यते, उपमानोपमेयभावस्य भिन्ननिष्ठत्वात् । यदा तु श्येनसंज्ञको यागो विधीयते तदाऽर्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यते इति श्येनशब्दः कर्मनामधेयं तद्व्यपदेशादिति ॥

उत्पत्तिविशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयनिमित्तमिति

---

निपत्य मत्स्यादीन् जन्तूनादत्ते एवमयं श्येननामको यागो यागदेवता द्विषन्तं भ्रातृव्यं भ्रातृकुटुम्बात्मकं भ्रातृसुतादिशत्रुं निपत्याऽऽदत्ते, यं शत्रुं श्येनेन यागेनाऽभिचरति तमादत्ते । अनेन श्येनाऽर्थवादेन श्येनः स्तोतुं न शक्यः, श्येनसंज्ञकयागस्य विधेयत्वेन श्येनयागः स्तोतुं शक्यते । **न तु स एव** श्येन एव स्तोतुं शक्यः उपमानं श्येनः, उपमेयं श्येनयागः, तयोर्भिन्नत्वात् भिन्ननिष्ठत्वाच्च, स्वयं नोपमानं नोपमेयं च भवति, स्वाश्रयापत्त्याऽऽत्महानेः । अभेदोपमालंकारे तु क्वचिदपवाद एव 'गगनं गगनाकारं सागरः सागरोपमः' इत्यादौ तु न सापेक्षं वर्णनम्, अतो नोपमोपमेयप्रमाणगोचरता, किन्तु—अलंकारगोचरता, यद्वा गगनाकारवद् गगनं गगनवद्गगनाकार इति धर्मधर्मिभेदेन घटनीयम् , । अनन्वयाऽलंकारमप्याहुः । युगभेदेन तत्त्वव्यापारभेदेनापि सादृश्यं वोपमामाहुः । 'राजीवमिव राजीवं जलं जलमिवाऽजनि । 'उपमानोपमेयत्वमेकस्यैव त्वनन्वयः' (सा० द० १०।२६) ॥ इति—एवंप्रकारेण श्येनयागस्तुतिः । श्येनशब्दश्च श्येनकर्मनामधेयम् , **श्येनव्यपदेशात्** श्येनोपमानादिति ॥

अथ कर्मनामधेयत्वे उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं हेतुं निमित्तमाह—**उत्पत्तिशिष्टेति** । उत्पत्तिवाक्ये एव शिष्टा ये गुणास्तेषां बलीयस्त्वम् । चातुर्मास्ये चत्वारि पर्वाणि, वैश्वदेवः, वरुणप्रघासः, साकमेधः, सुनासीरीयश्चेति । तेषु प्रथमे वैश्वदेवपर्वणि अष्टौ यागा विहिताः, '१–आग्नेयमष्टाकपालं निर्वपति, २–सौम्यं चरुम् , ३–सवित्रं द्वादशकपालं, ४–सारस्वतं चरुम् , ५–पौष्णं चरुम् , ६–मारुतं सप्तकपालं, ७–वैश्वदेवीमामिक्षाम् , ८–द्यावापृथिव्यमेककपालमिति' ॥ एभिरुत्पत्तिवाक्यैरेव शिष्टा देवा गुणा वर्णिताः, तेषां बलीयस्त्वम् । तेषामष्टानां यागानां सन्निधाविदमाम्नायते 'वैश्वदेवेन यजेते'ति । अत्र आग्नेयादीन् यागान् 'यजेते'ति अनूद्य वैश्वदेवेनेति

केचित् । यथा 'वैश्वदेवेन यजेते'त्यादौ । अत्र—उत्पत्तिविशिष्टाऽग्न्यादीनां बलीयस्त्वाद् वैश्वदेवशब्दस्य विश्वदेवदेवताऽभिधायकत्वं न सम्भवतीति कर्मनामधेयत्वम् ।

---

विश्वदेवदेवतारूपो गुणस्तेषु यागेषु विधीयते । 'वैश्वदेव्यामिक्षे'ति उत्पत्तिशिष्टो देवता विश्वेदेवा आमिक्षायां प्राप्ताः सप्तमस्थानीयाः, ते तद्भिन्नेषु आग्नेयादिषु षट्सु पूर्वेषु त्वप्राप्ताः, पश्चिमेऽप्यप्राप्ताः, अतः सर्वेषु अष्टसु विश्वेदेवो गुणो विधीयते 'वैश्वदेवेन यजेते'तिसमोपाऽऽम्नातवाक्येन । तत्तदीयदेवतागुणस्तु उत्पन्नो गुणो देवता तत्तद्वाक्येन उत्पन्नः शिष्टः शिष्यते यः विशिष्टं विशेष्यते येन यागो विशेष्यते येन उत्पन्नार्हगुणेन स उत्पन्नशिष्टो गुणः सप्तमाऽऽमिक्षायां विश्वदेवतागुणः, उत्पन्नशिष्टानाम् उत्पत्तिशिष्टोत्तरप्राप्तत्वेन निर्बलत्वम, आग्नेयादीनां तूत्पत्तिशिष्टानामाद्यभावित्वेन बलीयस्त्वम् । 'वैश्वदेवेन यजेते'तिवाक्येनाऽष्टस्वेव विश्वदेवदेवतागुणविधानात् । उत्पत्तिवाक्यैर्विहितान् आग्नेयादीनष्टौ यागान् यजेतेत्यनूद्याऽष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते 'प्राचीनप्रवणे वैश्वदेवेन यजेते'त्यादिषु वैश्वदेवशब्देन एकेनैवाऽष्टानां संघस्य व्यवहर्तव्येनाऽर्थवत्त्वात् । तथा च नामप्रवृत्तिनिमित्तभूता निरुक्तिर्द्विधा—'आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितानां सर्वेषां 'छत्रिणो यान्ती'तिन्यायेन वैश्वदेवत्वमिति, विश्वेदेवा अष्टानां कर्तार इति वा तेषां वैश्वदेवत्वम् । तथाच ब्राह्मणम्—'यद्विश्वदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमि'ति । अग्न्यादयो हि उत्पत्तिवाक्येन शिष्टत्वादेव प्रबलाः, विश्वेदेवास्तु उत्पन्नवाक्येन शिष्टत्वाद् दुर्बलाः, तस्मात् वैश्वदेवशब्दः कर्मनामधेयमिति सिद्धान्तः विश्वदेवशब्दो न विश्वदेवदेवताभिधायकः, उत्पत्तिशिष्टस्य गुणस्याऽग्न्यादेर्बलीयस्त्वात्, उत्पन्नशिष्टस्य विश्वदेवदेवतागुणस्य निर्बलत्वात् । किन्तु उक्तब्राह्मणवाक्येन उत्पत्तिशिष्टगुणबलीयस्त्वेन वैश्वदेवेतिकर्मनामधेयमिति ॥

अत्र पञ्चमः पक्षो न निमित्तम्, किन्तु तृतीय एवेति दर्शयति—वस्तुतस्त्विति । तत्प्रख्यशास्त्रादेव 'वैश्वदेवेन यजेते'ति वाक्यस्य वैश्वदेवाख्यं कर्मेति वैश्वदेवकर्मनामधेयत्वम् । **प्रकृतयागे**—वैश्वदेवनामकेऽष्टानामाग्नेयादीनां संघात्मके प्रकृतयागे । **विश्वदेवेति** । विश्वदेवरूपो गुणः सम्प्रतिपन्नः सम्प्राप्तो यस्मात् तादृशशास्त्रस्याऽर्थवादरूपस्यैव सत्त्वात् । तादृशगुणप्रापकं शास्त्रमर्थवादमुदाहरति—**यद्विश्वदेवा इति** । यत्कर्मणि विश्वेदेवाः सम्यग् अयजन्त तत्तत्कर्मणो वैश्वदेवकर्मणः वैश्वदेवत्वम् वैश्वदेवनामधेयत्वम् ।

वस्तुतस्तु तत्प्रख्यशास्त्रादेवाऽस्य कर्मनामधेयत्वं प्रकृतयागे विश्वदेवरूपगुणसम्प्रतिपन्नशास्त्रस्याऽर्थवादरूपस्यैव सत्त्वात्। 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इति ॥ पुरुषस्य निवर्तकं वाक्यं निषेधः, निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैवाऽर्थवत्त्वात्, तथाहि—यथा विधिः प्रवर्तनां प्रतिपादयन् स्वप्रवर्तकत्व-

---

एतच्छास्त्रं कर्तृरूपं सत् प्रकृते वैश्वदेवयागे विश्वेदेवरूपगुणप्रापकं भवति, नामधेयस्य प्रयोजनं तन्नाम्ना व्यवहारः, अनेन यागेन नाम्नाऽहं यक्ष्ये इति ऋत्विग्वरणादिषु व्यवहारः सुलभः। तस्मात् वैश्वदेवादिशब्दानां कर्मनामधेयत्वं, तत्प्रख्यशास्त्रादिति। (१।४।११।१३,१६) ॥ 'वैश्वदेवे विकल्प इति चेत्' (१३)। 'परार्थत्वाद्गुणानामि' (१६) त्यादिना नामधेयत्वनिर्णयात् ॥

तदेवं निमित्तचतुष्टयादिनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वं निरूप्य निषेधवाक्यानामर्थवत्त्वमितिरूपणाय निषेधवाक्यं लक्षयति—**पुरुषस्येति**। निवृत्तिजनकं वाक्यं निषेधः। 'न कलञ्जं भक्षयेत्' इत्यादिनिषेधवाक्यानाम् अनर्थहेतुभूतायाः कलञ्जभक्षणादिक्रियायाः सकाशात्पुरुषस्य निवृत्तिजनकत्वेनैवाऽर्थवत्त्वं, नतु किञ्चित्कर्तव्यताप्रतिपादकत्वेन। यथा विधिवाक्यानां स्वप्रवर्तकत्वाऽन्यथाऽनुपपत्त्या विधेयार्थस्य स्वर्गादिरूपेष्टसाधनत्वप्रत्यायनेन तत्र विधेयार्थे पुरुषप्रवृत्तिजनकत्वं, तथा निषेधवाक्यानामपि स्वनिवर्तकत्वाऽन्यथाऽनुपपत्त्या निषेध्यस्य पुरुषाऽनिष्टसाधनत्वप्रत्यायनेन निषेधार्थे निवृत्तिजनकत्वम्, इत्येवं निवृत्तिजनकत्वेन अर्थवत्त्वमुपपादयति—**तथाहीत्यादिना**। विधिः 'यजेत' 'जुहुयात्' इत्यादिः प्रवृत्तिमुपपादयन् स्वस्मिन् स्वस्य वा प्रवर्तकत्वस्य निर्वाहार्थं निष्ठार्थं विधेयस्य यागादेर्होमस्य वा इष्टसाधनत्वम् इष्टं फलं स्वर्गादि तत्त्वमाक्षिपन् आपादयन् 'यागं हवनं विना वा स्वर्गाद्यनुपपत्तेः, तत्र—यागे होमे वा पुरुषं प्रवर्तयति। तथारीत्या 'न कलञ्जं भक्षयेदि'ति 'न हिंस्यादि'ति चेत्यादिनिषेधोऽपि निवृत्तिं प्रतिपादयन् बोधयन् स्वस्मिन् स्वस्य वा निवृत्तिजनकत्वस्य निर्वाहार्थं नियतत्वार्थं निषेध्यस्य कलञ्जभक्षणस्य हिंसायाश्च वा परप्राणिगतस्य स्वागतस्य चाऽनिष्टस्य दुःखनरकादेः साधनस्य कलञ्जभक्षणस्य हिंसनस्य च तत्त्वमाक्षिपन् 'कलञ्जभक्षणेन हिंसनेन वा नरकोत्पत्तेः' इत्युपपादयन् पुरुषं कलञ्जभक्षणात् हिंसनाद्वा निवर्तयति॥ 'पुरुषप्रवृत्तिः कलञ्जभक्षणव्यापाराऽभावः, हिंसनव्यापाराऽभावश्चे'ति। तदव्यापार इति यावत्।

निर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्तयति, तथा 'न कलञ्जं भक्षयेदित्यादिनिषेधोऽपि निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य पराऽनिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति ॥ ननु निषेधवाक्यस्य कथं निवर्तनाप्रतिपादकत्वमिति चेत् !, उच्यते—न तावदत्र धात्वर्थस्य नञर्थेनाऽ-

---

ननु विधौ 'यजेते'त्यत्र यागप्रवर्तनावानिति साक्षाद्यागकर्तव्यता वाक्यार्थो भवति, तथा निषेधे 'न भक्षयेत्' 'न हन्तव्य' इत्यादौ भक्षणवर्जनकर्तव्यतावान् धात्वर्थहननवर्जनकर्तव्यतावानिति वाक्यार्थो विधिप्रवर्तनापर एव भवतु, न तु निवर्तनापरक इति शंका तत्समाधानं च कर्तुमुपक्रमते—**ननु निषेधवाक्यस्येति**। 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न हन्तव्यः' 'मा हिंस्यात् सर्वा भूतानि' इत्यादिवाक्यानां भक्षणहिंसेतरकर्तव्यतार्थत्वे सति **कथं** केन प्रकारेण निवर्तनायाः प्रतिपादकत्वं भवतीति चेत् !, **उच्यते इति**। नञर्थस्याऽभावस्य धात्वर्थेन भक्षणेन हिंसनेन चाऽव्यवधानेऽपि धात्वर्थस्य तिप्रभृतिप्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितत्वात् न नञर्थेन साक्षादन्वयः सम्भवति, अन्यत्रोपसर्जनत्वेनाऽन्वितस्य अन्यत्रोपसर्जनत्वेनाऽन्वयाऽयोगात्। **न तावदत्रेति**। अत्र—निषेधवाक्ये। **अन्यथेति**। अन्यविशेषणत्वेनोपस्थितस्याऽप्यन्यत्र विशेषणत्वेनाऽन्वयस्वीकारे पुरुषोपसर्जनत्वेनोपस्थितस्य राज्ञोऽपि क्रियोपसर्जनत्वेनाऽन्वयाऽऽपत्त्या अनाकांक्षितबोधाऽनुद्भवात् निरर्थकत्वाऽऽपत्त्याऽन्वयव्यभिचारात्। तत्र पुरुषकर्मकाऽऽनयनवत् राजसम्बन्धिपुरुषबोधोत्तरं राजसम्बन्धानयनमित्यपि निराकांक्षबोधापत्तेः ॥ **अतः—इति**। आपत्तेरप्राप्त्यर्थम्, धात्वर्थस्य नञर्थेनाऽन्वयाऽसम्भवात् कलञ्जादिपदार्थस्याऽपि कारकोपसर्जनत्वेनोपस्थितस्य कर्मत्वादावन्वयेन तदुत्तरमुपस्थितस्य कलञ्जादिपदार्थस्य नञर्थेऽन्वयाऽसम्भवात्, परिशेषात्—'विधिप्रत्ययार्थः, कारकधात्वर्थाऽतिरिक्ताऽर्थाऽन्वयवान् कारकधात्वर्थाऽनन्वितत्वे सति अन्वितत्वात्' इति। परिशेषानुमानात्, यद्वा—प्रत्ययार्थस्य नञर्थेऽन्वयाऽनुपपत्त्याऽनन्वितबोधाऽनुपपत्त्या वैयर्थ्याऽऽपत्त्याऽवशिष्टार्थाऽन्वयवत्त्वं भवेदिति, अर्थापत्त्याऽपि प्रत्ययार्थस्य शब्दभावनाया एव नञर्थेनाऽन्वयः, प्रत्ययार्थं इष्टसाधनत्वं, तदभाव इष्टसाधनत्वाऽभावः, कलञ्जकर्मकभक्षणमिष्टसाधनत्वाऽभाववदिति। प्रत्ययार्थो द्वेधा—आख्यातत्वांऽशवाच्याऽर्थभावना, लिङंशवाच्या शब्दभावना च। **तत्राऽपि** न आख्यातत्वांशवाच्यभूताया अर्थभावनाया नञर्थेऽन्वयः सम्भवति, **तस्याः** अर्थभावनायाः लिङंश-

न्वयः, अन्यप्रधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः। नहि अन्योपसर्जनत्वेनोपस्थितमन्यत्राऽन्वेति। अन्यथा 'राजपुरुषमनये'त्यादावपि राज्ञः क्रियाऽन्वयाऽऽपत्तेः। अतः प्रत्ययार्थस्यैव नञर्थेनाऽन्वयः। तत्रापि नाऽऽख्यातत्वांऽशवाच्यार्थभावनायाः, तस्या लिङंशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितेः, किन्तु लिङंशवाच्यशब्दभावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात्॥ नञश्चैष स्वभावो यत् स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्। यथा—

'घटो नास्ती'त्यादौ अस्तीतिशब्दसमभिव्याहृतो नञ् घटसत्त्वविरोधि घटाऽसत्त्वं गमयति तदिह लिङ्समभिव्याहृतो नञ् लिङर्थ-

---

वाच्या या प्रवर्तना तत्रोपसर्जनत्वेनोपस्थितेः, शब्दभावनाविशेषणत्वेनोपस्थितेः। **किन्त्विति**। लिङो योंऽशो लिङ्त्वरूपो धर्मस्तद्वाच्या शब्दभावना तस्या नञर्थेनाऽन्वयः, लिङंशवाच्यशब्दभावनायाः स्वेतरसर्वार्थापेक्षया **प्रधानत्वात्**—मुख्यत्वेनोपस्थितत्वात्। अतो नञर्थेनाऽन्वयं प्रति प्रत्ययार्थत्वं न प्रयोजकम्, समानत्वात्। किन्तु सर्वाऽपेक्षया मुख्यत्वेनोपस्थितत्वं प्रयोजकम्, तच्च शब्दभावनायामबाधितम्। तथा च लिङ्प्रत्ययार्थः शब्दभावना प्रवर्तनाविशेषरूपा प्रवृत्तिरेव, तस्या नञर्थेऽभावेऽन्वयः, प्रवर्तनाऽभाव इति तिप्रत्ययार्थः, अभावो भावात्मको निवर्तनारूपः, तथाच प्रवर्तनाविरोधिनिवर्तनाबोधकस्तिप्रत्यय इति। नञश्चैष स्वभाव इति। स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वं स्वान्वितपदार्थविरोधिबोधकत्वमिति बोध्यम्। नञर्थाऽन्वितो यः पदार्थः प्रवर्तना तद्विरोधिनिवर्तनाया बोधकत्वं नञः। **'भूतले घटो न अस्ति'** इत्यत्राऽभावस्य नञर्थस्य स्वभावः, नञ्समभिव्याहृतपदार्थोऽस्तित्वं सत्त्वं तद्विरोधि अनस्तित्वम् असत्त्वम् बोधयति। **अस्तीतिशब्देति**। नास्तीति अस्तिशब्दसमभिव्याहृतो नञ् सत्त्वविरोधि असत्त्वं भूतले घटाऽसत्त्वं गमयति—भूतलनिरूपिताऽसत्त्ववान् घटः भूतलनिरूपितम् असत्त्वं घटवृत्ति। नास्तीत्युक्ते कस्याऽसत्त्वमस्तीति आकांक्षया सत्त्वशब्दान्वयिना नञाऽत्र असत्त्वं बोध्यते, सत्त्वनिरूपकाऽऽकांक्षायाः सत्त्वेन घटनिरूपितसत्त्वविरोधि—इत्यर्थो बोध्यते॥ **तदिहेति**। 'न कलञ्जं भक्षयेदि'त्यत्र। लिङ्तिसमभिव्याहृतो नञ् लिङर्थप्रवृत्तिविरोधिनिवृत्तिं बोधयति। तत्प्रदर्शितस्वभावं नञ्निवर्तनां प्रवर्तनाविरोधिनीं बोधयतीति। 'न कलञ्जं भक्षयेत्' कलञ्जकर्मकभक्षणगोचरनिवर्तना पुरुषवृत्तिः। ब्राह्मणो न हन्तव्यः'

प्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति । विधिवाक्यश्रवणे 'अयं मां प्रवर्तयति' इतिप्रतीतेः । तस्मान्निषेधवाक्यस्थले निवर्तनैव वाक्यार्थः । यदा तु प्रत्ययार्थस्य तत्राऽन्वये बाधकं तदा धात्वर्थस्यैव तत्राऽन्वयः ॥

तच्च बाधकं द्विविधम् । 'तस्य व्रतमि'त्युपक्रमो विकल्पप्रसक्तिश्च । तत्राऽऽद्यं 'नेक्षेतोद्यन्तमादित्यमि'त्यादौ 'तस्य व्रतमि'त्युप-

---

ब्राह्मणवृत्तिः हननगोचरनिवर्तना इति बोधः । तत्र विधिप्रतीतिं प्रदर्श्य निषेधनिवर्तनां दर्शयितुं हेतुभूतप्रवृत्तिं प्रमाणयति—**विधिश्रवणेऽयं मामिति** । 'यजेते'तिवाक्यश्रवणेऽयं प्रयोगशब्दो विधिर्मां यागे प्रवर्तयतीति प्रवर्तनाप्रतीतिवत् 'न कलञ्जं भक्षयेदि'तिनिषेधवाक्यश्रवणेऽयं निषेधो मां निवर्तयतीति निवर्तनाप्रतीतेः । उपसंहरति— **तस्मादिति** । 'न कलञ्जं भक्षयेदि'त्यत्र 'कलञ्जकर्मकभक्षणानुकूलपुरुषप्रवृत्तिजनकप्रवर्तनां प्रति लिङर्थप्रवर्तनाविरोधिनिवर्तना पुरुषनिष्ठा' इतिवाक्यार्थः । एवं 'ब्राह्मणो न हन्तव्यः' इत्यत्र 'ब्राह्मणकर्मकहननाऽनुकूलपुरुषप्रवृत्तिजनकप्रवर्तनां प्रति तव्यदर्थप्रवर्तनाविरोधिनिवर्तना पुरुषनिष्ठा' इतिवाक्यार्थः ॥ **यदा त्विति** । विधिनिषेधयोः सर्वत्राप्येवंप्रकारेण भिन्नार्थकत्वेऽपि प्रत्ययार्थस्य नञर्थेनाऽन्वये यदिकिञ्चिद्बाधकं भवति, तदा धात्वर्थस्यैव नञर्थेनाऽन्वयो भवति । **तच्च बाधकं द्विविधमिति** । उपक्रमो विकल्पसक्तिश्च । उपक्रमं बाधकमाह—**'तस्य व्रतमिति' उपक्रमः** । तस्य विद्यास्नातकस्य ब्रह्मचारिविशेषस्य व्रतं प्रजापतिदेवताकम् ( मनुः—४।३७ ) 'नेक्षेतोद्यन्तमादित्यं नाऽस्तं यन्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्' ( मनु० ४।३७ ) । 'न लंघयेद् वत्सतन्त्रीं न प्रधावेच्च वर्षति । न चोदके निरीक्षेत स्वं रूपमितिधारणा' ( ३८ ) । स्नातको द्विजः । व्रतानीमानि धारयेत्' ( १३ ) । इत्युपक्रम्य स्नातकव्रते स्नातकगृहस्थे ब्राह्मणे इमानि व्रतान्युक्तानि । तत्र धात्वर्थाऽन्वितनञर्थे विध्यर्थाऽन्वयेन तदनाचरणस्येष्टविशेषसाधनत्वमवगम्यते, विधितः प्रतीयमानायाः प्रवर्तनाया विरोधिनी निवर्तना यदि नञा प्रत्याय्येत तदैव निवर्त्यस्य निवर्तनाऽर्थत्वाऽवगमः । **तथा चाऽत्रेति** । 'नेक्षेतोद्यन्तमादित्यमि'त्यत्र पर्युदास एवाऽऽश्रीयते । सामान्यप्राप्तस्य विशेषाद् अन्यमात्रसंकोचार्थः । 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' । प्रत्ययाऽतिरिक्तेन नाम्ना धातुना च नञः सम्बन्धरूपः । विकल्पस्तु सामान्यप्राप्तस्य विशेषमात्रसंकोचार्थः । इत्यनयोर्भेदः । तथा च 'नेक्षेतोद्यन्तमादित्यमि'त्यस्य व्रतक्रमप्राप्तो निषेधोऽर्थः, तत्र प्रत्ययार्थस्य नञर्थेनाऽन्वये व्रतस्योपक्रमो बोधकः,

क्रम्यैतद्वाक्यपाठात् । तथा चाऽत्र पर्युदासाऽऽश्रयणम् । तथाहि—व्रतशब्दस्य कर्तव्यार्थे रूढत्वात्तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्तव्यत्वेन उपक्रमात् । किं तत्कर्तव्यमित्याकांक्षायां नेक्षेतोद्यन्तमित्यादिना कर्तव्याऽर्थ एव प्रतिपादनीयः । अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न

---

तत्र धात्वर्थस्यैवेक्षणस्य नञर्थेनाऽन्वयः, अनीक्षणमित्यन्वयः, प्रत्ययार्थः प्रवर्तना, तथा च—सूर्याऽनीक्षणसंकल्पं भावयेदित्यर्थः । **व्रतशब्दस्येति** । व्रतशब्दस्य कर्तव्यार्थे रूढत्वात् तस्य ब्राह्मणस्य व्रतं कर्तव्यम्,—ब्राह्मणस्य कर्तव्यम्—'उद्यदादित्याऽनीक्षणादिसंकल्पाऽनुष्ठानमर्थः । तस्य व्रतमित्युपक्रम्य 'नेक्षेतोद्यन्तमि'त्याम्नातत्वात् व्रतशब्दस्य कर्तव्यार्थे रूढत्वात् अत्र किञ्चिदनुष्ठेयं प्रतिभाति, तच्च पर्युदासाश्रयणे सति उपपद्यते । उपक्रमवाक्ये प्रतिज्ञातस्यैवाऽर्थस्याऽत्रापि वक्तव्यत्वात् । तत्रोपक्रमे स्नातकाऽनुष्ठेयव्रतानामेव प्रतिज्ञातत्वात् कानि तानि व्रतानीत्यपेक्षायां स्नातकव्रतप्रदर्शनाय अस्य वाक्यस्याऽवतारात् अत्र कर्तव्य एव कश्चिदर्थो वक्तव्यः, **सः कर्तव्यार्थ एव प्रतिपादनीयः** । कर्तव्यार्थस्याऽप्रतिपादनीयत्वे बाधकमाह—**अन्यथेति** । 'तस्य व्रतमि'ति पूर्ववाक्यम् 'नेक्षेतोद्यन्तमि'त्युत्तरवाक्यं च, तयोरेकवाक्यत्वं 'आदित्याऽनीक्षणसंकल्पाऽनुष्ठानमिति स्नातककर्तव्यम् इत्येवमेकवाक्यार्थत्वं च बाध्येत । तत्फलमाह—**तथा चेति** । 'नेक्षेतोद्यन्तमादित्यमि'त्यादौ कर्तव्यरूपाऽर्थस्य प्रतिपादनीयत्वे च नञर्थेन धात्वर्थाऽन्वयात् प्रत्ययार्थान्वयावकाशो न भवति । ननु नञर्थेन प्रत्ययार्थस्याऽन्वये को दोष इत्यत्राह—**कर्तव्याऽर्थाऽनवबोधादिति** । नञर्थेन प्रत्ययाऽर्थस्याऽन्वये कर्तव्याऽर्थाऽनवबोधापत्तिः । ननु प्रत्ययाऽन्वितस्य नञः कर्तव्यार्थाऽवबोधकत्वाऽनङ्गीकारे कोऽन्योऽर्थोऽवबोध्यते—इत्यत्राऽऽह—**विध्यर्थेति** । कर्तव्याऽर्थाऽनवबोधे तु तत्र वाक्ये विध्यर्थप्रवर्तनाया विरोधिनी या निवर्तना तस्या एव प्रत्ययाऽन्वितेन नञा बोधनात् । तथा सति तु **तस्याः** निरुक्तनिवर्तनायाः, कर्तव्यार्थत्वाऽभावात्, प्रवर्तनाया एव कर्तव्यार्थत्वात् । **तस्मादिति** । नञः प्रत्ययेनाऽन्वयाऽसम्भवे धातुना सम्बद्ध्येत, स च निषेधको न भवेत्, सति विधायकत्वे तन्निषेधप्राप्तेः, नामधातुभ्यां योगे तु तयोरविधायकत्वात् नञो न निषेधकत्वम्, अतो 'नेक्षेते'त्यत्र धात्वर्थेक्षणविरोधी कश्चनाऽर्थः धातुयोगितया प्रतिपाद्यते, स नाऽभावः, अविधेयत्वात्, अतः पर्युदासाऽऽश्रयणेन धात्वर्थेक्षणविरोधी कश्चन विधानार्थो नञा लक्षणया प्रतिपादनीयः, स च अनीक्षणसंकल्प एव ईक्षणविरोधी कर्तव्यार्थः अनुष्ठेयत्वेनाऽत्र विधीयते । **लक्षणयेति** । स्वसम-

स्यात् । तथा च नञर्थेन न प्रत्ययार्थाऽन्वयः कर्तव्यार्थाऽनवबोधात् । विध्यर्थप्रवर्तनाविरोधिनिवर्तनाया एव तादृशनञा बोधनात्, तस्याश्च कर्तव्यार्थत्वाऽभावात् । तस्मान्नेक्षेतेत्यत्र नञा धात्वर्थविरोध्यनीक्षण-

---

भिव्याहृतपदार्थाऽभावः नञः शक्यार्थः, शक्यसम्बन्धो लक्षणा, तथा च—स्वसम्बद्धयमानधात्वर्थाऽभावं शक्त्या प्रतिपादयन् नञ् तदभावसम्बन्धिनं तदर्थविरोधिनं लाक्षणिकमर्थं प्रतिपादयति, तदभाव—तद्विरोधिनोः समक्षणीयत्वसम्बन्धसम्भवात्, तेजोऽभावतमसोः समानदेशत्वसम्बन्ध इव सामानाधिकरण्यस्य व्याप्यव्यापकभावस्य वा सम्बन्धसम्भवात् । तथा च 'उद्यन्तम् अस्तंयन्तम् आदित्यं नेक्षिष्ये' इतिसंकल्पोऽनुष्ठेयत्वेन विधीयमानो नञा लक्षणया प्रतिपाद्यते । **तस्येति** । अनीक्षणसंकल्पस्य व्रतत्वसम्भवात् कर्तव्यत्वसम्भवात् । पर्युदासपक्षे वाक्यार्थमाह—'आदित्यविषयकाऽनीक्षणसंकल्पेन पापक्षयं भावयेदिति वाक्यार्थः ।' **तत्र भाव्याकांक्षायामिति** । भाव्यस्य फलस्याऽऽकांक्षायाम् 'एतावता हि एनसा वियुक्तो भवती'तिवाक्यशेषेण अवगतः पापक्षयो भाव्यत्वेन फलत्वेनाऽन्वेति अनीक्षणसंकल्पभावनायाम् । पूर्वप्रतिपाद्यस्योत्तरवाक्येन प्रतिपादनात् 'तस्य व्रतम्' 'नेक्षेतोद्यन्तमादित्यमि'त्यनयोः, स्नातकव्रतकर्तव्यस्य उद्यदादित्याऽनीक्षणसंकल्पस्य एकार्थकतया पूर्ववाक्यस्योत्तरवाक्येनैकवाक्यतोपपन्ना भवति ॥ **न चाऽत्रेति** । धात्वर्थेक्षणविरोधिनः पटाऽऽवरणनेत्रपिधानाद्या बहवः पदार्था अनुष्ठेयाः सन्ति, न केवलोऽनीक्षणसंकल्पःमात्रम्, तथापि कायिकवाचिकव्यापारविशेषाणामत्राऽप्रतीयमानत्वात् मानसव्यापारस्य चाऽप्रतिषेधात् संकल्प एव मानसव्यापारविशेषोऽत्र परिशिष्यते । पटपिधानादेः व्रतकर्तव्यत्वाऽभावेन कर्तव्यत्वेन विवक्षाऽसम्भवेन, सर्वक्रियाऽविनाभूतस्यैव धात्वर्थेक्षणविरोधिपदार्थान्तरस्य नेक्षेतेत्यादौ प्रकृते भावनाऽन्वययोग्यत्वात् । धात्वर्थेक्षणविरोध्यनीक्षणसंकल्पस्यैवाऽत्र भावनाऽन्वययोग्यतायाः सम्भवात् तस्य संकल्पस्य सर्वक्रियाऽविनाभूतत्वसम्भवात् । पटपिधानादेः पदार्थान्तरस्य सर्वक्रियाऽविनाभूतत्वाऽसम्भवात् । **द्वितीयमिति** । विकल्पप्रसक्तिः,—पर्युदासाश्रयकारिणी । प्रत्ययार्थस्य नञर्थेनाऽन्वये । विकल्पप्रसक्तिरूपस्य बाधकस्य निषेधविघटकतया पर्युदासाऽऽश्रयत्वमिति दर्शयितुमाह—**द्वितीयं 'यजतिष्वित्यादि** । 'यजतिषु ये यजामहं करोति नाऽनुयाजेषु' इति प्रयाजाख्येषु यागेषु मन्त्रस्योच्चारणमाम्नातम् । अनुयाजेषु यागेषु 'नाऽनुयाजेषु ये यजामहं करोती'ति तन्मन्त्रोच्चारणस्य नकारेण निषेधः कृतः, प्राप्तिपूर्वको निषेधः, नञर्थेऽभावे

सङ्कल्प एव लक्षणया प्रतिपाद्यते तस्य कर्तव्यत्वसम्भवात् । आदित्यविषयकाऽनीक्षणसङ्कल्पेन भावयेदिति वाक्यार्थः । तत्र भाव्याकांक्षायाम् 'एतावता हि एनसा वियुक्तो भवती'तिवाक्यशेषाऽवगतः पापक्षयो भाव्यतयाऽन्वेति, एवं च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव ।

---

प्रत्ययार्थस्य प्रवर्तनाया अन्वयः प्राप्तिः, यजतिषु 'ये यजामहे'इत्याद्युच्चारणप्राप्तिरस्ति, यजतिसामान्यात् अनुयाजेष्वपि अस्ति, अतस्तत्रापि' येयजामहे'इत्युच्चारणप्राप्तिरस्ति, प्राप्तिपूर्वको 'नाऽनुयाजेषु ये यजामहं करोती'तिनिषेधोऽस्ति, प्रयाजेषु 'ये यजामहं कुर्यात्' अनुयाजेषु 'ये यजामहं' न कुर्यात्'—**सचेति** । निषेधः । **प्राप्तस्यैव** स्यात् । **प्राप्तिश्चेति** । रागतः प्राप्त्यसम्भवात् शास्त्रादेव प्राप्तिर्वाच्या, शास्त्रप्राप्ते प्रतिषेधे विकल्पो भवति **न तु बाधः** । ननु यथा रागतो हननादौ प्रवृत्तं पुरुषं हननादिप्राप्तिमूलभूतरागस्य बाधेन ततो न हन्तव्य इति शास्त्रं हननं निवर्तयत् पुरुषं निवर्तयति, तथा 'यजतिषु ये यजामहं करोती'ति शास्त्रात् अनुयाजेष्वपि अनुष्ठानकाले यजतित्वाऽविशेषादेव प्राप्तस्य 'ये यजामह'इतिप्राप्तस्य मन्त्रस्योच्चारणे प्रवृत्तं पुरुषं तत्प्राप्तिमूलभूतस्य प्रदर्शितशास्त्रस्य । यजतिसामान्ये 'ये यजामह' मन्त्रप्रापकस्याऽनुयाजेषु बाधेन ततो 'नाऽनुयाजेषु ये यजामहं करोती'ति शास्त्रं निवर्तयत्येवेति शास्त्रप्राप्तस्य बाधः सम्भवेदिति चेन्न । प्राप्तिमूलरागस्य शास्त्रेण बाधो भवति यथा, तथा । **तन्मूलशास्त्रस्येति** । 'ये यजामह'इतिमन्त्रप्राप्तिमूलभूतशास्त्रस्य 'यजतिषु ये यजामहं करोती'त्येवंभूतशास्त्रस्य,' नाऽनुयाजेषु ये यजामहं करोती'त्येवंरूपशास्त्रान्तरेण बाधाऽयोगात् । दृष्टान्तस्तु रागप्राप्तहननादिबाधादिः विकलः । तत्र हननादिप्राप्तिमूलरागस्य भ्रान्तिनिमित्तकस्य शास्त्रेण बाधो भवति, अत्र तु मन्त्रप्राप्तिमूलशास्त्रस्य प्रमात्मकबोधकस्य शास्त्रान्तरेण बाधो न युक्तः, निषेधकशास्त्रस्य निषेध्यप्राप्तिसापेक्षत्वेन निषेध्यप्रापकस्याऽबाधकत्वात् ।

ननु'पदे जुहोती'तिपदाऽधिकरणकहोमविधायकविशेषशास्त्रेण 'आहवनीये जुहोती'त्याहवनीयादधिकरणकहोमविधायकस्य सामान्यशास्त्रस्य बाधः क्रियते, तथा 'नाऽनुयाजेष्वि'तिविशेषशास्त्रेण 'यजतिषु ये यजामहं करोती'तिसामान्यशास्त्रस्य **बाधः स्यादिति** चेन्न । शास्त्रयोर्हि बाध्यबाधकभावो **यत्र** परस्य निरपेक्षता, नहि **पदशास्त्रस्य** स्वार्थविधानार्थम् आहवनीयशास्त्राऽपेक्षाऽस्ति, निरपेक्षत्वात् । प्रकृते **निषेधशास्त्रस्य** तु निषेध्यप्रसक्त्यर्थं 'यजतिषु ये यजामहं करोती'तिविधेरस्त्यपेक्षा, अतो न निरपेक्षत्वम् ॥

**नचाऽत्र धात्वर्थविरोधिनः पदार्थान्तरस्याऽपि सम्भवात्कथमनीक्षण-सङ्कल्पस्यैव भावनाऽन्वय इतिवाच्यम् । तस्य कर्तव्यताऽभावेन प्रकृते भावनाऽन्वयाऽयोग्यत्वात् । द्वितीयम्—'यजतिषु' ये यजामहं करोति नाऽनुयाजेष्वित्यादावत्र विकल्पप्रसक्तौ च पर्युदासाऽऽश्रयणात् । तथाहि यदि अत्र वाक्ये नञर्थे प्रत्ययाऽर्थाऽन्वयः स्यात्तदा 'अनुयाजेषु 'ये-**

---

शास्त्रयोरेकविषये बाध्यबाधकभावे परस्परनिरपेक्षत्वं हेतुः, 'पदे जुहोति' 'मार्गे जुहोती'ति**पदशास्त्रस्य** पदाऽधिकरणकहोमरूपस्वार्थविधानार्थम्' आहवनीये जुहोती'त्याहवनीयशास्त्रनिरपेक्षत्वात् अनुयाजेषु 'ये यजामह'मन्त्रप्रतिषेधकशास्त्रस्य तत्र प्रतिषेध्यमन्त्रप्रसक्त्यर्थं यजतिसामान्ये ताहृशमन्त्रविधायकसामान्यशास्त्रसापेक्षत्वाच्चेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथा च निषेधः शास्त्रस्य विशेषविषयत्वेन प्रबलत्वमिव विधिशास्त्रस्य उपजीव्यत्वेन प्रबलत्वमिति प्रतिषेधशास्त्रेण विधिशास्त्रस्य नाऽत्यन्तबाधः, किन्तु विहितप्रतिषिद्धत्वात् विकल्पः स्यात् । विहितस्याऽपि तेन **प्रतिषेधे विकल्प एव** स्यादिति । अथ भवतु विकल्प इत्यत्राऽऽह—**स च न युक्त इति** । विकल्पे हि शास्त्रस्य 'नाऽनुयाजेषु' इत्यस्य **पाक्षिकम्** उच्चारणपक्षसमयेऽप्रामाण्यं स्यात् । 'अनुयाजेषु—'ये यजामहमि'त्यस्याऽनुष्ठाने 'नाऽनुयाजेषु' इतिशास्त्रस्य निषेधकस्याऽप्रामाण्यं स्यात्, अनुष्ठानेन निषेधस्याऽप्रामाणिकताकरणात् । **नहि……प्रामाण्यं सम्भवति** । यथा व्रीहिभि-'र्यजेते'तियागानुष्ठानपक्षे **यवशास्त्रस्य** 'यवैर्यजेते'त्यस्य न प्रामाण्यं तथा यजतिषु 'ये यजामहं करोती'तिमन्त्रस्य यजतित्वेन प्राप्तेषु 'अनुयाजेषु' 'ये-यजामहं करोती'त्यनुष्ठानसमये 'नाऽनुयाजेष्वि'त्यस्य निषेधवाक्यस्य नहि प्रामाण्यं सम्भवति, अनुष्ठानेन तस्याऽप्रामाण्यकरणात् । **द्विरदृष्टेति** । विकल्पपक्षे द्विरदृष्टकल्पनाप्रसंगोऽपि स्यात्, विधिशास्त्रात् 'अनुयाजेषु' 'ये-यजामह' इतिमन्त्रस्य करणे कश्चनोपकारो भवती'ति गम्यते, एवं प्रतिषेधशास्त्रादपि तत्र 'ये यजामह' इत्यकरणात् कश्चन उपकारो भवति, तच्चोपकारद्वयम् अदृष्टरूपमिति **द्विरदृष्टकल्पना** भवति । विधिः पुरुषार्थः, निषेधोऽपि पुरुषार्थः, द्वयोरपि अदृष्टपुरुषार्थसम्पादकत्वात् । अतः तस्मात् 'नानुयाजेषु' प्रतिषेधस्वीकारे विकल्पादिदोषापत्तेः नात्र प्रतिषेधः स्वीक्रियते किन्तु नञोऽनुयाजेन नाम्नाऽन्वयं सम्बन्धमाश्रित्य पर्युदासस्याऽऽश्रयणं, **न प्रतिषेधस्याऽऽश्रयणमिति । इत्थं चेति** । अनेन पूर्वोक्तप्रकारेण । पर्युदासस्य तात्पर्यविषयत्वेन करोतेरवतारितस्य नञोऽनुयाजशब्देन सम्बन्धसिद्धौ च,

यजामह' इतिमन्त्रस्य प्रतिषेधः स्यात्, अनुयाजेषु ये यजामहं न कुर्या-दिति। स च प्राप्तिपूर्वक एव, प्राप्तस्यैव प्रतिषेधात्। प्राप्तिश्च 'यजतिषु ये यजामहं करोती'तिशास्त्रादेव वाच्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव न तु बाधः। प्राप्तिमूलरागस्येव तन्मूलशास्त्रस्य शास्त्रा-न्तरेण बाधाऽयोगात्। न च 'पदे जुहोती'ति विशेषशास्त्रेण 'आहव-नीये जुहोती'ति शास्त्रस्येव 'नाऽनुयाजेष्वि'त्यनेन 'यजतिषु ये यजामहं करोती'त्यस्य बाधः स्यादिति वाच्यम्। परस्परनिरपेक्षयोरेव शास्त्रयो-र्बाध्यबाधकभावात्। परशास्त्रस्य हि स्वार्थविधानार्थमाहवनीयशास्त्रान-पेक्षणान्निरपेक्षत्वम्। प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं 'यज-तिषु येयजामहमि'त्यस्याऽपेक्षणान्न निरपेक्षत्वम्। तस्माच्छास्त्रविहि-तस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव। स च न युक्तः। विकल्पे शास्त्रस्य पाक्षिकाऽप्रामाण्याऽऽपातात्। न ह्यनुयाजेषु 'ये यजामह'मित्य-स्याऽनुष्ठाने 'नानुयाजेष्वि'त्यस्य प्रामाण्यं सम्भवति, व्रीहियागाऽनु-ष्ठाने यवशास्त्रस्येव। द्विरदृष्टकल्पना च स्यात्, विधिप्रतिषेधयोरपि पुरुषार्थत्वात्, अतो नाऽत्र प्रतिषेधस्याऽऽश्रयणम्, किन्तु नञोऽनु-याजसम्बन्धमाश्रित्य पर्युदासस्यैव। इत्थं "चाऽनुयाजव्यतिरिक्तेषु

---

अनुयाजव्यतिरिक्तेऽनुयाजत्वाऽभावस्य सत्त्वाच्छक्यसम्बन्धसम्भवेन लक्षणोप-पत्तिरिति। अनुयाजव्यतिरिक्तयजतिव्याप्त'ये यजामह'मन्त्रकरणमिति वा-क्यार्थबोधः। अनुयाजव्यतिरिक्ते नञो लक्षणा, अनुयाजपदं तात्पर्यग्राहकम्, एवं च प्रतिषेधपक्षं परित्यज्य पर्युदासपक्षस्वीकारे। न विकल्पः—शास्त्रा-त्प्राप्तस्य शास्त्रान्तरेण निषेध इति विकल्पो नास्ति। अत्र च वाक्ये इति। 'यजतिषु ये यजामहं करोतीति यजिसामान्ये वाक्यं 'ये यजामह'विधायक-शास्त्रं प्राप्तमेव, यत्प्राप्तं तन्न विधीयते। यजतिषु येयजामहमि'त्यनेनैव 'ये यजामह' इत्यस्य प्राप्तत्वात्। 'ये यजामह'मन्त्रमनूद्य 'नाऽनुयाजेषु ये-यजामहं करोती'त्यत्र 'ये यजामह'मन्त्रस्य अनुयाजव्यतिरिक्तविषयता विधीयते, तथा च 'यजतिषु ये यजामहमि'त्यादिसामान्यशास्त्रप्राप्तस्य 'ये-यजामह' इतिशास्त्रस्य अनुवादेन 'ये यजामह' इतिशास्त्रस्य अनुयाजव्यति-रिक्तयागेषु 'ये यजामह' इतिकर्तव्यताविषयता विधीयते, यद् 'यजतिषु

यजतिषु 'ये यजामह' इतिमन्त्रं कुर्यादि''ति वाक्यार्थबोधः। नञोऽनु-याजव्यतिरिक्ते लाक्षणिकत्वात्। एवं च न विकल्पः। अत्र च वाक्ये 'ये यजामह' इति न विधीयते, 'यजतिषु ये यजामह'मित्यनेनैव प्राप्तत्वात्। किन्तु सामान्यशास्त्रप्राप्त--'ये यजामह'इत्यनुवादेन तस्याऽनु-याजव्यतिरिक्तविषयकत्वं विधीयते, यत् 'यजतिषु ये यजामहं करोति तत् अनुयाजव्यतिरिक्तेषु' इति ॥

नन्वेवं सामान्यशास्त्रप्राप्तस्य विशेषे संकोचनरूपात् उपसंहारात् पर्युदासस्य भेदो न स्यादिति चेन्न। उपसंहारो हि तन्मात्रसंकोचार्थः। यथा 'पुरोडाशं चतुर्धा करोती'ति सामान्यप्राप्तचतुर्धाकरणम् 'आग्नेयं चतुर्धा करोती'तिविशेषादाग्नेयपुरोडाशमात्रे संकोच्यते। पर्युदासस्तु तदन्यमात्रसंकोचार्थ इति ततो भेदात्।

---

ये यजामहं करोति' इत्येतत्करणम् अनुयाजव्यतिरिक्तेष्वेव, अतो नाऽत्र विकल्पप्रसंगः, लक्षणया अनुयाजव्यतिरिक्तविषयसमर्पणात् नहि 'नानुयाजेष्वि'त्यादिवाक्यस्याऽप्रामाण्यमपि। तस्मात्पर्युदासाऽऽश्रयणे बाधकाऽभावात् पर्युदास एव स्वीकर्तव्यः॥

ननु पर्युदासाऽऽश्रये 'यजतिषु ये यजामहं करोती'ति सामान्यशास्त्रेण यागमात्रे प्राप्तस्य 'ये यजामह'मन्त्रस्य 'नाऽनुयाजेषु ये यजामहं करोती'ति-विशेषशास्त्रेण अनुयाजव्यतिरिक्तविषये यागविशेषे संकोचनात् पर्युदासस्य उपसंहारात् अभेदापत्तिः, सामान्ये प्राप्तस्य विशेषे संकोचस्य उपसंहार-पदार्थत्वात्। **इति चेन्नेति**। **उपसंहारः**—तन्मात्रसंकोचार्थः। **पर्युदासः**—तदन्यमात्रसंकोचार्थः। इत्येवंभेदात्॥ **यथेति**। 'पुरोडाशं चतुर्धा करोती'-त्यनेन पुरोडाशसामान्ये प्राप्तस्य चतुर्धाकरणस्य 'आग्नेयं चतुर्धा करोती'-त्यनेन तस्यैव मात्रस्य पुरोडाशविशेषमात्रे संकोचः क्रियते, सोऽयमुपसंहारः। प्रकृते त्वेवं नास्ति, 'यजतिषु ये यजामहं करोती'त्यादिना सामान्यशास्त्रे प्राप्तस्य 'ये यजामह'इतिमन्त्रस्य 'नाऽनुयाजेष्वि'त्यादिना यजतिविशेषाद् अनुयाजरूपात् अन्यमात्रे यजतिविशेषे संकोच इत्युपसंहारात् तदन्यमात्र-संकोचार्थत्वात् **भेदात्**—पर्युदासस्य उपसंहाराद्भिन्नत्वात्। **तन्मात्रसंकोचार्थः**—सामान्यप्राप्तस्य विशेषमात्रसंकोचार्थः। **तदन्यमात्रसंकोचार्थः**—सामान्यप्राप्तस्य विशेषात् अन्यमात्रसंकोचार्थः। यद्वा—उपसंहारो नाम

कुत्रचिद्विकल्पप्रसक्तावप्यनन्यगत्या प्रतिषेधाऽऽश्रयणम् । यथा 'नाऽतिरात्रे षोडशिनं गृह्णाती'त्यादौ । अत्र हि 'अतिरात्रे षोडशिनं गृह्णाती'तिशास्त्रप्राप्तषोडशिग्रहणस्य निषेधाद्विकल्पप्रसक्तावपि न पर्युदासाऽऽश्रयणम् , असम्भवात् , तथाहि—यदि अत्र षोडशिपदार्थेन नञर्थाऽन्वयस्तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात् स च न सम्भवति, अतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधि-

---

सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो विधेर्व्यापारविशेषः । पर्युदासस्तु 'यत्रोत्तरपदेन नञ्'—प्रत्ययाऽतिरिक्तेन नाम्ना धातुना च नञः सम्बन्धरूपः । अनयोः स्वरूपत एव स्पष्टभेदः । व्यापारसम्बन्धयोः स्पष्टभेदात् । किञ्च—यत्र पर्युदासाश्रयाऽशक्यता तत्र विकल्पप्रसक्तावपि निषेधाश्रयणमेवेत्याह—**कुत्रचिदिति** । 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाती'-त्यादौ । सोमयागे षोडशीसंस्था तृतीया, सा च अतिरात्रो यागः, षोडशि-नामकपात्रविशेषो ग्रहाभिधः । ज्योतिष्टोमस्य अतिरात्रसंस्थाविशेषे (१०।८। ३।६ ) 'शिष्ट्वा तु प्रतिषेधः स्यात्' इत्यत्र षोडशिग्रहनिषेधात् षोडशिग्रहणं षोडशिग्रहणनिषेधश्चेत्युभयं स्वस्वसमये प्रमाणमिति प्रधानयोर्विरोधात् **विकल्पप्रसक्तिः**—अतिरात्रे षोडशिनं गृह्णातीतिशास्त्रप्राप्तं षोडशिग्रहणम् अतिरात्रे 'नाऽतिरात्रे षोडशिनं गृह्णातीतिप्रतिषिध्यते, इतिविहितस्य प्रति-षेधे विकल्पप्रसक्तिः—तद्ग्रहणं तदग्रहणं वेति । तथापि पर्युदासो नाऽश्रीयते, पर्युदासः—तद्ग्रहणम् अतिरात्रे षोडशिव्यतिरिक्तग्रहणमिति पर्युदासो नाश्रीयते, अशक्यत्वात् । अशक्तिर्हि—नञः षोडशिपदेनाऽन्वयः स्वीक्रियेत तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णतीतिवाक्यार्थः स्यात् , किन्तु तथाविध-वाक्यार्थे 'अतिरात्रे षोडशिनं गृह्णाती'त्येतत्प्रत्यक्षविधिविरोधोऽस्ति, अत एवाऽतिरात्रपदेन नैव नञः सम्बन्धः, प्रत्यक्षविधिविरोधात् , एवंविधया पर्युदासस्याऽनुपपत्तेः, निषेध एव स्वीक्रियते, अतिरात्रे षोडशिग्रहणनिषेधः स्वीक्रियते, तर्हि षोडशिग्रहणं बाधितं स्यात् , अतोऽबाधार्थं विकल्पोऽपि स्वीक्रियते, तथाविधयाऽनन्यगत्या प्रमाण्यरक्षणात् । **असम्भवादित्यसम्भव-मुपपादयति—यद्यत्रेति** । षोडशिव्यतिरिक्तग्रहणमिति वाक्यार्थः स्यात् ॥ **स च न सम्भवति** । षोडशिग्रहणवाक्यार्थेन प्रत्यक्षविरोधात् । **यदि चेति** । अतिरात्रेण नञोऽन्वये अतिरात्रे तस्मिन् षोडशिग्रहणं स्यात् , तदपि न सम्भवति प्रत्यक्षषोडशिग्रहणविधिना विरोधात् । अतोऽनन्यगत्या प्रति-षेधादन्यस्याऽसम्भवेन प्रतिषेधः स्वीक्रियते । विकल्पप्रसंगस्त्विष्टः । यत्र

विरोधात् । यदि चाऽतिरात्रेण पदार्थेनाऽन्वयस्तदाऽतिरात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्सोऽपि न सम्भवति तद्विधिविरोधात् । अतोऽत्राऽनन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः । न च विकल्पप्रसक्तिः, तस्याऽप्यपेक्षणीयत्वात् ॥ इयाँस्तु विशेषो यत् विकल्पादेकप्रतिषेधेऽपि प्रतिषिध्यमानस्य नाऽनर्थहेतुत्वम् , विधिनिषेधोभयस्याऽपि क्रत्वर्थत्वात् । यत्र तु न विकल्पः, प्राप्तिश्च रागत एव, प्रतिषेधश्च पुरुषार्थः, तत्र प्रतिषिध्यमानस्याऽनर्थहेतुत्वम् , यथा

---

'तस्य व्रतमि'तिवत् 'तस्य ग्रहणमि'त्युपक्रमो नास्ति विकल्पाऽप्रसक्तिश्चाऽस्ति तत्र प्रतिषेधो भवति यथा—'न कलञ्जं भक्षयेदि'त्यत्र । यत्र तु विकल्पप्रसंगेऽपि पर्युदासो नाऽऽश्रयितुं शक्यते तत्र प्रतिषेध एव स्वीक्रियते यथा 'नातिरात्रे षोडशिनं गृह्णाती'ति । यत्र विकल्पाऽऽपादकः प्रतिषेधस्तत्र प्रतिषिध्यमानस्य नाऽनर्थहेतुत्वम् , उभयोरपि विधिप्रतिषेधयोः क्रत्वर्थत्वात् । यत्र तु न विकल्पः प्रसज्यते, प्राप्तिश्च रागतः, प्रतिषेधश्च पुरुषार्थः, तत्र निषिध्यमानस्याऽनर्थहेतुत्वम् , यथा कलञ्जभक्षणस्येति । **न चेति** । उभयपक्षस्य प्राप्तस्य प्रतिषेधात् विकल्पप्रसंगेऽपि विकल्पमनादृत्य प्रतिषेधस्याऽ**पेक्षणीयत्वात्**—आश्रयणीयत्वात् । प्रत्यक्षग्रहणविधिव्यतिरिक्तग्रहणविध्योर्विरोधादेव विकल्पाऽप्रसंगात् पर्युदासाऽऽश्रयात् प्रतिषेध एव लब्धस्थानो भवतीति ॥

ननु प्रतिषिध्यमानस्य षोडशिग्रहणस्याऽनर्थहेतुत्वं कलञ्जभक्षणवत् स्यात् अर्थत्वबाधापत्तिश्च स्यादित्यत आह—**इयांस्तु विशेष इति** । इयान् तु—अग्रिमविषयेष्वंगुलिनिर्देशः । विशेष इति—आशंकितार्थोऽबाधितार्थश्चेति । **यदिति** । सोपपत्तिकनिदर्शनम् । यत्र विकल्पस्तत्रैकस्य प्रतिषेधः, प्रतिषिध्यमानं नाऽनर्थहेतुः, विधेरिव निषेधस्याऽपि क्रत्वर्थत्वात् , विधिनिषेधोभयमपि अर्थवत् । षोडशिग्रहणं विधिः, षोडशिग्रहणं न—इतिनिषेधः, उभयम् अतिरात्रयागे अर्थवत् । विध्यनुष्ठानेऽपूर्वलाभः, निषिद्धाऽननुष्ठानेऽदुरितलाभः, इत्युभयमर्थवत् । शास्त्रेण प्राप्तिः शास्त्रेण च निषेधः, उभयं क्रत्वर्थम् । रागेण प्राप्तिः, शास्त्रेण निषेधः, तत्र रागप्राप्तिरनर्थकारिणी, शास्त्रकृन्निषेध एवाऽर्थकृत् , अतः उभयं नाऽर्थकृत् । ऋतौ प्रवर्तमाने स्वस्त्र्युपगमनं निषिद्धम् , तत्र रागप्राप्तं निषिध्यते, निषिद्धे कृतेऽनर्थः, अपुरुषार्थः अनिष्टाऽर्थः, इत्येवं **विशेषः**—निषिध्यमानस्य क्वचित्पुरुषार्थत्वं

'न कलञ्जं भक्षयेदि'त्यादौ कलञ्जभक्षणादेः, तत्र भक्षणनिषेधस्यैव पुरुषार्थत्वात् , न च 'दीक्षितो न ददाति न जुहोती'त्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधात् विकल्पाऽऽपत्तिरिति वाच्यम् । स्वतः पुरुषार्थभूतदानहोमादीनां निषेधस्य पुरुषार्थत्वाऽभावेऽपि निषिध्यमानस्याऽनर्थहेतुत्वात् , यथा क्रतौ स्त्रीगमनादेः, तन्निषेधस्य क्रत्वर्थत्वेन तस्य क्रतुवैगुण्यसम्पादकत्वात् ।

---

शास्त्रविषये सति । क्वचिदपुरुषार्थत्वं रागविषये सति । अतः शास्त्रप्रतिषिद्धे षोडशिग्रहाऽग्रहणात्मकेऽर्थवत्त्वम् । रागप्राप्तस्याऽपि क्रत्वर्थत्वेन प्रतिषेधेऽपि तस्मिन्ननुष्ठिते वैगुण्यम् अनर्थोपपादकम् , रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे तस्मिन्ननुष्ठितेऽनर्थहेतुत्वम् । शास्त्रप्राप्तस्य क्रत्वर्थत्वेन पुरुषार्थत्वेन वा प्रतिषेधे प्रतिषेधस्वीकरणं नाऽनर्थहेतुः, अर्थत्वात् , उभयोरप्यर्थत्वात् । एवं विधीनामिव शास्त्रीयनिषेधानामपि पुरुषार्थाऽनुबन्धित्वं, सर्वस्याऽपि वेदस्य पुरुषार्थानुबन्धित्वम् । **यत्र त्विति ।** 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न हन्तव्य' इत्यादौ कलञ्जभक्षणस्यैव ब्राह्मणाऽहननस्यैव पुरुषार्थत्वम् , न तु तद्भक्षणहननयोः पुरुषार्थत्वम् , अतो द्वयोरेकस्याऽप्रामाण्यात् न विकल्पः, रागप्राप्तत्वान्न शास्त्रविधिश्च, तत्प्रतिषेधश्च पुरुषार्थोऽस्ति, तथाविधे लक्ष्ये **प्रतिषिध्यमानस्य** अनर्थहेतुत्वम् , प्रतिषिद्धं चेत् आचर्य्यते तदाऽनर्थो दुरितं स्यात् 'कलञ्जादिभक्षणं दुरितोत्पादकं 'न कलञ्जं भक्षयेत्' 'न लशुनं भक्षयेत्' 'न गृञ्जनं भक्षयेत्' इति । **अत्र भक्षणनिषेधस्यैव** पुरुषार्थत्वात् ।। यत्र षोडशिग्रहणविधितद्ग्रहणप्रतिषेधयोरुभयोरपि क्रत्वर्थत्वम्, तत्र प्रतिषिध्यमानस्य नाऽनर्थहेतुत्वम् , यत्र कलञ्जभक्षणादिप्रतिषेधस्यैव पुरुषार्थत्वं न तु तदनुष्ठानस्य, इत्यत्र प्रतिषिध्यमानस्य कलञ्जभक्षणब्राह्मणहननादेस्तु अनर्थहेतुत्वमेवेति ।।

अथ ज्योतिष्टोमे श्रूयते—'दीक्षितो न ददाति, न जुहोति, न पचती'ति । तत्र दानादिः पुरुषार्थः, होमादिः क्रत्वर्थः; तत्सर्वमुपदिष्टम् अतिदिष्टं च सर्वं प्रतिषिध्यते, न ददातीति सामान्यवचनेन निषेधात् ।। अथ—'अग्निहोत्रदानम् उपविष्टः सन् दद्यात्'इत्यत्राऽपि प्रतिषेधप्राप्तावुपदेशो व्यर्थः स्यात्, 'ततोऽतिदिष्टं' 'पुमर्थं' चेत्युभयमेव प्रतिषिध्यते, उपदिष्टं दानादिकं त्वनुष्ठेयमिति ।। अथ नित्याऽग्निहोत्रदानादिकं पुरुषार्थतया प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्ठोमकाले च प्राप्तं, तथा यदतिदिष्टं दानादि, तयोर्मध्ये उपदिष्टं निषेधस्य सन्निहितमिति, अतः पुमर्थस्यैव निषेधः, न त्वतिदिष्टदाना-

प्राशस्त्यनिन्दाऽन्यतरपरं वाक्यम्—अर्थवादः। तस्य च लक्षणया प्रयोजनवदर्थपर्यवसानम्। तथाहि—अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाऽभावाद् विधेयनिषेध्ययोः प्राशस्त्यनिन्दितत्वे लक्षणया

---

देर्निषेधः, अतिदिष्टदानस्य तु विधिः, पुमर्थस्य निषेधः, विधिनिषेधयोरेकविषयकत्वाऽभावात् भिन्नविषयत्वात् न विकल्पप्रसंगः, क्रत्वर्थो निषेधः, क्रतुकाले तदनुष्ठानं वारयति, पुरुषार्थो विधिस्तु कालान्तरे तदनुष्ठापयति, तस्मात्पुमर्थस्य निषेध इति। यदि प्रतिषेधपक्षे वाक्यभेद आपद्येत, तर्हि पुमर्थदानादिव्यतिरिक्तं क्रतुकालेऽनुष्ठेयम् इतिपर्युदासोऽपि प्राप्येत, तदा पर्युदासस्वीकारः, एतत्सर्वमभिप्रेत्य शंकते—**न च……वाच्यमिति**। दीक्षितस्य दानहोमादिनिषेधः क्रत्वर्थत्वमात्रसाधनपरकः। ज्योतिष्टोमे श्रूयते—'दीक्षितो न ददाति न जुहोति न पचती'ति, तत्र यद् दानादिकं पुरुषार्थं, यच्च क्रत्वर्थं तत्राप्युपदिष्टम् अतिदिष्टं च, तत्सर्वं प्रतिषिध्यते 'न ददाती'ति सामान्यवचनात्। इत्येकः पक्षः॥ उपदिष्टस्याऽपि प्रतिषेधे सति उपदेशो व्यर्थः स्यादिति ततोऽतिदिष्टं, पुरुषार्थं च, इत्युभयमेव प्रतिषिध्यते, क्रत्वर्थत्वेन उपदिष्टं दानादिकम् अनुष्ठेयम्। इतिमध्यमः पक्षः॥ नित्याऽग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तं, यच्चातिदिष्टं दानादिकं, तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्य उपदिष्टमेव सन्निहितमिति पुमर्थस्यैवाऽत्र निषेधः। न च नित्याऽग्निहोत्रहवनादौ विधिनिषेधयोः प्रवृत्त्या विकल्पः शंक्यः, भिन्नविषयत्वात्, क्रत्वर्थो निषेधः क्रतुकाले तदनुष्ठानं निवारयति। पुरुषार्थस्तु विधिः कालान्तरे तदनुष्ठापयति, तस्मात् पुमर्थस्य निषेधः, यदि प्रतिषेधपक्षे वाक्यभेदः शंक्येत, तर्हि पुमर्थदानादिव्यतिरिक्तं क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु॥ सोमयागे प्रथमदिनकृत्येऽध्वर्युर्यजमानं दीक्षितं देवेभ्यो मनुष्येभ्यश्चाऽऽवेदयेत्—'अदीक्षिष्ट अयम् यजमानः सपत्नीकः, स वाङ्नियमयेत् पयः पिबेत् दधि पिबेत् उदुम्बरफलानि भ्रष्टयवान् सक्तूनोदनं वा भुञ्जीत, द्रव्याणि गृह्णीयाज्जागरणं कुर्यात्, सत्यां संस्कृतां वाचं वदेत्, सुत्यादिने दक्षिणादानात् पूर्वं यावत् न कृष्णविषाणं विसृजेत्, न दन्तान् दर्शयेत्, नोच्चैर्हसेत्, नाऽनृतं वदेत्, न मांसमश्नीयात् **न स्त्रियमुपेयात्**। न खट्वादौ शयीत, न सन्ध्ययोः प्राग्वंशाद्बहिर्गच्छेत्, यावद्दीक्षम् **अग्निहोत्रदर्शपूर्णमासादीनि** श्रौतकर्माण्यपि **नाऽनुतिष्ठेत्** 'न जुहुयात्' **'नाऽन्यस्मै किञ्चिद् दद्यात्**, दीक्षाव्यञ्जकानि कृष्णाऽजिनादीनि सर्वदा धारयेत्। एतावत् व्रतमिति॥ ततः स्वतःपुरुषार्थभूतेत्यादियोजना—

प्रतिपादयति। स्वार्थमात्रपरत्वे आनर्थक्यप्रसंगात्। आम्नायस्य हि क्रियार्थत्वात्। न चेष्टापत्तिः। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिना सकलवेदाऽध्ययनं कर्तव्यमिति बोधयता सर्ववेदस्य प्रयोजनवदर्थपर्यवसायित्वं सूचयता उपात्तत्वेनाऽऽनर्थक्याऽनुपपत्तेः॥ स द्विविधः, विधिशेषो निषेधशेषश्चेति। तत्र वायव्यं श्वेतमालभेत भूतिकामः'—इत्यादिविधिविशेषस्य 'वायुर्वै क्षेपिष्ठा देवता'—इत्यादेर्विधेयार्थप्राशस्त्यबोधकतयाऽर्थवत्त्वम्। 'बर्हिषि रजतं न देयमि'त्यादि-

---

स्वत एव क्रत्वंगत्वोपाधिमन्तरेण केवलस्वरूपत एव, पुमर्थभूतानां दानहोमादीनां निषेधस्य पुरुषार्थत्वाऽभावेऽपि क्रत्वर्थत्वसम्भवात् निषिध्यमानस्य दानादेः क्रतुवैगुण्यसम्पादकत्वात् अनर्थहेतुत्वं स्वस्त्रीसंगवत्, तेषामनुष्ठानस्य स्वतः पुरुषार्थत्वेऽपि क्रत्वनुष्ठानकाले अपुरुषार्थत्वात् तत्र तेषामनुष्ठानस्य भवत्यनर्थहेतुत्वमिति। क्रतौ **तस्य**—स्वस्त्रीगमनादेः। क्रतौ स्वस्त्रीगमनादेः कलञ्जभक्षणादिवत् अनर्थरूपनरकादिदुःखाऽहेतुत्वेऽपि क्रतुवैगुण्यसम्पादकत्वेनाऽनर्थहेतुत्वसम्भवात् भवत्यत्राऽपि निषिध्यमानस्याऽनर्थहेतुत्वम्। तस्मान्निषेधवाक्यानाम् अनर्थहेतुक्रियानिवृत्तिजनकत्वेनैव पुरुषार्थाऽनुबन्धित्वमिति॥

सर्वाऽर्थवादात्मकवेदभागस्य लक्षणमाह—**प्राशस्त्येत्यादि**। प्रशंसा सुश्लोक्यम्, निन्दा कुकथनम्, तदन्यतरपरं वाक्यम् अर्थवादः, अन्यमर्थं वदतीति। लक्षणया प्राशस्त्यनिन्दनाऽन्यतरपरत्वेन, **तस्य**—अर्थवादस्य, शक्यार्थसम्बन्धिबोधकतया, प्रयोजनवति सफलेऽर्थे, पर्यवसानं विश्रान्तिं प्राप्नोति। **तथाहीति**। अर्थवादवाक्यं शब्दः, स्वार्थे—स्वशक्यार्थस्य प्रतिपादने बोधकत्वे, प्रयोजनरहितत्वात्, विधेयार्थस्य लक्षणया प्राशस्त्यं निषेध्यार्थस्य लक्षणया निन्दितत्वं कुत्सितत्वं **प्रतिपादयति**—बोधयति॥ **स्वार्थमात्रपरत्वे इति**। अर्थवादवाक्यानां स्वार्थमात्रे 'वायुर्वै क्षेपिष्ठा देवता' इतिवाक्यात् क्षिप्रगामिवायुदेवतारूपाऽर्थस्य स्वार्थस्य शक्याद्यर्थस्य प्रतीयमानत्वे कीदृशस्याऽऽनर्थक्यस्याऽप्रयोजनवदर्थस्य प्रसंग आपत्तिर्विगुणतादिर्वाऽनिष्टापत्तिर्भवतीति जिज्ञासितप्रसंगे हेतुमाह—**आम्नायस्येति**। आम्नायस्य, आमनन्ति धर्माऽधर्मावित्याम्नायः, श्रुत्यादिरूपवेदस्य, वेदसम्प्रदायस्य, समस्तवेदस्य क्रियाप्रतिपादकत्वस्वीकारेण सिद्धार्थप्रतिपादकस्य, स्वार्थमात्रप्रदिपादकत्वे सार्थक्यमुपपद्यते॥ **'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्माद-**

निषेधशेषस्य। सोऽरोदीत् यत् अरोदीत् तत् रुद्रस्य रुद्रत्वमि'त्यादेर्निषेध्यस्य निन्दितत्वबोधकतयाऽर्थवत्त्वम्।

न च प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेन नाऽर्थवादस्याऽर्थवत्त्वमिति वाच्यम्। आलस्यादिवशात् अप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात्॥

नित्यमुच्यते' (पूर्वपक्षः १।२।१) काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते—'वायव्यं श्वेतमालभेत भूतिकामः' इतिविधिः। 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्यर्थवादः। तत्र विधिवाक्यगता वायव्यादिशब्दा अर्थवादशब्दनिरपेक्षा एव विशिष्टमर्थं विदधति। अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थमन्वाचक्षते 'क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागप्रदाय ऐश्वर्यं प्रयच्छति, इतिवृत्तान्तमात्रं न तु अनुष्ठेयं किञ्चित्। अत एकवाक्यत्वाऽभावान्नास्त्यर्थवादस्य धर्मे प्रामाण्यम्॥

अत्राऽऽह—यथा विध्यादीनामध्ययनविध्युपात्तानां नाऽनर्थक्यम्, एवमर्थवादानामपि तत्तद्विध्युपात्तत्वेनाऽऽनर्थक्याऽनुपपत्तिः, स्वार्थप्रतिपादने प्रयोजनाऽभावात् लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम्॥

किञ्च—मा भूत्पदैकवाक्यता, वाक्यैकवाक्यता तु विद्यते, विधिवाक्यं तावत् पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते, अर्थवादवाक्यं च फलवदर्थाऽवबोधपर्यवसिताऽध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते। तत्र पुरुषार्थपर्यवसितविध्यपेक्षितं प्राशस्त्यं लक्षणावृत्त्या समर्पयत् अर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते—'यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता, ततः प्रशस्तमिमं वायव्यं पशुमालभेत' इतिवाक्ययोरन्वयः, तस्मादर्थवादा धर्मे प्रमाणम्॥ यद्वा—फलप्रददेवतातोषकत्वोपन्यासमुखेन कर्मप्राशस्त्यमुपलक्ष्यते, तथा सति प्रशस्तं कर्माऽनुष्ठेयम्, अस्मिन्नर्थे सार्थवादस्य विधेः पर्यवसानादेकवाक्यता लभ्यते, तस्माद्विधिः प्रमाणमिति।

शाबरभाष्यम्—''सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वम्' 'प्रजापतिरात्मनो वपामुदखिदत्' 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि, तानि किं कञ्चिद्धर्मं प्रमिमते उत नेति? भवति विचारणा। तदभिधीयते। क्रिया कथमनुष्ठे-

स पुनस्त्रेधा। तदुक्तम्--'विरोधे गुणवादः स्यादनुवादोऽव-धारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' इति॥ अस्याऽर्थः--प्रमाणान्तरविरोधे सति अर्थवादो गुणवादः, यथा 'आदित्यो यूप'

---

येति तां वदितुं समाम्नातारो वाक्यानि समामनन्ति, तद्यानि वाक्यानि क्रियां नाऽवगमयन्ति क्रियासम्बद्धं वा किञ्चित्। एवमेव भूतमर्थमन्वा-चक्षते—'रुदितवान् रुद्रः, वपामुच्चिखेद प्रजापतिः, देवा वै दिशो न प्रज-ज्ञिरे' इत्येवमादीनि, तानि कं धर्मं प्रमिमीरन्?। रोदनं वपोत्खेदनं दिग-प्रज्ञानमित्यादि त्वशक्यम्, निमित्तं विनाऽनुद्भवात्। तस्मादानर्थक्यपराणि नित्याऽर्थविधुराणि भवन्ति। अतस्तानि 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' (१।२।१।७)। 'वायव्यं श्वेतमालभेत भूतिकामः' 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति। स एवैनं भूतिं गमय-ती'ति विध्युद्देशेन एकवाक्यत्वात्प्रमाणम्, 'भूतिकाम' इत्येवमन्तो विध्यु-द्देशः, वायुर्वै क्षेपिष्ठा देवतेतिपदानां साकांक्षत्वाद् विधेः स्तुतेश्चैकवाक्यत्वं 'भूतिकाम आलभेत यतः वायुः क्षेपिष्ठेति। आलभेत यतस्ततो भूतिरिति। अथ भिन्नाऽर्थयोर्वाक्यं भिद्येत, यदा न स्तुतिपदानि, विधिशब्देनैव तदा प्ररो-चना, यदा स्तुतिवचनं तदा स्तवनेनेति॥ अथ स्तुतिपदानि अनर्थकानि अभविष्यन् साकांक्षाणि न गम्यमानेऽर्थेऽविवक्षितार्थानि भवितुमर्हन्ति, अतः स्तुतिमवगच्छामः। स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमाना अनुष्ठातॄणा-मुपकरिष्यन्ति क्रियायाः। इमानि सर्वाण्येव पदानि कंचिदर्थं स्तुवन्ति विदधति। अतः प्रमाणमेवं जातीयकानि, वायुर्वै क्षेपिष्ठा देवतेति। तुल्यं च साम्प्रदायिकमिति"॥

आनर्थक्ये इष्टापत्तिः स्वीकर्तुं न शक्यते, यतः 'स्वाध्यायोऽध्येतव्यः' इत्य-ध्ययनविधिना 'सकलस्य विधिमन्त्रनामधेयनिषेधाऽर्थवादात्मकस्य ब्राह्मण-भागस्य च वेदस्याऽध्ययनं कर्तव्यमिति **बोधयता**, सर्ववेदस्य प्रयोजनवदर्थ-पर्यवसायित्वं **सूचयता**, उपात्तत्वेन—सार्थकतया ग्रहणवत्त्वेन, आनर्थक्य-स्याऽनुपपत्तेः॥ **स चाऽर्थवाद इति**। अर्थवादाः द्विविधाः—विधिशेषाः, निषेधशेषाश्चेति। तत्र **'वायव्यं श्वेतमालभेते'**त्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवते-त्यादीनामर्थवादानां "वायुः क्षिप्रगामिप्रशस्ता देवता, तद्दैवत्यं कर्म प्रशस्तमिति" विधेयकर्मदेवतागतप्राशस्त्यप्रतिपादनात्मकविधेयार्थस्तावक-तया विध्येकवाक्यत्वेन अर्थवत्त्वम्। **'बर्हिषि रजतं न देयमि'**त्यादिनिषेध-शेषाणां 'सोऽरोदीदि'त्यादीनामर्थवादानां तु निषेध्यरजतनिन्दाप्रतिपादन-

इत्यादिः । यूप आदित्याऽभेदस्य प्रत्यक्षबाधितत्वात् आदित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपाद्यते ।

---

द्वारा रजतनिषेधप्राशस्त्यपरत्वेन निषेधैकवाक्यत्वात् निषेध्यनिन्दिततयाऽर्थवत्त्वम् । अतो लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते । तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्तव्यतात्वेन सम्बध्यते ।। नच विधेयकर्मप्राशस्त्यबोधस्य सुख-दुःखाऽभावाऽन्यतरप्रयोजनशून्यत्वेन नाऽर्थवादस्याऽर्थवत्त्वमिति वाच्यम् । साऽलसाऽप्रवृत्तजनस्य प्रवृत्तिजनकत्वेन प्राशस्त्यबोधस्य विधेयाऽनुष्ठाने उपयोगादर्थवत्त्वम् ।। एवम्—'अग्निर्वाऽकामयते'त्यादेरप्यग्निदेवत्यो यागः पूर्वकालेऽग्निना कृतत्वात् प्रशस्तोऽत एवाऽऽधिक्यादिदानीन्तनैरपि यजमानैरवश्यं कर्तव्यमिति विधेयकर्मगतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वेनाऽर्थवत्त्वम् । क्वचिदर्थवादस्य सन्दिग्धाऽर्थनिर्णायकत्वेन प्रामाण्यं स्वीक्रियते, यथा 'अक्ताः शर्करा उपदध्यादि'तिविधौ 'अक्ता'पदेन द्रवद्द्रव्यसामान्यं प्रतीयते, तच्च द्रव्यं किमिति सन्देहे 'तेजो वै घृतमि'त्यर्थवादरूपात् वाक्यशेषात् घृतमितिनिश्चीयते ।।

विधिशेषोऽपि चतुर्विधः—प्रशंसा-निन्दा-परकृति-पुराकल्पभेदात् । तत्र प्रशंसाऽर्थवादः—'शोभतेऽस्य मुखं य एवं वेदे'त्यादिः, वायुर्वै क्षेपिष्ठा देवते'त्यादिश्च । निन्दार्थवादस्तु—'असत्रं वा एतत् यत् अच्छन्दोमम्' 'अश्रुजं हि रजतं यो बर्हिषि ददाति' इत्यादिः 'सोऽरोदीदि'त्यादिश्च । 'परेण महता पुरुषेणेदं कर्म कृतमि'तिप्रतिपादकोऽर्थवादः परकृतिरित्युच्यते, 'अग्निर्वाऽकामयते'त्यादिः । परवक्तृकाऽर्थादिप्रतिपादकोऽर्थवादः पुराकल्पः 'तमशयद्धिया धिया त्वावध्यासु'रित्यादिः ।।

स चाऽर्थवाद एव प्रकारान्तरेण त्रेधा—। पुनः—प्रकारान्तरेण । तदुक्तम्—वृद्धैर्मीमांसकैः । यत्र विरोधस्तत्र गुणवादः । यत्राऽवधारणं तत्राऽनुवादः । गुणवादाऽनुवादहानात् प्रमाणान्तरविरोध-प्रमाणान्तराऽवधारणयोर्हानात् भूतार्थवादः । स्वयंवादोऽर्थवादो भवति यथाभूतेऽर्थेऽर्थवादो भवति ।। **अस्यार्थ इति ।** प्रथममुदाहरति—**प्रमाणान्तरविरोधे सतीति ।** 'आदित्यो यूपः' यज्ञे खादिरो यूपः ऊर्ध्वहस्तमानवनरप्रमाणः त्रिवृत्कुशरज्ज्वा आवृतः पशुबन्धनार्थ उक्तः, सः यूपः आदित्यः' इति वाक्यप्रोक्तः । किन्तु यूपस्य काष्ठात्मकस्य तेजोगोलकसूर्याऽभेदाऽसम्भवः, यूपे आदित्याऽभेदः प्रत्यक्षप्रमाणेन विरुद्धः—अभेदाऽभावो भेदः प्रत्यक्षसिद्धः । तत्राऽऽदित्ये लक्षणयाऽजहल्लक्षणयाऽऽदित्यसमानोज्ज्वलत्ववानिति प्रतिपाद्यते—अन्यमर्थमौज्ज्वल्यं

प्रमाणान्तराऽवगताऽर्थबोधकोऽर्थवादोऽनुवादः, यथा 'अग्निर्हिमस्य भेषजमि'ति। अत्र हिमविरोधित्वस्याऽग्नौ प्रत्यक्षाऽवगतत्वात्। प्रमाणान्तरविरोधतत्प्राप्तिरहिताऽर्थबोधकोऽर्थवादो भूतार्थवादः, यथा—'इन्द्रो वृत्राय वज्रमुदयच्छदि'त्यादिः।

---

वदतीत्यर्थवादः 'उज्ज्वलो यूप' इति जहल्लक्षणा वा। **प्रमाणान्तराऽवगतेति**। अन्यसिद्धमर्थमनुवदतीति अनुवादः 'अग्निर्हिमस्य भेषजम्' अत्र हिमविरोधित्वमग्नौ प्रत्यक्षप्रमाणाऽवगतम्, तस्य अनुवचनम्—**भेषजमिति**। विरोधीति। रोगस्य भेषजं विरोधीति अग्निः शीतस्य विरोधीतिजहल्लक्षणया प्रतिपाद्यते॥ प्रमाणान्तरविरोधप्रमाणान्तरप्राप्तिरहितः भूतस्वरूपम् अर्थं वदतीति **भूतार्थवादः**—'इन्द्रो वृत्राये'त्यत्र न कोऽपि वाक्यान्तरविरोधः, न काऽपि वाक्यान्तरप्राप्तिः। तत्र वृत्रं प्रति इन्द्रवज्रोद्यमनाऽभावाऽवगाहिप्रमाणान्तरस्याऽदर्शनात् न वज्रोद्यमनबोधने प्रमाणान्तरेण विरोधः, नाऽपि प्रमाणान्तराऽवगताऽर्थस्य वज्रोद्यमनात्मकस्य प्रतिपादकं दृश्यते, इति वृत्रं प्रति इन्द्रवज्रोद्यमनप्रतिपादकप्रमाणान्तरस्य वाक्यस्याऽनुमानस्याऽर्थापत्तेर्वैदिकवाक्यस्य वाऽदर्शनात्, तदुभयरहितस्य तादृशविरोधप्राप्तिरहितस्याऽर्थस्य बोधकोऽर्थवादो, यथाभूतोऽर्थस्तमर्थं वदतीति भूतार्थवादः। एवं विधि—मन्त्र—नामधेय—निषेधा—ऽर्थवादात्मकपञ्चविधवेदस्य साक्षात्परम्परया यागादिधर्मप्रतिपादकत्वेनाऽर्थवत्त्वमुपसंहरति—**एवं चेति**। वाक्यन्यायादियुक्तिभिः भिन्नप्रकाराभिश्च मीमांसाभिः निखिलवेदस्य 'यजेत स्वर्गकामः' इत्यादिसकामाऽधिकारीतिकर्तव्यताऽन्वयियजनादिव्यापारात्मकसाधनसाध्य-स्वर्गादिबोधकस्य कृत्स्नवेदस्य साक्षात्परम्परया वा यागादिधर्मप्रतिपादकत्वं सिद्धम्॥

स्वर्गादिफलमुद्दिश्य विहितो यागादिर्धर्मः तादृशफलोद्देशेनाऽनुष्ठीयमानाऽऽदृष्टद्वारा एव स्वर्गादिफलहेतुर्भवति, देवताप्रतीकपरमेश्वरसमर्पणमनीषयाऽनुष्ठीयमानः शुद्धिज्ञानप्रसन्नताकृपाद्वारा मोक्षहेतुर्भवति। संयोगः पूर्वः पश्चात् पृथक्त्वम् इतिरीत्या—यागाऽपूर्वस्वर्गादिः—पूर्वः। पश्चान्मोक्ष इतिविधया धर्मानुष्ठानस्य विविदिषाश्रुतिप्रामाण्यात् परमपुरुषार्थपर्यवसायित्वं भवतीति प्रथमं धर्मविविदिषा ततो मोक्षधर्मविविदिषा, इतिवेदस्य कृत्स्नस्य धर्ममोक्षयोः प्रामाण्यमिति। धर्मः—यागादिरुपासनादिश्च, स्वर्गादिकमुद्दिश्य क्रियमाणस्तस्य स्वर्गादेर्हेतुः। **सोऽयम्**—यागादिः परमेश्वरसमर्पणबुद्ध्याऽनुष्ठीयमानः निःश्रेयसमुद्दिश्याऽनुष्ठीयमानः निःश्रेयसहेतु-

एवं च 'यजेत स्वर्गकामः' इत्यादिनिखिलवेदस्य साक्षात्परम्परया वा यागादिधर्मप्रतिपादकत्वं सिद्धम्। सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः। न च तदर्पणबुद्ध्याऽनुष्ठाने प्रमाणाऽभावः, 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' इतिभगवद्गीतास्मृतेरेव प्रमाणत्वात्। स्मृतिचरणे तत्प्रामाण्यस्य श्रुतिमूलकत्वेन व्यवस्थापनादिति शिवम् ॥

---

र्भवति। **न चेति।** न प्रमाणस्याऽभावः—प्रमाणं वाक्यमिति दर्शयति—**यत्करोषीति।** त्वमर्जुनो यत्क्रियाव्यापारवान् यदशनव्यापारवान् यद्धवनव्यापारवान् यद्दानव्यापारवान् यत्तपोव्यापारवान् तत्तद्व्यापृतिकर्मकमदर्पणस्मृतिविषयव्यापारभावनावान् भव, तादृशभावनां भावयेति। (गीता ६।२७७)॥

स्मृतिचरणे प्रामाण्यं वेदमूलकतया **व्यवस्थापनादिति** ॥ अथ (३।३।१) स्मृतिप्रामाण्याधिकरणे 'धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्ष्यं स्यात्' (१) 'अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात (२)। 'अष्टकादिस्मृतेर्धर्मे न मात्वं मानताऽथवा। निर्मूलवान्न मानं सा वेदार्थोक्तौ निरर्थता' ॥ १ ॥ वैदिकैः स्मर्यमाणत्वात् सम्भाव्या वेदमूलता। विप्रकीर्णाऽर्थसंक्षेपात् सार्थत्वादस्ति मानता ॥ २ ॥ 'अष्टकाः कर्तव्याः' इत्यादिस्मृतिवाक्यं न धर्मे प्रमाणम्, पौरुषेयवाक्यत्वे सति मूलप्रमाणरहितत्वात्' इति मन्येथाः, तर्हि वेदेनैव तदर्थस्याऽवगतत्वात् इयं स्मृतिरनर्था स्यात्। तदानीमनुवादकत्वादप्रामाण्यमिति पूर्वपक्षः। उत्तरपक्षस्तु—'विमता स्मृतिः, वेदमूला, वैदिकमन्वादिप्रणीतस्मृतित्वात्, उपनयनाऽध्ययनादिस्मृतिवत्'। न च वैयर्थ्यं शंकनीयम्। अस्मदादीनां प्रत्यक्षेषु परोक्षेषु च नानावेदेषु विप्रकीर्णस्याऽनुष्ठेयाऽर्थस्यैकत्र संक्षिप्यमाणत्वात्। तस्मादियं स्मृतिर्धर्मे प्रमाणम् ॥

यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्त्येवमयमर्थोऽनुष्ठातव्यः, एतस्मै च प्रयोजनायेति। अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यमित्येवमादयः। तदुच्यते,—धर्मस्य शब्दमूलत्वात् अशब्दम् अनपेक्षं स्यादिति। शब्दलक्षणो धर्म इत्युक्तम्। चोदनालक्षणोऽर्थो धर्म इति। प्रमाणं स्मृतिः। वेदसंयोगस्त्रैवर्णिकानाम्। पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां ग्रन्थाऽनुमानमुपपद्यते इति प्रमाणं

बालानां सुखबोधाय भास्करेण सुमेधसा।
रचितोऽयं समासेन जैमिनीयाऽर्थसंग्रहः ॥ १ ॥

॥ इतिश्रीमहामहोपाध्याय-लौगाक्षिभास्कर-विरचित-पूर्वमीमांसार्थ-संग्रहनामकं प्रकरणं समाप्तिमगात् ॥

---

स्मृतिः। अष्टकालिंगा मन्त्रा वेदे दृश्यन्ते यान् जनाः प्रतिनन्दन्ति, तत्प्रमाणम्। दृष्टमिव तडागादि परोपकाराय, दृष्टार्थास्तत एव प्रमाणम्, अदृष्टार्थेषु तु वैदिकशब्दानुमानम्। सान्दृष्टिकफलं वृश्चिकविद्यादि प्रमाणम्। मन्त्रप्रमाणमिव मन्त्रस्मृतिः प्रमाणम् ॥ प्रत्यक्षस्य प्रमाणत्वात्तन्मूलकं सर्वं प्रमाणम्। वेदस्य नित्यप्रत्यक्षात्मकब्रह्मप्रमाणत्वात्तन्मूलकानि सर्वाणि स्मरणानि प्रमाणानि। व्यवहारस्याऽखिलप्राणिकृतस्य सफलत्वे प्रमाणत्वम्, विफलत्वे प्रमाणवैफल्यम्, अंशेऽप्रमाणत्वम्। न तु सर्वथाऽप्रमाणता, यथाकथञ्चित्प्रवर्तकत्वात्, यदंशप्रयोज्या निवृत्तिस्तत्र तदंशाऽप्रमाणता, इतिसार्वजनीना व्यवस्था ॥ इतिमीमांसितो वेदनारायणः प्रसीदतुतमाम् ॥ यज्ञे पत्न्या दक्षिणाऽऽसन्दीतिवत्प्रमाणीकर्तव्यम् ॥

श्री मद्भास्कराख्यविदुषा मीमांसाविषये बालानाम्, अधीताऽन्यशास्त्राणां, कृते सुखबोधार्थमयमर्थसंग्रहो जैमिनीयोक्ता द्रव्यदेवताद्या अर्थास्तत्प्रमाणार्था वाक्यार्थाश्च निर्णीतार्थास्तेषामुपयोग्यर्थानां ज्ञातव्यार्थानां संग्रहो लेखनविषयीकृतः। तेन परमात्मा प्रसीदतु ॥

भारते पश्चिमे प्रान्ते पुण्ये सागरसंगते। रेवताद्रिसमाधारे कंकसौराष्ट्रविश्रुते ॥ १ ॥ वैक्रमेऽष्टादशशते वर्षे सर्वशुभावहे। बलिखातमहाराजः कूकावालाख्यभूपतिः ॥ २ ॥ यं प्रधानं नियोज्यैव ग्रामान् संयोज्य वै दश। अस्थापयद्राजधानीरूपां हि नगरीं शुभाम् ॥ ३ ॥ नामतः कुंकुमवापीं नवतिग्राममूर्धनीम्। कूकानृपतिमान्यस्य राज्यकल्याणमिच्छतः ॥ ४ ॥ श्रीमत्कल्याणदेवानीकस्य ख्यातस्य तस्य वै। नवतिग्रामसमूहात्मकस्य मण्डलस्य यः ॥ ५ ॥ राष्ट्राऽध्यक्षो बली 'लिम्बा'देवानीकः सुपुत्रकः। कूकावालानृपपुत्रे आलावालाख्यभूपतौ ॥ ६ ॥ राज्ये शासत्युन्नतिं वै राष्ट्रस्य कृतवांस्तदा। आलावालानृपे स्वर्गं याते राज्ञी च धीमती ॥ ७ ॥ राज्यं समकरोत् कम्री लिम्बादेवसहायतः। तस्य पञ्चमपुत्रस्य सर्वसद्गुणशालिनः ॥ ८ ॥ श्रीमद्गोपालदेवानीकस्य पुण्यवतो गृहे। धर्मपत्न्यां कम्भरायां देव्यां पुत्रस्तृतीयकः ॥ ९ ॥ वैक्रमे चन्द्रषण्णिधिभूमिते (१९६१) वत्सरे शुभे। ऊर्जकृष्णाऽ

ष्टमी ( आश्विनकृष्णाऽष्टमी ) प्रातः पुत्रो यो जन्म लब्धवान् ॥ १० ॥ ईशवीयख्रिष्टाब्दे ( ता० २१–८–१९०५ ) ( शनिवासरे ) ॥ अधीतभाषाषड्वर्गो गुणातीतमुनेस्ततः । बालमुकुन्दमुन्याख्यशिष्याऽर्पितस्वजीवनः ॥११॥ वर्षे त्वेकादशे स्वामिमन्दिरे दीक्षितोऽभवत् । पुनर्दीक्षां दुर्गपुरे भाद्रे वै लब्धवान् शुभाम् ॥ १२ ॥ जीर्णदुर्गे च संस्थानं कृत्वाऽष्टादशवर्षकः । काशीमागत्य शास्त्राणि सर्वाण्यधीत्य तत्त्वतः ॥ १३ ॥ सन्दृब्धे येन भाष्ये वै प्रगल्भे सांख्ययोगयोः । वेदान्तन्यायसाहित्यसांख्ययोगसमाश्रयाः ॥ १४ ॥ टीकाग्रन्थाश्च सुस्पष्टा रचितास्तात्त्विकास्ततः । प्रमाख्यातिविमर्शाद्या भाष्यं ब्रह्मरसायनम् ॥ १५ ॥ सुधासिन्धोरथ श्रीस्वामिनारायणदर्शनम् । सत्संगभाष्यमथ वै हरिस्वरूपनिर्णये ॥ १६ ॥ तत्त्वप्रभावलीभूमण्डलीयाद्यास्तथाऽपरे । अपि ग्रन्थाश्च रचिताः सिद्धान्ता वर्णिताः स्फुटाः ॥ १७ ॥ दृष्ट्वा तं योग्यविद्वांसं सर्वसद्गुणशालिनम् । वृत्तालयपदाऽधीशाऽऽनन्दप्रसाददेशिकाः ॥ १८ ॥ वृत्तालये पुरे यस्मै सद्गुर्वाख्यं पदं ददुः । काशीपण्डितधौरेयैः सभायां काशिकापुरे ॥ ११ ॥ प्रदत्तं वैष्णवविद्वत्सार्वभौमपदं महत् । अन्यै उपाधयश्चापि काशीलब्धाः परीक्षणे ॥ २० ॥ गुर्वाशिषस्तथा लब्धाः प्रसादफलबोधिकाः । श्वेतायनीयसंहितासम्पादनमथो कृतम् ॥ २१ ॥ श्रीकृष्णवल्लभाचार्यः स्वामिनारायणाश्रितः । न्यायाचार्यपदैरन्यैः सांख्यादितीर्थभूषितः ॥ २२ ॥ ( १ ) ॥ 'योऽसौ काशीं समागत्य तृणीकृतपरिश्रमः । अर्थैः स्वार्थं विहायेदं प्रकाशयति सादरम् ॥ २२ ॥ ( २ ) ॥ तस्मै मत्प्रियशिष्याय वश्यायाऽशेषभक्तये । सदाऽऽनन्दमयायैवमाशीर्वादः प्रदीयते ॥ २४ ॥ (३) ॥ पूर्णपण्डितभावस्त्वं यशोमुकुटमण्डितः । पूर्णाऽऽयुः सर्वपुण्यानामाश्रयः सन् सुखी भव ॥ २५ ॥ ( ४ ) ॥ ( श्रीवामाचरणभट्टाचार्यैः ) ॥ नव्ये न्याये च सांख्ये श्रुतिशिरसि च योगेऽन्यशास्त्रेषु योऽस्ति, मीमांसायां च काव्ये नवकृतिरचने पारगो दर्शनेषु । वाग्धारायां विमर्शे विबुधसदसि वैशेषिके लेखने त्र, निष्णातश्चेतिहासे जयति स निगमे तन्त्रशास्त्रे पुराणे ॥ २६ ॥ ( १ ) ॥ श्रीकृष्णो वल्लभाचार्य इह सुरनिभश्चाऽर्हणाऽर्हः शुभाऽङ्को, विद्वान् ज्ञाने प्रवीणो बुधपरिषदि काश्यां च यो लब्धकीर्तिः । मूर्धन्यं यत्सुधासिन्धुरसमरचद् ब्रह्मरासयनाख्यं, भाष्यं वै दर्शनानां पुरुमततयो यत्र विश्रान्तिमापुः ॥ २७ ॥ ( २ ) ॥ गोपालानन्दमुनिकृद्वार्ताः संस्कृतपद्यगाः । गुणातीतानन्दमुनिवार्ता जग्रन्थ संस्कृते ॥ २८ ॥ ( ३ ) ॥ यश्चकाराऽन्यशास्त्राणि विविधानि मुदा हरेः । साम्प्रदायिकसिद्धान्ताऽऽवेदकानि प्रसादतः ॥२९॥ (४) ॥ मीमांसाऽर्थसंग्रहस्य सुस्फुटा किरणावली । किरणं किरणावल्यो न्यायादौ

रचितास्तथा ॥ ३० ॥ ( ५ ) ॥ स्वामिनारायणतत्त्वैः श्रुतितात्पर्यनिर्णयः । ग्रन्थः सुरचितः पारायणी सत्संगिजीवने ॥ ३१ ॥ ( ६ ) ॥ तत्त्वमुक्ताकलापस्य पञ्चसरात्मकस्य वै । किरणावलिका स्पष्टा रचिता न्यायशालिनी ॥ ३२ ॥ ( ७ ) ॥ मीमांसायाः सत्प्रमाणपरिष्कृतिरपि स्फुटा । रचिता विशदा स्पष्टा मन्त्रबोधादिकारिणी ॥ ३३ ॥ ( ८ ) ॥ सोऽयं विराजते स्वामी स्वामिनारायणाऽऽश्रितः साध्वाशीर्वादपीयूषाऽसीमपानप्रजीवनः ॥ ३४ ॥ ( ६ ) ॥ अथ 'शास्त्रार्थे च, सुलेखने, नवकृतौ, चाऽध्यापने, पर्षदि, व्याख्याने च, विवेचने, नवनवोन्मेषे, प्रमानिर्णये, । ऊहे च, ग्रथने, परात्मभजने, शास्त्रेषु, पारंगतः, श्रीकृष्णाऽन्वितवल्लभाऽऽर्यमुनिराड् विद्याऽब्धिरास्ते जये ॥ ३७ ॥ ( १ ) ॥ ( श्रीवामाचरणभट्टाचार्यैः ) ॥ 'काश्यां यस्य विराजते सुमहिमा यः शास्त्रसिद्धान्तवित् , विद्वच्छ्रेणिषु यः सतां बहुमतः श्रीस्वामिनारायणे । श्रीसत्संगिसुजीवनाख्यपरमग्रन्थाऽर्णवस्नातधीर्जीयात् कृष्णसुवल्लभाचाऽऽर्य इह सः प्रौढप्रभाभासुरः ॥ ३१ ॥ ( १ ) ॥ ( श्रीव्रजलालशास्त्रिभिः ) ॥ 'काश्यां येन जिता सभा मतिमतां शास्त्रार्थकार्ये सदा, विद्वद्वर्यविभावसुः सुरगिरामुग्धीकृताः पण्डिताः । न्यायाचार्यपदांकितः प्रतिदिनं श्रीधार्मिसेवारतः, सोऽसौ, वैष्णवकृष्णवल्लभमुनिर्विद्वत्प्रियो राजते ॥ ३२ ॥ (१) ॥ ( श्रीलाभशंकरशास्त्रिव्याकरणाचार्यैः ) ॥ अथ युगलम्— 'आम्नितिप्रयतिचित्तिसत्प्रभाव्यावृतिव्यभिसुदृष्टिसंगताः । वीक्ष्यकृत्स्नविदशेषशेमुषीः कृष्णवल्लभभिधः स्वधीतिमान् ॥ १ ॥ भूषितः स्वसुमतिप्रमापितः शारदाऽऽसनिविधिप्रसादभाक् । योग्यदार्शनिकपञ्चकाननश्चेति पात्रमिति नाऽपरोक्षता ॥ २ ॥ ॥ ३३ ॥ ३४ ॥ ( गोस्वामिश्रीदामोदरलालशास्त्रिभिः श्रीमन्माध्वसम्प्रदायाचार्यैः ) ( काश्याम् ) ॥ श्रीमच्चमत्कारपुरे महोज्ज्वलो निर्मापितः स्फाटिकमण्डपो हरेः । प्रसादवर्यो भुविशंसनाऽर्हणः श्रीकृष्णसद्वल्लभदेशिकेन वै ॥ ३५ ॥ महामहामण्डपराज उच्छ्रितो लक्ष्मीशनारायणकृष्णराजितः । श्रीराजकुट्टेऽपि च कृष्णवल्लभाऽऽचार्यैर्मणिस्फाटिकहेमनिर्मितः ॥३६॥ कृतस्तृतीयोऽद्भुतदिव्यशोभः सुस्वर्णसिंहासनशोभितांऽशुः । सुचित्रसत्स्फाटिकदीर्घकायश्चतुःसुभूमिः पुरुषदर्शनीयः ॥ ३७ ॥ आशाविराजच्छशिकौमुदीस्पृक् विशालरूपो गगनाऽभ्रदर्शी । प्रकारितोऽसंख्यधनैश्च जीर्णे श्रीकृष्णसद्वल्लभदेशिकैर्हि ॥ ३८ ॥ अश्वपट्टसरःक्षेत्रे लोमशाऽऽश्रममण्डले । यस्याऽऽस्ते मण्डपो रम्यो जनताभक्तकारितः ॥ ३९ ॥ यशस्वी कीर्तिमान् विद्वत्सार्वभौमः सुलेखनः । व्याख्याताऽध्यापकः शास्त्रतत्त्वाऽर्थाऽतिगतिप्रभः ॥ ४० ॥ पश्चिमकाश्यां निवसन् व्यासः श्वेतप्रभः स्वयम् । जगद्धिताय रचयन्

शास्त्राणि जयशब्दभाक् ॥ ४१ ॥ ईशाऽवतारव्यासस्य स्वरूपमनुसञ्चरन् । दिव्योऽपि साधुरूपोऽयं ब्राह्मो विजयतेतराम् ॥ ४२ ॥ अष्टोत्तरशतं पारायणानां च कृतं स्वयम् । विभिन्ननगरेष्वत्र यज्ञाश्चाऽष्टोत्तरं शतम् ॥ ४३ ॥ कृताश्चाऽनेन विदुषा कारिता यज्ञवेदिभिः ॥ यशोवितानं गगने ह्यपारे शाश्वतायते ॥ ४४ ॥ अष्टादशपुराणानां पारायणानि भूतले । कृतानि तु स्वयं भिन्नराजधानीषु सर्वतः ॥ ४५ ॥ महाभारतमाद्यन्तं रामायणं च वाचितम् । वाल्मीकादिकृतयश्च योगवाशिष्ठमित्यपि ॥ ४६ ॥ पञ्चदशी तथा चौपनिषदो वाचिता मुहुः । लक्षातिलक्षजनताव्रातेभ्यः श्राविताः कथाः ॥४७॥ स्मृतिशास्त्राणि सततं कथास्वतिरसासु वै । वाचितानि जनतानां समाजेषु सभासु च ॥ ४८ ॥ देवायतनरूपाणि कारितानि बहून्यपि । तेषु वैदिकविधिभिर्मूर्तयः स्थापिता हरेः ॥ ४९ ॥ काश्यां मत्स्योदरीभूमौ शंकरः कृष्णसंगतः । प्रतिष्ठापितो विप्रैश्च विदुषां बहुधा सभाः ॥ ५० ॥ आकारिताश्च विद्वद्भ्यो दानानि च बहून्यपि । दत्तान्यवसरे देवगिरा सम्भाषणानि च ॥ ५१ ॥ व्याख्यानानि च तत्त्वानां कृतानि विदुषा मुहुः । आजीवनं ब्रह्मचारी देशिकः कृष्णवल्लभः ॥ ५२ ॥ वर्तते वैष्णवविद्वत्सार्वभौमो जयत्यपि । शाखाः प्रशाखाः शिष्याणां चाऽस्थापयत्तु भूतले ॥ ५३ ॥ सौराष्ट्रराजधान्यां वैराज्ञा रथे सुवर्णजे । सूर्यवच्छोभने स्वर्णच्छत्रयष्टिधरान्विते ॥ ५४ ॥ आचार्यो भ्रामितः सोऽयं मानाऽर्होक्षतकौसुमैः । चन्दनाद्यैर्जयशब्दैर्वर्धितो जनतार्चितः ॥ ५५ ॥ मोहमय्यां शतवर्षमहोत्सवे सभास्वयम् । शेषासने निषद्यैव व्याख्यानानि ददौ मुहुः ॥ ५६ ॥ लक्षाऽतिलक्षजनतावन्द्यो विजयतेतराम् । श्रीकृष्णवल्लभाचार्यो देवसद्गुरुसन्निभः ॥ ५७ ॥ सतामाशीर्वादभूमिः सर्ववित्सु विराजते । शरणागतिमाप्तानां श्रेयस्करो जयत्यसौ ॥५८॥ दीक्षाशिक्षापरीक्षेणासमीक्षाऽऽन्वीक्षिकाऽन्तदृक् । आध्यात्मिकयात्मत्रिद्विद्यामहाऽब्धिर्जयतीश्वरः ॥ ५९ ॥ मन्त्रदानप्रदानाद्यैर्मानवाद्याः सुवैष्णवाः । कृता असंख्या जगति सोऽयं विजयते गुरुः ॥ ६० ॥ गौरवं यत्र विश्रान्तं ख्यातिर्यत्र खनीश्वरी । लक्ष्मीर्यत्राऽक्षया प्रीता सोऽयं विजयतेतराम् ॥ ६१ ॥

**इतिश्रीमन्महामहोपाध्याय-दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदमीमांसातीर्थ काव्यकुशल-वैष्णव-विद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचिता मीमांसायाम् अर्थसंग्रहस्य किरणावली सम्पूर्णा ॥**

## मीमांसायामंगत्वादिपरिष्कृतिपरिचायिका

इष्टतेत्याद्याः षड्विंशतिः प्रसंगतयः
जैमिनिसूत्रे विष्णुः परमात्माऽऽभिहितः
शाबरभाष्ये विष्णुः परमात्मांऽगीकृतः
सर्वमेधे सर्वफलप्रदः परमात्मा स्वीकृतः
हिरण्तगर्भ आदिरीश्वरः सूत्रेऽङ्गीकृतः
हरिरिति हारियोजने स्फुटीकृतः
ब्रह्मवर्चस्विश्रुतौ ब्रह्म अंगीकृतम्
शाश्वतः स्वर्गो मोक्षोऽभिमतः

विष्णुः समानदेशः स्वीकृतः
सूत्रेऽपवर्गोऽपि दर्शितः
शाबरमुनिना जरामरणनिर्मोचनं
मृत्युतो निर्मोचनं च वर्णितम्
वेदशास्त्रादिदर्शितयागदेवतादिपद्धतयः
अदृष्टकारणानि,
आत्मविशेषगुणेऽसमवायिकारणता-
यामन्यथासिद्धित्वादि च ॥

मीमांसायाम्

# अंगत्वादिपरिष्कृतिः

प्रभुं व्यासं जैमिनिं शावरं यज्ञं च देवताः ।
स्मृत्वा मीमांसकाऽऽदीष्टां तत्तन्न्यायाऽनुसारिणीम् ॥ १ ॥
अत्यावश्यकतत्त्वानां स्फोटचार्थं धीविलासिनीम् ।
श्रीकृष्णवल्लभाऽऽचार्यः करोत्यङ्गपरिष्कृतिम् ॥ २ ॥

'शेषः परार्थत्वादि'ति ( ३।१।२।२ ) सूत्रोक्तं परार्थत्वम् अङ्गत्वम्, शेषपदवाच्यत्वं साध्यम् , अंगत्वं पक्षताऽवच्छेदकम् , परार्थत्वं हेतुः, व्यापकसामानाधिकरण्यं व्याप्तिः, तज्ज्ञानमनुमितिहेतुः, हेतौ साध्यसामानाधिकरण्यग्रहकाले तुल्यवित्तिवेद्यतया साध्ये पक्षताऽवच्छेदकसामानाधिकरण्यभानेऽपि पक्षताऽवच्छेदकाऽवच्छिन्नविशेष्यताकसाध्यवत्तानिर्णयाऽभावात् न सिद्धसाधनादि । शेषत्वस्य नानात्वेन शेषपदं नानार्थकम् । परार्थत्वं निरूपकत्वसम्बन्धेन यन्निष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितं यत्तत्वं तदंगत्वम् , 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' इत्यत्र स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वं दर्शपूर्णमासयोः, अतस्तयोस्तदंगत्वम् । 'समिधो यजति'इत्यादिवाक्येषु उपस्थितदर्शपूर्णमासयोरेवोद्देश्यत्वेनाऽन्वयात् दर्शपूर्णमासोद्देश्यताविशिष्टकृतिकारकत्वं प्रयाजादीनामतस्तेषां तदंगत्वम् । द्रव्यगुणजात्यादीनां करणत्वेन, कर्तुश्च कर्तृत्वेन, कालादेरधिकरणत्वेनाऽन्वयान्न क्वाऽप्यव्याप्तिः । यत्त्वतत्त्वादेरननुगमात् स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वं स्वर्गाऽगत्वमित्येवम् उद्देश्यतावच्छेदकभेदेन लक्षणभेदोऽपि बोध्यः । स्वर्गाऽगसकलसाधारणमेकमंगत्वलक्षणम् । निरूपकत्वसम्बन्धेन उक्तोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वमित्येवं सम्बन्धविधया निरूपकत्वनिवेशप्रयोजनं तु स्वाश्रयप्रयोजकत्वसम्बन्धेन एकज्ञानविषयत्वादिसम्बन्धेन च स्वर्गनिष्ठोद्देश्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वस्य प्रयाजादौ सत्त्वेन नाऽतिप्रसंग इति । कृतीति स्वरूपकथनम् । कारकत्वस्य भावनैकनिरूपितत्वेन धात्वर्थयागाद्यनिरूपितत्वम् । स्वर्गनिष्ठत्वं च दैशिककालिकविशेषणत्वाऽतिरिक्तस्वरूपसम्बन्धेन । स्वर्गनिष्ठत्वं वा विषयत्वीयस्वरूपसम्बन्धेन । कर्मकारकभिन्नकारकत्वस्यैव लक्षणे निवेशः । सूत्रे एतदर्थमेव भिन्नार्थकं परपदम् । समानसंवित्संवेद्यतयाऽङ्गिभेदस्य परपदादुपस्थितिः । प्रकृतलक्षणे स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यतावत्त्व-

सम्बन्धेन स्वर्गत्ववद्भिन्नत्वं प्रकृतलक्षणे निवेश्यम्। स्वर्गपश्वादौ नाऽति-प्रसंगः। स्वावच्छिन्नोद्देश्यतानिरूपकतावच्छेदकाऽवच्छिन्ननिरूपितोद्देश्यता-कत्वसम्बन्धेन स्वर्गत्ववद्भिन्नत्वं विवक्षितम्। दर्शपूर्णमासकरणकक्रती स्वर्गो-द्देश्यकत्वमित्यादिप्रतीत्या दर्शपूर्णमासकरणककृतित्वे स्वर्गत्वाऽवच्छिन्नो-द्देश्यतानिरूपकतावच्छेदकत्वं सिद्ध्यतीति तादृशाऽवच्छेदकत्वाऽवच्छिन्न-निरूपितोद्देश्यताकत्वसम्बन्धेन स्वर्गत्ववत्त्वं स्वर्गे, तद्भिन्नत्वं यागे इति लक्षणसमन्वयः। वृत्त्यनियामकसम्बन्धस्य भेदप्रतियोगितावच्छेदकताऽवच्छेद-कत्वस्य सिद्धान्तिततया न सिद्धान्तविरोधः। सूत्रमपीदृशभेदपरम्। कारकत्वं क्रियान्वितकर्तृत्वाद्यन्वितत्वम्, प्रकृतकृतिकरणाद्यघटितसम्बन्धेन क्रियान्वि-तत्वम्। स्वर्गोद्देश्यकत्वादिकमेव क्रतौ प्रकृतत्वम्। सोमादीनां स्वर्गाद्यंगत्व-मिष्टम्। सोमादेः समप्राधान्यं तु यागद्वारेणाऽङ्गत्वेन निरसनीयम्। उद्देश्य-त्वम् इप्सिततमत्वम्। कृतिकारकत्वं च कृत्यन्वितविभक्त्यर्थाऽन्वितत्वम्। विभक्त्यर्थत्वं विभक्तिशक्यत्वम्। विभक्तिनिरूपितसम्बन्धाऽनवच्छिन्नशक्ति-विषयत्वम्। षष्ठीशक्यतावच्छेदकं हि सम्बन्धत्वमेव। कृत्यन्वितकर्तृत्वाद्यन्यत-माऽन्वितत्वमेव कृतिकारकत्वम्। एवंविधाऽन्यतमत्वबोधकं सूत्रस्थं परपदम्।

विध्यन्वितत्वं विहितत्वम्, तच्च स्वनिष्ठप्रकारतानिरूपितविशेष्यता-वच्छेदकतावच्छेदकत्वसम्बन्धेन विधिविशिष्टत्वम्। अस्ति 'च' यागादौ प्रवर्त-नानिष्ठप्रकारतानिरूपिताऽर्थभावनानिष्ठविशेष्यताऽवच्छेदकत्वं करणत्वादौ। स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्व--तदवच्छेदकत्वाऽन्यतरसम्ब-न्धेन विधिविशिष्टत्वं विहितत्वम्। भावनायामन्वये तु—कर्तृत्वाद्यन्यतम-सम्बन्धेन कृत्यन्वितत्व—कृत्यन्वितकर्तृताद्यन्यतमान्वितत्वान्यतरवत्त्वमेव कृतिकारकत्वम्। धात्वर्थकर्तृत्वाद्यन्यतमत्वसम्बन्धेन कृत्यन्वितत्वसत्वात् सोमादिकारके उक्ताऽन्यतमाऽन्वितत्वमस्ति। वस्तुतो धातुलक्षितकरणत्वा-देरेव प्रकारतया भावनाऽन्वयात् कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वं कृति-कारकत्वं, स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वसम्बन्धेन विधिविशिष्टत्वं विहितत्वम्, विहितत्वं च निर्विषयकभावनायाः प्रयोज्यता-सम्बन्धेन प्रवर्तनाऽन्वयाऽयोग्यत्वात् प्रथमतः क्रतौ सकलकारकाऽन्वयः, ततः सकलकारकविशिष्टायां भावनायां प्रयोज्यतासम्बन्धेन प्रवर्तनाऽन्वयः, एक-विशिष्टेऽपरवैशिष्ट्यमितिरीत्या शाब्दबोधाऽभिप्रायः। विधिर्हि त्र्यंशपरि-पूर्णाम् अनुष्ठानयोग्यां भावनां प्राप्य पश्चात्पुरुषं प्रवर्तयितुं प्रवर्तमानोऽपेक्षा-वशात्प्राशस्त्यज्ञानमुखेनाऽर्थवादान् यत्र क्वचन स्थितान् अतिदेशेन सन्निधाप-यति। विधेयभावना तु ततः प्रागेव स्वांशान् गृह्णाति। तदानीमुपदेशेनाऽति-देशेन वाऽर्थवादस्याऽसन्निधानात् तदुपात्तसन्निहितफलाऽभावात् स्वर्गमेव

गृह्णातीति न स्वर्गन्यायबाधः। यदा तु योग्यताज्ञानं विनाऽपि अयोग्यता-निश्चयाऽभावमात्रेण शाब्दबोधस्याऽऽनुभविकत्वात्। एकत्र द्वयमिति रीत्या युगपदेव भावनाविशेषणानामन्वयः। समानाऽभिधानादिरूपप्रत्यासत्त्यनुग्रहेण वा प्रथमं प्रवर्तनादीनामेव तत्राऽन्वयस्तदा तत इतरकारकाऽन्वयः। भाव्य-भूतार्थभावनायां कारकान्वयात्पूर्वं भाव्यविशेषाऽऽकांक्षाकलुषितत्वेन प्रवर्त-नाया विस्पष्टमितिकर्तव्यताऽऽकांक्षाऽनुत्थानान्नाऽर्थवादाऽतिदेश इति न विश्वजिति आर्थवादिकफलकल्पनाऽऽपत्तिः। तदा लाघवात् प्रवर्तनारूपविधि-विषयत्वमेव विहितत्वम्। अस्ति च विशिष्टभावनायां प्रवर्तनाविषयत्वात् तद्विशेषणेष्वपि प्रवर्तनाविषयत्वम्। नाऽनृतं वदेदित्यादौ निषेधो यदा निवर्तना तर्हि तस्यां क्रतुवैगुण्यजनकक्रियाविषयनिवर्तनात्वं क्रत्वर्थत्वम्। यदि प्रवृत्त्यभावस्तदा तस्मिन्नुक्तक्रियाप्रतियोगिकत्वम्। क्रतुवैगुण्यक्रतुसाद्गुण्या-न्यतरजनकक्रियाविषयनिवर्तनात्वं क्रत्वर्थत्वम्। उक्तक्रियाप्रतियोगिकत्वे सति वैदिकनिवर्तनाविषयत्वम्, पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वम् उक्तक्रियाप्रतियोगिकत्वं वा पुरुषार्थत्वम्। एवं च फलस्य पुरुषार्थत्वं भाक्तत्वम्, यागादेर्भावनां प्रति, प्रातिपदिकार्थस्य च कारकं प्रति, लिङ्गसंख्यादेश्च प्रातिपदिकार्थं प्रति, करणत्वादेश्च भावनां प्रति, तां प्रत्येव च शब्दभावनादे-रंगत्वव्यवहारो गौणो विशेषणत्वमात्रविवक्षया द्रष्टव्यः। एतद्विधया अंग-त्वोक्त्या चांऽगत्वघटकीभूतोद्देश्यताशालित्वरूपम् अङ्गित्वमर्थात्सिद्धम्। अंगत्वघटकीभूतकारकत्वनिविष्टकर्तृत्वाद्यन्यतमनिरूपितत्वम् अंगित्वम्। स्वर्गादौ यागादिवृत्तिकरणत्वादिनिरूपकत्वमस्ति। अंगत्वघटकीभूतभेदप्रति-योगित्वम् अंगित्वम्। एतदंगत्वं प्राचीनोक्तपरोद्देशप्रवृत्तकृतिव्याप्यत्वमेव परिष्कृतम्। वस्तुतस्तु लाघवात्। यन्निष्ठोद्देश्यतानिरूपितविधेयताशालि यत् तदंगम्। सर्वेषामंगानां श्रुतैरार्थिकैर्वा विधिभिः स्वस्वप्रधानोद्देशेन विधानम्। उद्देश्यताविधेयते स्वरूपसम्बन्धरूपे। एवं विधाऽङ्गत्वं तृतीयाऽ-ध्यायार्थः। स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपित–विधेयत्व–स्वयंप्रार्थितभिन्न-वृत्त्युद्देश्यतानिरूपितविधेयत्वरूपयोः क्रत्वर्थत्वपुरुषार्थत्वयोः अंगत्वविशेषत्वं तृतीयसिद्धत्वमिति। स्वर्गादिनिष्ठोद्देश्यतानिरूपितविधेयता स्वरूपसम्बन्ध-रूपा। स्वरूपसम्बन्धरूपोद्देश्यताऽपि लक्षणघटिका। स्वघटकीभूतविधेय-तोद्देश्यताऽन्यतरप्रयोजककर्मत्वकरणत्वाद्यन्यतमबोधकत्वात् अंगत्वप्रमाण-त्वम्। कर्मणः उद्देश्यत्वेनैवाऽन्वयात् कर्मत्वम् उद्देश्यत्वप्रयोजकम्, करणा-दीनां तु विधेयत्वेनाऽन्वयात् करणत्वादिकं विधेयत्वप्रयोजकम्। तच्च श्रुते-र्निरुक्ताऽन्यतमवाचकत्वेन निरुक्तांऽगत्वप्रमाणत्वम्। लिङ्गादीनां तु साक्षा-त्परम्परया निरुक्ताऽन्यतमवाचकश्रुतिकल्पकत्वेन तत्त्वमिति विशेषः॥

निरुक्तांऽगत्वोक्त्यैव चांऽगत्वघटकीभतोद्देश्यताशालिस्वरूपम् अंगित्वम् अर्थसिद्धम्। यन्निष्ठविधेयतानिरूपितोद्देश्यताशालि यत्तत् तदंगि। निरुक्तांऽगित्वघटकविधेयताशालित्वरूपम् अंगत्वम् अर्थसिद्धम्। किन्त्वत्र यत्त्वतत्त्वादेरननुगमः, अंगानां बहुत्वात् विशिष्यैव लक्षणानि निर्वक्तव्यानि। निर्वक्तव्यलक्षणाऽन्यतमलक्षणलक्ष्यत्वम् अगत्वम् इति तु सामान्याऽर्थांऽगत्वम् प्रगलितमिति, नवीनः पन्थाः।

यद्वा अत्र परोद्देशप्रवृत्तकृतिव्याप्यत्वम् अंगत्वमिति, परोद्देशप्रवृत्तत्वं च परोद्देशेनोपपादितत्वम्, कृतिव्याप्यत्वविशेषणम्, व्याप्यत्वम्—उद्देश्यत्वानुद्देश्यत्वसाधारणविषयत्वम्, विध्यन्वयिन्यां कृतौ यद्विषयत्वाऽनुपपत्तिर्यदुद्देश्यकत्वेन परिह्रियते तत्तस्याऽङ्गम्, तदर्थं च। प्रेक्षावत्कृतौ अपुरुषार्थविषयत्वं तत्साध्यपुरुषोद्देश्यकत्वमन्तरेणाऽनुपपन्नमिति प्रसिद्धम्। एवं वपनपुरुषयोः पुरुषकृत्वंगत्वम्, यागस्वर्गयोः स्वर्गपुरुषशेषत्वम्। यागः स्वर्गाय, स्वर्गः पुरुषार्थाय,। कालादौ विध्यन्वयिकृतिविशेषाऽवृत्ति यद्यत् तत्तद्भिन्नतत्तद्विशिष्टक्षणादिविषयकत्वं प्रसिद्धम्।

त्रिविधा हि कृतिविषयता—साध्यता, उपादानता, उद्देश्यता च, एवं सामान्यतो जनकताऽपि चतुर्थी सम्मता, स्वर्गमुद्दिश्य यागं साधयितुं हविरादिकमुपादीयते,—इत्येव प्रतीतेः यागे साध्यताख्यविषयता, स्वर्गे उद्देश्यताख्या, हविरादौ उपादानताख्या, कालादौ साधारणी जनकताख्या, यागादीनां यावतां कर्मणां कालविशेषेषु विहितत्वात्, प्रातःसवनं दर्शयागः पूर्णिमायागः इत्याद्यनन्तरतत्तत्कर्मणां तस्मिँस्तस्मिन् काले कालमधिकृत्य सम्पादितत्वात् तथाप्रतीतेः सत्त्वात्॥

अथ च परोद्देशप्रवृत्तत्वं शेषत्वम्। प्रवृत्तिरपि चेतनाऽचेतनकर्तृकव्यापारमात्रम्। सर्वकारणानां स्वस्वव्यापारे कर्तृत्वम्। सम्भवति च उद्देश्यतात्मिका विषयता, प्रयोजनानां पाकाय काष्ठानि ज्वलन्ति, धान्याय जलं प्रस्रवति, मेघाद्विद्युत्पततीतिव्यवहारात्। व्यवहारे चाऽचेतनशब्दकर्तृकेऽभिश्राव्यापारे व्यक्तीनामुद्देश्यत्वं भवत्येव, प्रकृतिकर्तृकव्यापारे प्रवर्तते प्रकृतिरिति प्रपञ्चोद्देश्यकत्वं भवति। ततश्च यदुद्देशेन यद् व्याप्रियते तत्तदंगम्, विहितयागाद्युद्देश्यकसाऽधिकारव्यापारविशेषकर्तृत्वभिन्नत्वं यत्र यत्र तत्तत् तत्र तत्र यागाद्यंगत्वम्॥ विधिप्रयोज्यप्रमाविषययदुद्देश्यकव्यापारकर्तृकं यत्र यत्र तत्र तत्र तदंगत्वम्। विहितदध्यादिकरणानामस्ति यागाद्युद्देश्यकव्यापारकर्तृत्वम्॥ गौरवं परिष्कृतावदूषणम्, लक्षणावद्भूषणम्। शक्तिस्तु अव्याप्त्यादिदूषणान्विता लक्षणाभिः समीक्रियते॥ परार्थत्वम् अंगत्वस्वरूपं

लक्षितं भवति । अंगं द्विविधम्—क्रत्वर्थं पुरुषार्थं चेति । आद्यं प्रयाजादि, द्वितीयं ज्योतिष्टोमदर्शपूर्णमासादिः ॥

अत्र पुरुषार्थत्वं स्वयंप्रार्थितसाध्याऽधीनाऽनुष्ठानत्वम् ! तदुपकारार्थत्वं क्रत्वर्थत्वं च । स्वयंप्रार्थितसाध्येच्छाजन्यप्रवृत्तिजन्यत्वमित्यर्थकम्, फलेच्छायाउपायेच्छां प्रति कारणत्वेन स्वयंप्रार्थितस्वर्गेच्छाजन्यज्योतिष्टोमादीच्छाजन्यप्रवृत्तिजन्यत्वं ज्योतिष्टोमादौ वर्तते । स्वयंप्रार्थितत्वं च—शास्त्राऽधीनेष्टसाधनताज्ञानाऽजन्येच्छाविषयत्वम्, यागादौ नास्ति तत्त्वम्, स्वर्गादौ स्रक्चन्दनवनिताभवनविमानोद्यानभोगस्थानात्मके तादृशेच्छाविषयत्वं लौकिकैषणागोचरत्वमस्ति । सुखविशेषे स्वर्गे तु नास्ति स्वयम्प्रार्थितत्वम् । अतः शास्त्राऽधीनेष्टसाधनताज्ञानाऽजन्येच्छाविषयसाध्येच्छाजन्यप्रवृत्तिजन्यत्वं शास्त्राधीनेष्टसाधनताज्ञानाऽजन्येच्छाजन्यप्रवृत्तिजन्यत्वं वा पुरुषार्थत्वम्, तदुपकारार्थत्वं च तदुपकारप्रयोज्यत्वम् । तेन प्रधानांऽगाऽभिक्रमणादावपि समन्वयः ॥

स्वयम्प्रार्थितसाध्याऽधीनाऽनुष्ठानस्वरूपयोग्यतावत्त्वादि अनुसर्तव्यम्, एवम्—इतिकर्तव्यतात्वेनाऽन्वितत्वस्वरूपयोग्यतावत्त्वं क्रत्वर्थत्वम्, तद्भिन्नस्वरूपयोग्यतावत्त्वं पुरुषार्थत्वमित्यप्यनुसर्तव्यम् । तत्राऽपि तादृशाऽस्वरूपयोग्यं यद्यत् तद्भिन्नत्वम्, तादृशस्वरूपयोग्यतानवच्छेदकं यद्यत् तत्तदनवच्छिन्नधर्मवत्त्वमित्यप्यनुसर्तव्यम् । अंगस्य उभयार्थत्वे तु तत्तद्भिन्नत्वाऽभावे पर्याप्त्या निवेशेन समाधानमनुसर्तव्यम् । स्वाबच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तत्तद्रूपवृत्ति यद्यत् परम्परया तदवच्छिन्नत्वस्य निवेशेन पुरुषार्थत्वम् उपपादनीयम् ॥

किं वा—स्वयम्प्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वम्, स्वयम्प्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं क्रत्वर्थत्वम् ॥ स्वयम्प्रार्थितत्वं लक्षणया स्वयमस्वयमुभयविशिष्टप्रार्थितभिन्नत्वम् वृत्तौ विवक्षणीयम् । स्वयम्प्रार्थितवृत्त्युद्देश्यतासामान्ये यन्निरूपितविधेयताशालित्व—यदनिरूपितविधेयताशालित्वोभयाऽभावस्तदुद्देश्यताकतद्विधेयताशालित्वं पुरुषार्थत्वम् । एवं स्वयम्प्रार्थितभिन्नवृत्त्युद्देश्यतासामान्येऽपि यदनिरूपितविधेयताशालित्व-यन्निरूपितविधेयताशालित्वोभयाऽभावस्तादृशोद्देश्यतानिरूपितविधेयताशालित्वं क्रत्वर्थत्वम् ॥

अथ स्वयम्प्रार्थितजनकत्वे सति स्वयम्प्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वम् । विधेयतायामेव वा जनकतासम्बन्धावच्छिन्नत्वं निवेश्यम् । अपूर्वीयत्वाऽनवच्छिन्नस्वयम्प्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयता-

शालित्वं पुरुषार्थत्वम्। स्वर्गाद्युद्देशेन विधीयमानज्योतिष्टोमादावेतदस्ति। निरुक्तपुरुषार्थत्वघटकोद्देश्यताविलक्षणोद्देश्यतानिरूपितविधेयताशालित्वं क्रत्वर्थत्वम्, निरुक्तोद्देश्यताविलक्षणत्वं च निरुक्तोद्देश्यतावृत्त्यपूर्वीयत्वाऽनवच्छिन्नत्वस्वयम्प्रार्थितवृत्तित्वोभयाऽभाववत्त्वम्, प्रयाजादिनिष्ठविधेयतानिरूपितदर्शपूर्णमासादिनिष्ठोद्देश्यता निरुक्तोभयाऽभाववती, यूपादिवृत्त्युद्देश्यतायाः स्वयम्प्रार्थितवृत्तित्वाऽभावप्रयुक्तोभयाऽभाववत्त्वात् स्वर्गादिनिष्ठोद्देश्यतायाश्चाऽपूर्वीयत्वाऽनवच्छिन्नत्वाऽभावप्रयुक्तोभयाऽभाववत्त्वमस्ति। आधानादेः क्रत्वर्थत्वमिष्टम्। उक्तपुरुषार्थत्वलक्षणे अपूर्वाऽनवच्छिन्नत्वमेव उद्देश्यताविशेषणम्। विशिष्टपर्याप्ताऽवच्छेदकतायाश्च पर्याप्तिसम्बन्धेन विशिष्ट इव स्वरूपसम्बन्धेन विशिष्टघटकीभूतविशेषणेष्वपि धृत्तिः॥

उभयविधमप्यंगत्वं प्रत्येकं द्विविधम्। सिद्धरूपं क्रियारूपं च। तत्र सिद्धरूपं क्रत्वर्थं व्रीह्यादि। क्रियारूपं क्रत्वर्थं प्रयाजाऽवघातादि। एवं सिद्धरूपं पुरुषार्थं दधिगोदोहनादि, क्रियारूपं पुरुषार्थं ज्योतिष्टोमदर्शपूर्णमासादि। क्रियारूपं क्रत्वर्थं द्विविधम्,—सन्निपत्योपकारकम्, आराद्उपकारकं च। तत्र द्रव्यदेवतान्यतरनिष्ठोद्देश्यतानिरूपितविशेष्यताशालि कर्म सन्निपत्योपकारकम्, यथा प्रोक्षणाऽवघातपशुपुरोडाशादि। द्रव्यदेवताऽन्यतरसंस्कारजातीयं कर्म सन्निपत्योपकारकम्। द्रव्यदेवताऽन्यतरनिष्ठापूर्वसाधनत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताशालित्वं सन्निपत्योपकारकत्वम्। निरुक्तसन्निपत्योपकारकभिन्नक्रत्वर्थक्रियात्वम् आराद्उपकारत्वम्। अंगत्वे श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यात्मकानि प्रमाणानि॥

**निरपेक्षो रवः श्रुतिः**। अंगत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वयोः अन्यतरस्य प्राधान्येन वाचकः शब्दः श्रुतिः। कृतिकारकत्वं कृत्यन्वितकर्तृत्वाद्यन्यतमत्वम्॥ वस्तुतस्तु—उद्देश्यतात्वावच्छिन्नप्रतियोगिताकभेदकर्तृत्वादिप्रत्येकभेदघटितकर्तृत्वकरणत्वसम्प्रदानत्वा-ऽपादानत्वाऽधिकरणत्वाऽन्यतमत्वाऽवच्छिन्नप्रतियोगिताकभेदघटिताऽन्यतरत्वाऽपेक्षया कर्तृत्वत्वाद्यवच्छिन्नप्रत्येकभेदघटितकर्मत्वसाधारणाऽन्यतमत्वस्य लघुत्वात् कर्तृत्वकरणत्वकर्मत्वसम्प्रदानत्वाऽपादानत्वाऽधिकरणत्वाऽन्यतमस्य प्राधान्येन वाचकः शब्दः श्रुतिः। उक्ताऽन्यतमवाचकत्वं चोक्ताऽन्यतमनिष्ठसम्बन्धत्वाऽनवच्छिन्नशक्तिनिरूपकत्वम्॥ स्वशक्यतावच्छेदककर्तृत्वत्वाद्यन्यतमाऽवच्छिन्नतातात्पर्यकप्रत्ययत्वं श्रुतित्वम्। 'व्रीहीन्प्रोक्षती'त्यादिवाक्येषु द्वितीयादिश्रुतीनां स्वशक्यतावच्छेदककर्मत्वत्वाद्यवच्छिन्नतात्पर्यकत्वस्य सम्मार्गाऽधिकरणादौ निर्णीतत्वाल्लक्षणसमन्वयः। 'आचान्तेन कर्म कर्तव्यम्' 'व्रीहीन् प्रोक्षति'

'व्रीहिभिर्यजेत' 'विप्राय गां ददाति' 'उत्तरार्धात् स्विष्टकृते समवद्यति' 'यदाहवनीये जुहोति'। इत्यादीनि उदाहरणानि। 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिषष्ठीश्रुत्या गोदोहनस्य पश्वंगत्वमिति षष्ठ्याः श्रुतित्वव्यवहारस्तु गौणः ॥

अथ—अंगत्वप्रमाणान्तर्भूता श्रुतिस्त्रिधा—विधात्री, अभिधात्री, विनियोक्त्री च। विधात्री लिंगादिश्रुतिः। अभिधात्री व्रीह्यादिश्रुतिः। विनियोक्त्री त्रिविधा—विभक्तिरूपा, समानपदरूपा, समानाभिधानरूपा च। एतत्सकलविधासाधारणो निरपेक्षरवः श्रुतिः। शेषशेषित्वाभिमतयोस्तत्तद्रूपेणाऽनुपस्थितयोः सम्बन्धबोधो व्यवधानमनपेक्ष्य यच्छब्दज्ञानेन जन्यते सा विनियोक्त्री। सम्बन्धोंऽगत्वात्मना साधनत्वत्वात्मना सम्बन्धत्वात्मना वा प्रत्येतव्यः। तेन दीक्षिष्यमाण इत्यादौ केन कस्य वेति तृतीयाषष्ठीपदश्रुतीनां संग्रहः। यच्छक्त्या पदार्थज्ञानं जनयति, यद्यत्र शक्तं तत्तत्र श्रुतिरिति ॥

**सामर्थ्यं लिङ्गम्**—अत्र मङ्गलत्वघटकीभूतोद्देश्यताकृतिकारकत्वयोः अन्यतरवाचकपदकल्पनाऽनुकूला क्लृप्तपदार्थनिष्ठयोग्यता लिङ्गम्। 'स्रुवेणाऽवद्यती'त्यत्र—द्रवद्रव्यमित्युद्देश्यतावाचिपदकल्पनाऽनुकूलस्रुवकरणकाऽवदाननिष्ठयोग्यता लिङ्गम्। 'अध्वर्युं वृणीते' इत्यत्र संस्कारविध्यन्यथाऽनुपपत्त्या वृतेनाऽध्वर्युणा 'यच्छक्नुयात् तत्कुर्यादि'ति संस्कार्यविनियोगकल्पनास्थले करणत्ववाचितृतीयाद्यन्तपदकल्पनाऽनुकूलक्लृप्तसंस्कारनिष्ठयोग्यता। 'बर्हिर्देवसदनं दामी'त्यादिमन्त्रेषु—अनेन मन्त्रेण बर्हिर्लवनं प्रकाशयेदित्यादिस्वप्रतिपाद्यार्थवृत्त्युद्देश्यतास्ववृत्तिकरणतादिवाचकपदकल्पनाऽनुकूलयोग्यता लिङ्गम्। तच्च तत्तत्पदरूपश्रुतिकल्पनाद्वारा तत्तत्पदार्थं प्रति तत्तत्पदार्थस्यांऽगे प्रमाणम्। कृतिकारकत्वं पदं कृत्यन्वितकर्तृत्वाद्यन्यतमपरम्। अत्र कर्तृत्वकर्मत्वकरणत्वसम्प्रदानत्वाऽपादानत्वाऽधिकरणत्वाऽन्यतमवाचकपदकल्पनाऽनुकूलयोग्यतैव प्रकृतलक्षणतात्पर्यम्। सोमादिपदे मत्वर्थलक्षणापक्षे वाक्यीयमङ्गत्वम्। 'प्राधान्येन व्यपदेशा भवन्ती'तिन्यायेन वाक्यीयांऽगत्वस्य श्रौतांऽगत्वस्यैव व्यवहारः न तु लैङ्गिकांऽगत्वस्येति ॥

लिङ्गं द्विविधम्—सामान्यसम्बन्धबोधकप्रमाणसापेक्षम्, तदनपेक्षं च। स्वप्रमेयोद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्ननिरूपितस्वप्रमेयांऽगतन्निष्ठसम्बन्धबोधकप्रमाणसापेक्षत्वं सामान्यसम्बन्धबोधकप्रमाणसापेक्षत्वम्। मन्त्रलिङ्गप्रमेयदर्शपूर्णमासाऽपूर्वसम्बन्धिलवनत्वव्यापकदर्शपूर्णमासाऽपूर्वसम्बन्धित्वावच्छिन्ननिरूपितमन्त्रनिष्ठसम्बन्धबोधकप्रमाणसापेक्षत्वात् अस्य लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणसापेक्षत्वम् 'बर्हिर्देवसदनं दामी'तिमन्त्रलिङ्गेऽस्ति तत्, अपूर्वीयलवनत्वेन लवनोद्देश्यता, अपूर्वीयलवनत्वेन बोधार्थं प्रकरणादि-

रूपप्रमाणान्तरमपेक्षणीयम् , मन्त्रेण तु लवनत्वमात्रबोधात् । दर्शपूर्णमासप्रकरणेऽस्य मन्त्रस्य पाठाद् दर्शपूर्णमाससम्बन्धि किञ्चिदनेन प्रकाशयेदिति किं तदित्यपेक्षायां लवनमिति मन्त्रलिङ्गताऽवगम्यते । एवं पूषाऽनुमन्त्रणमन्त्रे यागानुमन्त्रणमिति समाख्यया यागसामान्याऽपूर्वसम्बन्धि किञ्चिदनेन मन्त्रेण प्रकायेदित्यवगते किं तदित्यपेक्षायां पूषेति मन्त्रलिङ्गादवगम्यते । लिङ्गप्रमेयपूषनिष्ठविजातीययागाऽपूर्वसाधनत्वरूपोद्देश्यतावच्छेदकव्यापकयागसामान्याऽपूर्वसाधनत्वाऽवच्छिन्ननिरूपितमन्त्रनिष्ठसम्बन्धबोधकसमाख्यासापेक्षत्वाल्लिंगस्य निरुक्तप्रमाणसापेक्षत्वम्। अर्थज्ञानस्य सामर्थ्येन कर्मानुष्ठानांगत्वे तु लिंगस्य सामान्यसम्बन्धबोधकप्रमाणाऽनपेक्षत्वात् । लिङ्गस्य अशब्देनाऽविधायकत्वाद् विहितत्वाऽभावेन साक्षात्प्रमाणत्वाऽसम्भवेन विधायकश्रुतिकल्पनान्तरितप्रामाण्यस्याऽनन्तरितप्रामाण्यश्रुतितो दौर्बल्यम् । अतः 'कदाचनस्तरीरसि'इतीन्द्रप्रकाशिकायाः ऋचः यावल्लिङ्गादिन्द्रोपस्थानार्थत्वं कल्प्यते तावत् 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते इतिश्रुत्या गार्हपत्योपस्थापनार्थत्वमैन्द्र्यधिकरणे निरूपितम्। गार्हपत्यस्य साधनत्वेन चयनाऽसम्बन्धित्वेऽपि चयनसंस्कार्यत्वोपपत्तिः। शक्त्योपस्थितेन्द्रप्रकाशकत्वमादाय ऐन्द्रर्चेति संज्ञामुपपाद्य गौणसामर्थ्यसहकृततृतीयाश्रुत्या गार्हपत्यप्रकाशकत्वे वाऽस्याः ऋचः। मुख्यसामर्थ्यरूपलिंगविरोधिगौणसामर्थ्यस्य श्रुतिसहायत्वेऽपि न स्वतोविनियोजकत्वम् ॥

**अथ वाक्यं** निरूप्यते—पदसमभिव्याहारो वाक्यम् । यथा 'धेनुर्दक्षिणा' 'उच्चैः ऋचा क्रियते' इत्यादिः । अंगत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वाऽन्यतरपदार्थकल्पनाऽनुकूलः श्रुतपदसन्निधिः । कल्पनाशब्देन च सांसर्गिकविषयताशालिशाब्दबोधलक्षणाजन्यशाब्दबोधाऽन्यतरद्विवक्षितम् । संसर्गविधया भासमानकरणताकस्य 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' इत्यादेः, तथा लक्षणया भासमानकर्मकत्वस्य 'प्रयाजशेषेण हवींष्यभिघारयति' 'सक्तून् जुहोति'इत्यादेश्च संग्रहः । परोद्देश्यताकृतिकारकत्वपदेन च कर्तृत्वकर्मत्वकरणत्वसम्प्रदानत्वाऽपादानत्वाऽधिकरणत्वाऽन्यतमं विवक्षितम् । कर्तृत्वाद्यन्यतमशक्तिज्ञानाऽजन्यकर्तृत्वाद्यन्यतमशाब्दबोधप्रयोजकपदसमभिव्याहारो वाक्यमिति तु ज्यायः । निरुक्तशाब्दबोधप्रयोजकत्वं निरुक्तशाब्दबोधानुकूलाऽऽकांक्षायोग्यतादिमत्त्वम् तेन करणत्वादावगृहीततृतीयादिशक्तिकस्य विपरीतव्युत्पन्नस्य 'व्रीहिभिर्यजेते'त्यादिश्रुतिस्थलीयपदसमभिव्याहात् कर्तृत्वाद्यन्यतमसंसर्गकव्रीह्यादिप्रकारकयागादिविशेष्यकशाब्दबोधेऽपि नाऽतिप्रसंग इति । प्रबलप्रमाणाऽवगतसाधनान्तराऽवरुद्धक्रियायाः फलार्थगुणाश्रयत्वं स्थानप्रमाणकम् । 'धेनुर्दक्षिणा' इत्यत्र क्रियापदाऽध्याहार आवश्यकः । तत्र च भावनाना भाव्याऽपेक्षायां दक्षिणापदस्य दक्षिणाकार्यपरतया भाव्यसमर्प-

कत्वम् , करणाऽऽकांक्षायां च करणतासंसर्गेण धेनुपदार्थस्य धेनुपदोत्तरप्रथमाया वा करणत्वलक्षणया धेनुकरणत्वस्य भावनायामन्वयः। धेनुदक्षिणयोरभेदबोधस्तु पार्ष्ठिकः ॥ एवम् 'उच्चैर्ऋचा क्रियते' इत्यत्र वेदोपक्रमानुरोधाद्धातुना, ऋग्वेदविहितकर्मलक्षणात्तस्य च प्राप्तत्वेन भावनायामुद्देश्यत्वेनान्वये जाते करणाऽऽकांक्षायामुच्चैष्ट्वस्य मन्त्रघटितपरम्परासम्बन्धासंसर्गेण भावनाऽन्वयः। 'सह श्रपयती'त्यत्राऽपि प्रमाणान्तरप्राप्तश्रपणोद्देश्यकभावनायां साहित्यस्य कर्तृत्वाद्यन्यतमसंसर्गेणाऽन्वयः। समभिव्याहारो वाक्यमिति साध्यत्वादिवाचकद्वितीयाद्यभावे सति वस्तुतः शेषशेषिणोः सहोच्चारणं वाक्यम्। स्वप्रकृत्यर्थनिष्ठशेषित्वबोधिकानां विभक्तीनां शेषिपदोत्तरत्वेन, स्वप्रकृत्यर्थगतशेषत्वबोधिकानां च शेषपदोत्तरत्वेनाऽभावे सति इति सत्यन्तार्थः। तेन प्रयाजशेषाऽभिघारणसक्त्वादिविनियोजकवाक्यसंग्रहः। शेषशेषिणोर्वाचकपदयोरेकाऽन्वयबोधोपयोगिसन्निधिविशेषेणोच्चारणमिति शेषशेषिणोः सहोच्चारणमित्यस्याऽर्थः। अत्र प्रातिस्विकरूपेण स्वत्वत्वेन स्वत्वाऽनुगमः। समभिव्याहारो वाक्यमिति ब्राह्मणवाक्यलक्षणम्। मन्त्रवाक्यं तु एकान्वयबोधोपयोगिमन्त्रपदसमभिव्याहारः। विधिवाक्यमन्त्रवाक्ययोर्विशेषस्तु—विधिवाक्ये कर्तृत्वाद्यन्यतमलक्षणया संसर्गविधया तद्भानांऽगोकारेण वा स्वत एव विनियोजकत्वम्। मन्त्रवाक्ये तु—देवस्य त्वाऽऽदिपदैर्निर्वापं प्रकाशयेदिति वाक्यान्तरकल्पनया विनियोजकत्वम्। देवस्य त्वाऽऽदिपदानां मन्त्रघटकपदार्थत्वाऽभावेन विध्यभावेन च मन्त्रवाक्यस्य स्वतोऽविनियोजकत्वात्। विध्यभावादेव च देवस्य त्वादिपदार्थानां निर्वापांऽगत्वमपि न स्वतो मन्त्रवाक्यगम्यम्। किन्तु श्रुतिघटकवाक्यान्तरकल्पनयेति। अत्र विधिवाक्यस्य योग्यताज्ञानं विना, लक्षणया संसर्गविधया वा कर्तृत्वाद्यन्यतमबोधकत्वाऽभावेन योग्यतारूपलिङ्गाऽनुमापकत्वेनांऽगत्वप्रमाणत्वेऽपि न लिङ्गतो दौर्बल्यम् , प्रत्युत सश्रुतिकवाक्यान्तरकल्पनया प्रमाणभूताल्लिाङ्गात् स्वतोविनियोजकत्वेन प्रबलत्वमेव। मन्त्रवाक्यस्य सामर्थ्यकल्पनद्वारा सश्रुतिकवाक्यान्तरकल्पकस्य द्व्यन्तरितप्रामाण्यकतया श्रुतिकल्पनारूपैकान्तरितप्रामाण्यकाल्लिङ्गात् दुर्बलत्वम् ॥

**अथ प्रकरणं** निरूप्यते—सन्निधिपठितत्वे सति इतिकर्तव्यताऽऽकांक्षात्वमेव प्रकरणपदार्थत्वम्। तत्सन्निधिपठितत्वविशिष्टकथंभाबाकांक्षात्वं तद्विनयोजकप्रकरणत्वम्। प्रयाजादिविनियोजकदर्शपूर्णमासादिकरणकभावनाकथंभावाकांक्षात्मकप्रकरणे समन्वयः। प्रमाणान्तराऽसंयुक्तमितिकर्तव्यतार्थित्वरूपात्प्रकरणात् अङ्गत्वम् ॥

अथ—अवगतफलसम्बन्धसन्निहितवाक्यप्रमितपदार्थवृत्ति—यत्पूर्वप्रमाणाऽनवगताऽगताकविषये इतिकर्तव्यतात्वप्रकारकाऽपेक्षणं तत्प्रकरणम्। दर्शपूर्णमासादौ प्रयाजादिविषये तदस्ति ॥

अथ—**उभयाकांक्षा प्रकरणम्**—सा च फलाकांक्षाविशिष्टकथंभावाकांक्षा। वैशिष्टयं च—स्वाश्रयभावनासन्निहितभावनाश्रितत्वसम्बन्धेन उक्तसम्बन्धेन यदीयफलाकांक्षाविशिष्टा, निर्णीततदनंगत्वकगता या कथंभावाऽऽकांक्षा सा तद्विनियोजकप्रकरणम्, प्रकरणस्याऽऽकांक्षारूपत्वेन स्वतोऽप्रमाणत्वात् वाक्यकल्पनाद्वारैव प्रामाण्यम्। प्रधानगतेतिकर्तव्यताकांक्षया प्रयाजादिगतप्रयोजनाकांक्षासहकृतया प्रयाजवाक्यस्य प्रधानवाक्यस्य च स्वस्वाऽवान्तरवाक्यार्थसमाप्तस्यापि महावाक्यैकदेशत्वरूपपदत्वाक्रान्तस्य सन्निधिरूपं वाक्यं लक्ष्यते। उक्तपारिभाषिकपदानामपि स्वार्थोपस्थितिद्वारा तन्निष्ठाऽश्रुतपदान्तरकल्पनाऽनुकूलयोग्यतारूपलिङ्गानुमानद्वारेतिकर्तव्यतात्वबाचोत्थमित्यादिगौणश्रुतिकल्पकत्वमिति परम्परया प्रकरणस्यांऽगत्वे प्रामाण्यम्। वाक्यैकवाक्यताकल्पकप्रकारश्च 'समिधो यजति, इत्थं दर्शपूर्णमासाभ्यां यजेते'ति ॥

अथ **सादेश्यं स्थानम्**, तद् द्विविधम्—अनुष्ठानसादेश्यं, पाठसादेश्यं च द्वितीयं द्वेधा—यथाक्रमपाठः, सन्निधिपाठश्च। पशुधर्माणामग्नीषोमीयपश्वङ्गत्वमनुष्ठानसादेश्यम्। 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत'इति क्रयसन्निधावाम्नातस्याऽग्नीषोमीयपशोः 'स एव द्विदेवत्यः पशुरौपवसथ्येऽह्न्याऽलब्धव्यः' इतिवचनादौपवसथ्येऽह्न्यनुष्ठानम्, तद्दिने एव पशुधर्माः श्रूयन्ते। अतोऽनुष्ठानसादेश्यात्पश्वङ्गम्। ज्योतिष्टोममहाप्रकरणसत्त्वेऽपि पशुधर्माणां सोमद्रव्यकज्योतिष्टोमांऽगत्वाऽयोग्यत्वं तदनङ्गत्वम्। आनर्थक्यतदङ्गन्यायेनाऽग्नीषोमीयमात्रांऽगत्वम्। पश्वन्तरे त्वतिदेशादेव तेषां प्राप्तिरिति। स्वबोधकवाक्यान्यतरसमानदेशीयत्वसम्बन्धेन किञ्चित्पदार्थविशिष्टत्वं स्थानमिति निष्कर्षः। उक्तसम्बन्धेन तत्पदार्थविशिष्टत्वं तद्विनियोजकक्रम इति। देशसमानत्वं प्राथम्यादिरूपसादृश्यम्। अन्यतमत्वादिना सम्बन्धानुगमेन समन्वयात्। निष्कर्षे देशीयत्वं च उक्तदेशवृत्तित्वम्। तच्च—अनुष्ठेयत्वपठितत्वाऽन्यतरसम्बन्धेन। तेन पशुधर्मबोधकवाक्यसमानदेशाऽनुष्ठेयत्वस्य, उपहोमबोधकवाक्यसमानदेशपठितत्वस्य च संग्रहः ॥

यद्वा—इतिकर्तव्यतात्वेनाऽयोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिः क्रमः, इति कर्तव्यतात्वेनाऽयोग्यत्वं द्वेधा,—क्वचित् तदाकांक्षाविरहात् विकृतौ, क्वचित् अव्यापारात्मकत्वात् अनुमन्त्रणजपादिमन्त्रादौ, अनुष्ठानसादेश्यसंग्रहश्च। उपहोमवाक्यार्थस्य प्रधानत्वेनाऽनुपस्थितौ अन्वयाऽननुपपन्नत्वात्।

अथ **देशसादेश्यं** नाम—प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वम्। द्विविधोऽपि क्रमः प्रत्येकमुभयाऽऽकांक्षयाऽन्यतराऽऽकांक्षया च विनियोजक इति षड्विधः। प्रधानस्य विकृतित्वेऽनुष्ठानसादेश्यस्याऽन्यतराऽऽकांक्षया विनियोजकत्वम्, प्रधानस्य प्रकृत्यनिरूपकदर्विहोमादिरूपत्वेऽनुष्ठानसादेश्यस्योभयाऽऽकांक्षया विनियोजकत्वम्। ऐन्द्राग्नादिविकृतिक्रमपठितमन्त्राणामन्यतराकांक्षासहकृतयथाक्रमपाठात् तदङ्गत्वम्। विकृतिक्रमपठितलिङ्गाऽविनियोज्यजपादिमन्त्राणां यथाक्रमपाठ एवाऽन्यतराकांक्षासहकारेण विनियोजकोऽपेक्षणीयः। दर्विहोमाद्यङ्गभूतजपादिमन्त्राणां यथाक्रमपाठ एव उभयाकांक्षया विनियोजकमुदाहरणम्। उपहोमीयविकृतिसन्निधिपाठोऽन्यतराऽऽकांक्षासहकृतस्तदुदाहरणम्। शुन्धनमन्त्रस्याऽपूर्वविशेषसाधनत्वोपस्थापकत्वेन विनियोगप्रयोजकत्वात् उभयाकांक्षासहकृतसन्निध्युदाहरणम्॥ अत्र—अन्यन्तराऽऽकांक्षासहकृतक्रममात्रस्येतिकर्तव्यताकाऽऽकांक्षोत्थापकतया प्रकरणाद् दुर्बलत्वम्। तथा—उभयाऽऽकांक्षासहकृतयथाक्रमपाठानुष्ठानसादेश्ययोर्विधिसन्निधिघटितप्रकरणाद् दुर्बलत्वं च। विनियोजकप्रकरणसहकृतपाठसन्निवेस्तु स्वतोऽविनियोजकत्वादपि दुर्बलत्वम्॥

अथ **समाख्या**—यौगिकः शब्दः। परस्पराऽर्थाऽन्वयतात्पर्यकसुबन्तपदघटितयौगिकशब्दत्वं समाख्यात्वम् इति निष्कर्षः। आनुशासनिकाऽऽनुपूर्वीकपदघटितत्वं प्रकृतयौगिकत्वम्। कृदन्ततद्धिताद्यानुपूर्वी आनुशासनिकी॥ यद्वा—परस्पराऽर्थाऽन्वयतात्पर्यकपदघटितत्वे सति सुबन्तत्वं समाख्यात्वम् 'कृत्तद्धितसमासाश्चे'त्यनेन कृत्तद्धितान्तसमासेषु प्रातिपदिकसंज्ञावगमात् तेषां सुप्प्रकृतित्वरूपसुबन्तत्वमिति समन्वयः। समाख्या द्वेधा—वैदिकी लौकिकी च। याजुर्वेदिकपदार्थेषु आध्वर्यवमिति। आर्ग्वेदिकेषु हौत्रमिति। सामवेदिकेषु औद्गात्रमिति। तथा होतृचमस इति पात्रविशेषे, दार्शपौर्णमासिकपदार्थेषु पौरोडाशिकमिति, या या समाख्या सा 'आध्वर्यवमधीते' इत्यादिवेदप्रयुक्तत्वात् वैदिकी। सोमचमस इत्याद्या याज्ञिकप्रयुक्ता लौकिकी। विशेष्यविशेषणसम्बन्धस्य सिद्धवन्निर्देशात् तदन्यथाऽनुपपत्त्याऽवयवार्थसम्बन्धबोधकं वाक्यमाकांक्षायोग्यतादिबलेन कल्पयित्वा कर्तृत्वादिरूपः सम्बन्धः प्रतीयते इति सा विशेषणस्य विशेष्यांगतायां प्रमाणम्। उक्तांगत्वस्य प्रमाणान्तराऽगम्यत्वात् सामाख्यानिकत्वम्। 'आध्वर्यवमधीते' इत्यादौ अध्वर्य्वादेः विधितात्पर्यविषयत्वात् समाख्याविनियोज्यत्वम्। समाख्याघटकीभूतपदार्थयोः संसर्गमर्यादया सम्बन्धे ज्ञाते सति 'अध्वर्युं वृणीते' इत्यध्वर्युवाक्यस्याऽन्वाधानादिवाक्यस्य चैकवाक्यतासम्पादकपदमात्रं 'यमध्वर्युं वृणीते सोऽग्नीनन्वादधाती'ति कल्प्यते, द्वयोर्विध्योरेकबुद्धिस्थतारूपस्थानकल्पनां विना न संभव-

तीति कल्पयित्वा, अध्वर्य्वादेश्च व्यापारविषयतया इतिकर्तव्यतात्वं प्रकल्प्य तदाकांक्षारूपप्रकरणकल्पनया द्वयोर्विध्योर्महावाक्यैकदेशत्वरूपपारिभाषिकपदत्वाक्रान्तयोः सन्निधिरूपं वाक्यं कल्प्यते। ततश्च अध्वर्युनिष्ठयोग्यतारूपलिङ्गं प्रकल्प्यैकवाक्यतासम्पादकपदरूपश्रुतिकल्पनात् समाख्याया विनियोजकत्वम्। समाख्याश्चतुरन्तरितप्रामाण्यकस्थानाऽपेक्षया दुर्बलत्वम् ॥

अथाऽग्निदाहसाक्षाच्छक्तिरिव मन्त्राणां कार्यदर्शनाच्छक्तयः कल्प्यन्ते, मन्त्रेषु अर्थप्रत्यायनशक्तिविशेषा जप्तेषु फलाधायका विषविद्यास्विव भवन्ति, उपयोगः कर्तव्यो भवति, उपयोगो विहितजपोच्चारणरूपः, तद्बोधिताऽर्थविनियोगरूपश्च, पुरुषशक्तिप्रवर्धिताः शक्तयो मूर्ता इवोपतिष्ठन्ते फलवर्षिण्यो भवन्ति, सानुष्ठानः कलापस्त्रिसंगमः फलद्रूपो भवति मन्त्रः पुरुषोऽनुष्ठानं चेति। पुरुषपरिकराऽन्विताऽनुष्ठानपरिकरे मन्त्रपरिकृतः स्वविषयतया प्रविष्टः सन्नैक्यभावमुपपन्नः सुमूर्तः फलात्मा प्रसूतिं लभते, प्रसूतिः स्थूलचक्षुष्मतां गोचरा, सा स्वात्मलाभा यथाक्लृप्तिका स्वयमुपभुञ्जाना चारम्यं प्राप्ता साऽवसाना पुनर्जिज्ञासोत्थापयित्री तत्तन्मन्त्राऽनुष्ठानाऽभ्यासाऽऽवृत्यादिप्रयोजिका प्रवर्तयित्री च भवति, मन्त्राणां नित्यत्वात्, पुनरनुष्ठानमात्रमपेक्षितम्, इति साफल्यम् ॥

केचिदर्थाः श्रवणमात्रेणोपतिष्ठन्ते, केचन संस्कारेण स्मृत्या, केचन तु ज्ञानेनाऽप्यविज्ञेयाः, तत्र तत्रोच्चारणं तु यथार्थं न व्यभिचरति तस्मान्मन्त्रोच्चारणमपि स्वार्थबोधे व्यक्तिविशेषाणां कृते ब्राह्मणोच्चारणमपेक्षते, ब्राह्मणवाक्यं तु क्वचित् तत्तद्रीतिसंज्ञामपेक्षते इत्येवमंगाऽगिशेषशेषित्वादि नाऽफलम्। मन्त्राऽभिधानात् मन्त्रेण पुरोडाशमध्वर्युः प्रथस्वेति ब्रूते, यश्चैवं प्रथस्वेति ब्रूते स प्रथयति यथा यः कुर्विति ब्रूते स कारयतीति। विद्यमानोऽप्यर्थः प्रमादाऽऽलस्यादिभिर्नोपलभ्यते, निगमनिरुक्तव्याकरणवशेन धात्वादितोऽर्थः कल्पनीयः। विधिशब्दाश्च विवक्षितार्थान्नियतानेव मन्त्राननुवदन्ति ॥ मन्त्रान् अनुवदन्ति तेऽनुमन्त्राः, दम्पत्योर्जायावत् अनुमन्त्रा ब्राह्मणा ब्राह्मणाऽनुमन्त्राः स्मृतयः। स्मृतयो वेदमूलाः वैदिकमन्वादिप्रणीतस्मृतित्वात्, उपनयनाऽध्ययनादिस्मृतिवत्। प्रत्यक्षपरोक्षनानाविधविप्रकीर्णाऽनुष्ठेयार्थानां वैदिकानां स्मृतिषु संक्षिप्यमाणत्वात् स्मृतीनां धर्मे प्रमाणत्वम्। वेदवेद्यादिश्रुत्युक्तपदार्थवत् आचमनादयः शुद्धिफलाः स्मृत्युक्ता अनुष्ठेयपदार्था। 'क्षुत आचामेत्' इत्याचमनस्मृतिः प्रमाणम्। 'श्रुतिः स्मृतिः सदाचारः' इतिप्रमाणोपन्यासाच्छिष्टाचारः प्रमाणम्। मातुलदुहितृपरिणायनाऽऽचारस्याऽप्रामाण्यम्। बौधायनाऽऽपस्तम्बाऽऽश्वलायनकात्यायनादिकल्पसूत्रादिग्रन्थाः वेदमूलाः प्रमाणम्। होलाकाः प्राच्यैर्वसन्तोत्सवरूपाः, आह्नीनेबुकादयो

दाक्षिणात्यैः करञ्जाऽर्कादिस्थावरदेवतापूजनाद्यात्मकाः, उद्वृषभयज्ञा उदीच्यैर्ज्येष्ठपूर्णिमावृषभधावनात्मकाः, लौकिकाः साधारणा ह्येते लोकदेशधर्मास्तन्मात्रदृष्टविषयाः सामाजिकप्रमाणीकृताः, यत्राऽदृष्टद्वारकत्वं नास्ति ते लोके प्रमाणपदमाप्ता अपि शास्त्रीयप्रामाण्याऽनवलम्बनास्ते लौकिकैहिकमहोत्सवनिभा एव । इमे लौकिका इमे वैदिका इतिव्यपदेशभेदात् । यस्याऽनुष्ठानसामान्यस्य मूलश्रुतिकल्पकत्वं, तच्छास्त्रीयप्रमाणकम् ॥

शब्दा वैदिका लौकिकाश्च शक्ता लाक्षणिकाश्चाऽर्थपरा अभिप्रेतार्थं बोधयन्ति, तत्र तत्सिद्धिजातिसारूप्यप्रशंसालिंगभूमभिः षड्भिर्न्याययुक्तिभिः स्वाभिप्रेताऽर्थपरा मीमांसकैः वैदिकप्रणाल्या विमर्शिताः ।—

**तत्सिद्धिः**—'यजमानः प्रस्तरः' इत्याम्नायते, शब्दार्थद्वयोरभेदबोधे समानलिंगविभक्तिवचनादिमत्त्वं प्रयोजकमिति यजमानः प्रस्तरः प्रस्तरो वा यजमान इति एकस्याऽपरं नामधेयं स्यान्नामवन्नाम्यभेदबोधश्च स्यात् । द्वयोः सर्वथा सामानाधिकरण्यात्, वाच्यत्वसंसर्गेण एकवाक्यान्तर्गतत्वेन अव्यवहितोच्चारणविषयत्वेनाऽव्यवहिताऽऽनुपूर्वीकसन्धानित्वेन च एकार्थो वा नामधेयं वा गुणगुणिभावो गुणविधिः स्यात् । अचेतनः प्रस्तरश्चेतनो यजमान इतितादात्म्याऽयोगः, जडः प्रस्तरो जपेऽसमर्थश्चेत्यभेदाऽयोगः, कुशमुष्टिः प्रस्तरः, प्रस्तरे स्रुगाख्यदर्विस्थापनं स्रुग्धारणं प्रस्तरकार्यं, प्रस्तरस्य यत्कार्यं तद् यजमानेन स्वहस्तेन क्रियते, अतो यजमानः प्रस्तरे गुणो विधीयेत, प्रस्तरः प्रस्तरधारणाऽर्थे लाक्षणिकः स्यात् , पूर्वश्रुतो यजमानशब्दः मुख्यवृत्तिः स्यात् , एवं च सति नामगुणयोरन्यतरत्वं स्यात् , न त्वभेदः ॥ किं तर्हि ?, भेद एव, कुतः ?, अर्थभेदस्याऽत्यन्तप्रसिद्धत्वात् ॥ अथ प्रस्तरकार्यमग्नौ प्रहरणं, तद् यदि यजमानोऽग्नौ निक्षिप्तो भवेत्, सर्वकार्यनाशः स्यात् , अतो विधेयः प्रस्तरः दर्भमुष्टिः यजमानगुणेन यागसाधनत्वेन युक्तः यजमानशब्देन स्तूयते, तस्य यजमानस्य यत् यागसाधनत्वं तस्य यागसाधनत्वस्य प्रस्तरे दर्भमुष्टौ सिद्धिः प्रस्तरे गौणवृत्तिबोधजनिका ॥ यजमानः प्रस्तरः इति तत्सिद्धिकरः गुणसम्बन्धः प्रतीयते । सर्वो हि आत्मनः कार्यसिद्धिं करोति । अन्योऽपि यस्तस्य कार्यसिद्धिं करोति स तस्मिन्नुच्चरिते हृदयमागच्छति, यथा राजा पत्तिगणकः, पत्तिगणको राज्ञः कार्यं साधयति, स राजशब्दे उच्चरिते प्रतीयते । अत्र यजमानकार्यं प्रस्तरः साधयति, प्रस्तरो यजमाने प्रतीते प्रतीयते, स यजमानशब्देन प्रत्याय्यते—कथं स्तुतः स्यात् , बर्हिषः उपरिसादने स्तुतः स्यात् , यजमानवत् प्रस्तरो बर्हिर्मुष्टिः यागसाधनमिति अर्थवादः प्रशंसकः । न विधिरिति । यजमानः एककपालः इत्यत्रापि एककपालः सर्वहोमः, एककपालस्य सर्वहोमे प्रशंसेति ॥

**जातिः**—आग्नेयो वै ब्राह्मणः, ऐन्द्रो राजन्यः, वैश्यो वैश्वदेवः' इत्येवमादयः श्रूयन्ते। आग्नेयो न ब्राह्मणनामधेयम्, नाऽग्निदेवतागुणविधानम्। आग्नेयं सूक्तम् इति देवतातद्धितस्य सूक्तहविर्विषयत्वात्। नहि ब्राह्मणः सूक्तम्, नहि ब्राह्मणो हविः, अतः सम्बन्धवाचितद्धितान्ताऽऽग्नेयशब्देन ब्राह्मणः स्तूयते, अग्निसम्बन्धो मुखजन्यत्वरूपो ब्राह्मणे विद्यते, तत्समाम्नायते—'प्रजापतिरकामयत', 'प्रजाः सृजेय' इति। स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वयुज्यत, गायत्री छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्; अजः पशूनाम् तस्मात्ते मुख्या मुखतो हि असृज्यन्त' इति, तस्मात् आग्नेयशब्दोऽर्थवादः स्तावकः। एवम् ऐन्द्रो राजन्यः, वैश्यो वैश्वदेवः, इत्यपि ऐन्द्रो वैश्वदेवः। एकस्मिन्नेवंजातीयके विज्ञातेऽन्योऽपि तज्जातीयको हृदयमागच्छति तस्मादर्थवादाः। **जातिरिति** जन्मोपादानम्। अर्थवादाऽन्तरे तथोक्तत्वात्॥

**सारूप्यम्** 'आदित्यो यूपः' आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद् यूपेऽप्यस्ति, घृताऽक्तस्य यूपस्य तेजस्वित्वाऽध्यवसायात्, ततः आदित्यशब्देन यूपः स्तूयते। एवं 'यजमानो यूपः' इत्यत्र चक्षुर्गम्यस्य ऊर्ध्वत्वस्य समानत्वात् यजमानशब्देन यूपः स्तूयते। सारूप्यनिमित्तंगौणत्वम्। गुणवादात् सामानाधिकरण्यम्। को गुणः?। सारूप्यम्, किं सारूप्यम्?, ऊर्ध्वता, तेजस्विता च॥ तस्मादेवंजातीयका अर्थवादाः॥

**प्रशंसा**—प्रशंसानिमित्तत्वं गुणवादस्योक्तम्। 'अपशवो वाऽन्ये गोऽश्वेभ्यः' पशवो गोऽश्वा इति। 'अयज्ञो वा एष योऽसामा' 'असत्रं वा एतत् यद् अच्छन्दोमम्' इतिश्रूयते। अत्र ते विधयो यदि भवेयुः गो अश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम्, अन्येषां पशूनां यज्ञानां सत्राणां चोत्पत्तिरनर्थिका स्यात्, विध्यन्तरं च नाऽवकल्प्येत। अतः स्तुत्यर्थं सम्वादः। गोऽश्वान् प्रशंसितुम् अन्येषां पशूनां निन्दा, सामवतः प्रशंसितुम् असाम्नां निन्दा। छन्दोमवन्ति प्रशंसितुम् अच्छन्दोमकानि निन्द्यन्ते। यथा यद् अघृतम् अभोजनं तत्, यन्मलिनम् अवासस्तत्। इति। अजातिपशुविधिवैयर्थ्यप्रसंगेन निषेद्धमशक्यत्वात् अपशुशब्दः पशुव्यतिरिक्तं घटादिपदार्थजातमभिदधाति, तस्मिन् घटादौ गवाश्ववत् प्राशस्त्यं नास्ति, प्राशस्त्याऽभावोऽजादिषु पशुष्वस्तीत्यभिप्रायेण पशव एव सन्तोऽप्यजादयो घटादिसाम्यादपशुशब्देन लक्ष्यन्ते। पूर्वत्र यजमानकार्यसिद्धिः, आग्नेये मुखजन्यत्वम्, आदित्यवत् तेजस्वित्वं च यजमानादिशब्दानां प्रस्तराद्यर्थेषु प्रवृत्तिनिमित्तम्, तत्प्रवृत्तिफलं प्रस्तरादिप्रशंसा। इह तु अपशुशब्दस्याऽजादिषु

प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलं च। द्विप्रकारा हि प्रशंसा—वस्तुनि विद्यमानगुणोत्कर्षरूपा, स्तावकेन शब्देन सम्पादितगुणोत्कर्षरूपा च। गवाश्वयोरजादिभ्य उत्कर्षः सोऽत्र लोकसिद्धो निमित्तम्। 'अजादयः स्वभावतः पशवोऽपि सन्तः गवाश्वौ प्रति अपशवः सम्पन्नाः, ईदृशो गवाश्वयोर्महिमा' इति स्तुतिफलम्। 'अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वात् अयज्ञो भवति, ईदृशः साम्नो महिमा। छन्दोगशब्देन चतुर्विंशः, चतुश्चत्वारिंशः, अष्टचत्वारिंशः, इत्येते स्तोमा उक्ताः, अक्षरसंख्यासाम्येन गायत्रीत्रिष्टुप्-जगतीछन्दोभिर्गीयमानत्वात्। तेषां विष्टुतिः सामब्राह्मणे दर्शिता, अतः सत्रमपि चतुर्दशरात्रादिकं छन्दोगरहितत्वात् असत्रं भवति, ईदृशः छन्दोगानां महिमा। इत्येवं स्तावकत्वात् अर्थवादत्वम्॥

**भूमा**—भूमत्वं व्याप्तिमत्त्वं योग्यभूमिषु। 'अग्निचयने श्रूयते—'सृष्टीरुपदधाति'। सृष्टिशब्दोपेता मन्त्रा यासामिष्टिकानामुपधाने विद्यन्ते ता इष्टिकाः सृष्टयः, 'सृष्टिमान् आसाम् उपधानो मन्त्रः' इति विगृह्य 'तद्वानासामुपदधानः (पा० सू० ४।४।१२५) इत्यादिव्याकरणसूत्रसिद्धप्रक्रियया तन्निष्पादनात्। सृष्टिशब्दोपेताश्चोपधानमन्त्राः 'एकयाऽस्तुवत' इत्यनुवाके समाम्नाताः 'ब्रह्माऽसृज्यत, भूतान्यसृज्यन्त' इति सृजतिधातोः तत्र प्रयुक्तत्वात्॥ ते मन्त्रा अग्निचयनप्रकरणे पठिताः, सामान्यतश्चयनसम्बन्धवन्तो विशेषतः सम्बन्धस्तेषां सृजतिलिंगात्। ते मन्त्रा अत्र न विधीयन्ते किन्तु तान्मन्त्राननूद्य इष्टिकोपधानं विधीयते। सृष्टिशब्देनाऽनुवादस्तु वक्ष्यमाणाऽर्थवादोपपत्त्यर्थः। 'यथासृष्टमेवाऽवरुन्धे' इत्यर्थवादः। यदि विधिवाक्ये मन्त्राणामनुवादकः सृष्टिशब्दो न स्यात् तदानीमर्थवादे सृष्टिशब्दप्रयोगात् विध्यर्थयादयोर्वैयधिकरण्यभ्रमः स्यात्। तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः, किन्त्वर्थवादः। यद्यपि प्रथममन्त्रे दधातिधातुप्रयोगः 'एकयाऽस्तुवत 'प्रजाः अधीयन्त' इति। तथापि द्वितीयतृतीयादिबहुमन्त्रेषु सृजतिप्रयोगात् भूमरूपं सादृश्यमस्ति, यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि तत्र यथा सृष्टिभूमता, तथाऽत्राऽपि भूमगुणयोगेन सृष्टचसृष्टिसंघे सृष्टिशब्दप्रयोगः। भूम्ना व्यापकत्वेन बहुत्वेन सृष्टिलिंगा मन्त्राः, अल्पशस्तुविलिंगा इति। असृष्टिषु सृष्टिषु च सृष्टिशब्दो लाक्षणिकः॥

'प्राणभृत उपदधाती'त्यत्र अयं प्रथममन्त्र एव प्राणभृल्लिंगमाम्नायते, अयं पुरोभुवस्तस्य प्राणो भौवायनः, एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि 'छत्रिणो यान्ती'तिवत् सत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते॥ 'अक्ताः शर्करा उपदधाती'ति 'तेजो वै घृतमि'त्यत्र मृत्तिकामिश्राः क्षुद्रपाषाणाः

शर्कराः घृतेनाऽञ्जनीयाः, वधेरुन्नेयत्वात्। 'तेजो वै घृतमि'त्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वाद् विधेयत्वं गम्यते, घृतेनाऽक्ताः इति स्तूयते च विधीयते 'घृतेनाऽञ्जनमिति ॥ 'स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेनाऽवद्यती'ति श्रूयते, तत्र द्रवद्रव्यस्याऽऽज्यस्य स्रुवो योग्यः, छेदनीयपललस्य शस्त्रविशेषः स्वधितिः, सहेतस्य पुरोडाशस्य हस्तः इति स्रुवाद्याः सहकारिण्यः शक्त्या व्यवस्थिताः ॥

'वैदिककर्मकाण्डेऽनुष्ठानक्रमोऽपूर्वजनकः। अनेन क्रमेण कर्तव्यम्' इति-क्रियाविशेषणतया क्रमो विधीयताम्। 'दध्ना जुहोति' दधिसाधनकं होमं कुर्यात् इतिश्रुत्या क्रमः ॥ 'यवाग्वाऽग्निहोत्रं जुहोती'ति तत्रार्थतः क्रमो भवति नतु पाठतः क्रमः। 'वसन्तमृतूनां प्रीणामि' 'ग्रीष्ममृतूनां प्रीणामी'त्यादौ वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेन क्रमेण पठितानां शाखान्तरे व्यत्ययनेन पाठदर्शनात् नास्ति तत्र नियतः क्रमः। क्वचित् 'समिधो यजति' 'तनूनपातं यजती'त्यादौ वाक्यपाठेन प्रतीतस्य क्रमस्याऽभ्युपेयत्वात् अस्ति क्रमनियमः पाठक्रमनियमः। क्वचित्प्रथमप्रवृत्त्यनुसारी क्रमः—वाजपेये 'सप्तदशप्राजापत्यान् पशून् आलभते' इति विहितानां पशूनाम् उपाकरणनियोजनाऽऽलभन-संस्काराः यस्मात्पशोरारभ्य क्रियन्ते तस्मादेव सर्वे संस्काराः क्रमशः कर्तव्या भवन्ति, तेन यथासंख्यं व्यवधानम्, अन्यथा विक्रमे भावे तु द्वात्रिंशद्भिर्वा न्यूनसंख्यैर्वा बहुप्रकारं व्यवधानमापद्येत, तन्नाऽभ्यनुज्ञातम्। अतः प्रवृत्या क्रमो नियम्यते ॥

स्थानाऽनुसारी क्रमः—साद्यस्क्राख्ये सोमयागे 'सह पशूनां लभते'इति-श्रूयते, तत्र प्रकृतौ अग्नीषोमीयः पशुरौपवसथ्ये पूर्वदिने आलभ्यते, सवनीयः पशुः सुत्यादिने प्रातःसवने आश्विनग्रहादूर्ध्वमालभ्यते, अनुबन्ध्यपशुरवभृथा-दूर्ध्वमालभ्यते'। इह तु त्रयोऽपि पशवः सहाऽऽलब्धव्याः, सहाऽऽलम्भः सुत्या-दिने आश्विनग्रहादूर्ध्वं सवनीयस्थाने भवति, इतिस्थानाऽनुसारी क्रमः, पूर्वाऽन्त्योर्मध्ये समव्यवधानस्य बुद्धिस्वागतीकृतत्वात् ॥

मुख्यक्रमानुसारी अंगक्रमः, हौत्रकाण्डे चित्राया स्त्रीदेवतायाः पूर्वं याज्याऽनुवाक्ये समाम्नाते, 'प्राणो देवी सरस्वती'। पश्चात्पुंदेवतायाः 'पीपिवांसं सरस्वतः' इति। अनेन याज्यानुवाक्याक्रमेण मुख्ययागयोः मध्ये स्त्रीयागस्य प्रथमं निर्वापः कार्य इति ॥

अंगेषु मुख्यक्रमाऽपेक्षया पाठस्य बलवत्त्वम्,—दर्शपूर्णमासयोः उपांशु-याजोऽग्नीषोमीयश्चेत्युभयं पौर्णमास्यायामाम्नातम्। उपांशुयागस्याऽऽज्यं द्रव्यम्, आज्यधर्मा उत्पवनाऽऽधारणचतुर्गृहीतत्वादयः, अग्नीषोमीयस्य

पुरोडाशो द्रव्यम् , तस्य धर्मा निर्वापाऽवघातादयः । तत्र मुख्ययागौ उपांशुयाजाऽग्नीषोमीयौ पूर्वोत्तरभाविनौ । औषधधर्मा निर्वापादयः पूर्व-माम्नाताः, पश्चादाज्यधर्माः, तत्र मुख्यक्रमप्रयुक्तमाज्यधर्माणां प्राथम्यं बाधित्वा पाठक्रमानुसारेण ओषधधर्मा एव प्रथममनुष्ठेयाः । तदूर्ध्वमाज्यधर्मा अनुष्ठेया इति ।

ब्राह्मणपाठान्मन्त्रपाठो बलीयान् , प्रयोगवचनात् चोदकवाक्यं बलीयः, प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताऽनुष्ठानम् , 'नामरूपधर्मविशेष-पुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः' ( २।४।२।८ ) । विधिमन्त्रनामधेयनिषेधाऽर्थवादेतिपञ्चधा वेदः । 'हेतुनिर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पना ।। उप-मानं दशैते तु विधयो ब्राह्मणस्य तु । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्ष-णम्' 'कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्' ।।

अथ—**अपूर्वम्**—पुण्यं कृतकर्मद्वारमनुष्ठानजन्यमिष्टप्रदं सुखाऽसाधारण-सम्पादकम् । आत्मगुणः । 'दर्शपूर्णमासाभ्यां यजेते'तितृतीयाश्रुत्या यागस्य स्वर्गसाधनत्वं प्रमीतम् । यागे क्षणिकतायाः प्रत्यक्षसिद्धत्वात्, मृतयोर्दम्पत्योः पुत्रोत्पत्त्यदर्शनात् कालान्तरभाविफलसम्बन्धरूपमात्मनि द्वारमपूर्वमुभयानु-योगिप्रतियोगिस्वरूपं धर्माद्यात्मकमदृष्टमपूर्वं कल्पनीयमिति ज्यायः । यागाऽवान्तरव्यापारोऽपूर्वम् । व्यापारवतो यागस्य नाशे व्यापारोऽदृष्टमव-तिष्ठते, यागजन्या काचिच्छक्तिर्वाऽपूर्वमस्तु कुठारे उद्यमनादिव्यापारेऽकृते कृतेऽपि वा छेदनशक्तिरस्तीतिवत् । शक्तिः फलसाधनत्वे न बाधिका वह्ना-वुष्णत्वशक्तिर्दाहकत्वे इव । अंगारजन्यमौष्ण्यं जले इव यागजन्यमपूर्वम् आत्मनि तिष्ठेदेव । अपूर्वं शास्त्रसिद्धम् , आनुमानिकमपि, अर्थापत्त्यादि-गोचरमपि, 'यजेते'ति 'यागेन स्वर्गं कुर्यादि'ति फलवाक्येन यागे फलसाधनता बोध्यते । 'कथं विनश्वरेण विप्रकृष्टं फलं कर्तव्यम्' इत्यपेक्षायाम् 'अपूर्वं कृत्वे'ति द्वारं बोध्यते । 'कथमपूर्वं कर्तव्यमि'त्यपेक्षायां 'यागाऽनुष्ठानप्रका-रेणे'तियागानुष्ठानादि बोध्यते । अनुष्ठानसमावपि यत् स्वर्गसुखादिसम्बन्ध-वत् । स्वर्गादिविषयाकृतितन्मयं तत्त्वं सूक्ष्माऽतिसूक्ष्ममपि विशालं स्वर्गं स्वव्यूहे धारकं व्यापकं द्रव्यस्वरूपमनुवर्तते तत् अपूर्वमदृष्टं पुण्यं धर्म इति च शास्त्रेण निर्दिष्टम् । धर्मः स्वं पश्यतीति दिव्यदृशां गोचरम् । तद् यावद्व्यू-हितसमूहिताऽनुष्ठानानि तावत्तत्तदनुष्ठानोत्थं शारीरमानसक्रियाव्यापारोत्थं चिरव्यापारात्मकं बहुविधं प्रतिक्षणीयवृष्ट्युत्थजलपलाञ्जलिपल्वलसरो-वरादिवत् संक्षेपात् अंगाऽपूर्वमुत्पत्त्यपूर्वं समुदायाऽपूर्वं फलाऽपूर्वं चेति, यद्वा

स्वल्पाऽपूर्वं मध्याऽपूर्वं परमाऽपूर्वं चेति शास्त्रादिप्रमाणेन निर्णीयते । येन स्वर्ग आरभ्यते तत् फलाऽपूर्वम् , अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यामपरः समुदायः तयोर्भिन्नकालवर्तिनोः संहृतत्वाऽयोगेन समुदायद्वयजन्यं समुदायद्वयाऽपूर्वं कल्पनीयम् । तयोः समुदाययोरेकैकसमुदायार्थं समुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तितया संघाताऽयोगात् यागत्रयजन्यानि त्रीणि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि। त्रयाणां त्रयाणामप्येषां तत्तदंगोपकारमन्तरेणाऽनिष्पत्तेः तत्तदंगानामनेकक्षणवर्तिनां संघाताऽयोगात् विभिन्नान्यंगाऽपूर्वाणि कल्पनीयानि । सन्निपत्योपकारकाणि प्रोक्षणाऽवघाताहीनि द्रव्यदेवतासंस्कारद्वारा यागस्वरूपस्यैवाऽतिशयाऽऽधानेनाऽपूर्वदानेन । तत्तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते । तद्द्वारेण फलाऽपूर्वे आराद्उपकारकाणि प्रयाजाऽनुयाजोपांशुयाजानि । उत्पत्त्यपूर्वेभ्यः फलाऽपूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते । प्रकारभेदे सत्यपि सर्वाण्यंगानि अपूर्वनिष्पत्तावनुग्राहकाणि भवन्तीत्येकरूपेणेत्थंभावेन स्वीक्रियन्ते । कानिचिदपूर्वजनकानि कानिचिदपूर्वजनने प्रतिबन्धकानामुत्सारणसाहाय्यकराण्यपि तादृशपरम्परयाऽपूर्वजननोपकारवन्ति नियोगवन्त्यपि कर्माणि भवन्ति ॥

## अथ यज्ञाः

१ दर्शपूर्णमासौ यज्ञौ
२ प्रयाजयागः
३ अनुयाजयागः
४ उपांशुयागः
५ स्विष्टकृद्यागः
६ पत्नीसंयाजयागः
७ पिण्डपितृयज्ञः
८ हृदयाद्यंगयागः
९ पशुयागः
१० चातुर्मास्यानि
११ वैश्वदेवपर्व
१२ वरुणप्रघासपर्व
१३ साकमेधपर्व
१४ महापितृयज्ञः
१५ आग्रयणेष्टिः
१६ सोमयागः
१७ अवभृथेष्टिः
१८ अतिरात्रसंस्था
१९ अत्यग्निष्टोमसंस्था
२० वाजपेयसंस्था
२१ आप्तोर्यामसंस्था
२२ वायव्यपशुयागः
२३ सौत्रामणियागः
२४ राजसूययज्ञः
२५ अश्वमेधयज्ञः
२६ सर्वमेधयज्ञः
२७ महारुद्रयज्ञः
२८ पुरुषमेधयज्ञः
२९ गोमेधयज्ञः
३० नरमेधयज्ञः
३१ ज्योतिष्टोमयागः
३२ विश्वजिद्यागः

३३ अग्निष्टोमयागः
३४ अग्निहोत्रहोमः
३५ कारीरीयज्ञः
३६ श्येनयागः
३७ विष्णुयागः
३८ महाविष्णुयागः
३९ पवमानेष्टिः
४० ऐन्द्रयागः
४१ वारुणयागः
४२ नारायणबलिः
४३ सान्नाययागः
४४ दधियागः
४५ पयोयागः
४६ प्रतिष्ठायागः
४७ वास्तुहोमः
४८ नवान्नयागः
४९ अन्त्येष्टिः
५० रुद्रयागः
५१ खलेयज्ञः
५२ वैश्वानरपार्जन्येष्टिः
५३ आग्नेययागः
५४ सौम्ययागः
५५ सावित्रयागः
५६ सारस्वतयागः
५७ पौष्णयागः
५८ मारुतयागः
५९ द्यावापृथिव्ययागः
६० आतिथ्येष्टिः
६१ प्राजापत्येष्टिः
६२ देवयज्ञः
६३ ऋषियज्ञः
६४ भूतयज्ञः
६५ दीक्षणीयेष्टिः
६६ सर्पसत्रम्
६७ पौण्डरीकयागः
६८ इष्टापूर्वहवनम्
६९ अस्थियज्ञः
७० काम्येष्टिः
७१ अवेष्टिक्रतुः
७२ उद्भिद्यागः
७३ गृहमेधीयः
७४ चित्रायागः
७५ अभ्युदयेष्टिः
७६ नानाबीजेष्टिः
७७ पशुकामेष्टिः
७८ रात्रिसत्रम्
७९ सर्वपृष्ठेष्टिः
८० सांग्रहणीष्टिः
८१ साद्यस्क्रयागः
८२ विवाहयज्ञः
८३ जीवदिष्टिः
८४ नवग्रहेष्टिः
८५ वारुणेष्टिः
८६ वैमृधेष्टिः
८७ बृहस्पतिसवः
८८ वैश्वानरेष्टिः
८९ अनुमतियागः
९० नैर्ऋतियागः
९१ आदित्ययागः
९२ आग्नावैष्णवयागः
९३ कुलाययज्ञः
९४ अभिजिद्यागः
९५ पृष्ठशमनीययागः
९६ व्यूढः सव्यूढः क्रतुः
९७ द्वादशाहेष्टिः
९८ निषादस्थपतियजनम

९९ भैरवेष्टिः
१०० महाचण्डीहोमः
१०१ अदृश्यीकरणहोमः
१०२ अभिचारार्थहवनम्
१०३ ऋतपेयेष्टिः
१०४ उपहव्ययागः
१०५ इषुयागः
१०६ सर्वस्वारः क्रतुः
१०७ अध्वरकल्पेष्टिः
१०८ नक्षत्रेष्टिः

## फलकामनाविधयः

१ 'कारीर्या वृष्टिकामो यजेत'
२ 'अग्निहोत्रं जुहुयात् स्वर्गकामः'
३ 'वायव्यं श्वेतमालभेत भूतिकामः'
४ 'ऊर्जैर्वाऽस्मै ऊर्जं पशूनाप्नोति'
५ 'चित्रया यजेत पशुकामः'
६ 'उद्भिदा यजेत पशुकामः'
७ 'श्येनेनाऽभिचरन् यजेत'
८ 'गवाऽभिचरन् यजेत'
९ 'शरदि वाजपेयेन स्वाराज्यकामो यजेत'
१० 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते'
११ 'यदष्टाकपालो भवति गायत्र्यैवेनं ब्रह्मवर्चसेन पुनाति'
१२ 'यन्नवकपालस्त्रिवृतैवाऽस्मिन् तेजो दधाति'
१३ 'यद् दशकपालो विराजैवाऽस्मिन्नन्नाद्यं दधाति'
१४ 'यदेकादशकपालस्त्रिष्टुभैवाऽस्मिन्निन्द्रियं दधाति'
१५ 'यद् द्वादशकपालो जगत्यैवाऽस्मिन् पशून् दधाति'
१६ 'यस्मिञ्जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति'
१७ 'देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह'
१८ 'विष्णुरुपांशो योऽष्टव्यजामित्वाय'
१९ 'दध्नेन्द्रियकामस्य जुहुयात्'
२० 'अग्निष्टोमसाम कृत्वा ब्रह्मवर्चस्कामो यजेत'
२१ 'अग्निष्टोमसामकृत्वा पशुकामो यजेत'
२२ 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः सः सौभरेण स्तुवीत'
२३ 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊः इति स्वर्गकामाय'
२४ 'दाक्षायणयज्ञेन स्वर्गकामो यजेत'
२५ 'साकंप्रस्थाप्येन यजेत पशुकामः'
२६ 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः'
२७ 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' ( रुक्-तेजः )।
२८ 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः'
२९ 'एतया अन्नाद्यकामं याजयेत्'
३० 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां वाऽच्युतो भवति'

३१ 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति'

३२ 'यदाहवनीये जुहोति तेन सोऽस्याऽभीष्टः प्रीतः'

३३ 'अग्निर्वृत्राणि जङ्घनत्'

३४ 'अग्निरिदं हविरजुषत अवीवृधत महोज्यायोऽकृत'

३५ 'ऐन्द्रमेकादशकपालं निर्वपेत् यस्य सजातावीयुः'

३६ 'ऐन्द्रमेकादशकपालं निर्वपेत् भ्रातृव्यवान्'

३७ 'यं काययेत राजन्यम् अनयोद्धो जायेत वृत्रान् घ्नंश्चरेत्, तस्मै एनमैन्द्राबार्हस्पत्यं चरुं निर्वपेत्'

३८ 'भक्षेहि, अश्विनोस्त्वा बाहुभ्यां सध्यासम्, नृचक्षुषं त्वा देव सोम सुचक्षुषा, भक्षेहि मा विश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय'

३९ 'दब्धिरस्यदब्धो भूयासम् 'अमुं दभेयम्' 'एतया वै दब्ध्या देवा असुरान् अदभ्नुवन्, तयैव भ्रातृव्यं दभ्नोति'

४० 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशु`' (इन्द्र घातको न भवति यजमानाय प्रियसे।

६२ 'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्तापं (ज्वरं) लोकं मे लोककृतौ कृणुतम्'

६३ 'यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु यष्टव्याः'।

६४ 'नेक्षेतोद्यन्तमादित्यमि'त्येतावता ह एनसा मुक्तो भवति'

६५ 'यदाऽङ्क्ते चक्षुरेव भ्रातृव्यस्य वृंक्ते'

६६ 'यत्प्रयाजाऽनुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्याऽभिभूत्यै'

६७ 'मृण्मयेन प्रतिष्ठाकामस्य प्रणयेत्'

६८ 'दघ्नेन्द्रियकामस्य जुहुयात्'

६९ 'खादिरं वीर्यकामस्य यूपं कुर्वीत'

७० 'प्रतिष्ठाकामो रात्रिसत्रं कुर्यात्'

७१ 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'

७२ 'चतुर्विंशतिमनुब्रूयाद् ब्रह्मवर्चसकामस्य'

७३ 'यः कामयेत पशुमान् स्यात् बहुपर्णीं तस्मै बहुशाखामाहरेत्, पशुमन्तमेवैनं करोति'

७४ 'एकस्मै वाऽन्या इष्टयः कामायाऽऽह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ'।

७५ 'एकस्मै वाऽन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः'।

७६ 'ऐन्द्रमेकादशकपालं निर्वपेत् प्रजाकामः'

७७ 'एष वै देवरयो यद्दर्शपूर्णमासौ, यो दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजते रथस्पृष्ट एवाऽवसाने चरेद् देवानामवस्यति' (सुकरं कार्यं भवति)

७८ 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते, यस्मिञ्जाते एतामिष्टिं निर्वपति, पूत एव तेजस्वी अन्नाद इन्द्रियावी पशुमान भवति'

७९ 'राजा राजसूयकामो राजसूयेन यजेत'

८० 'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकामः'

८१ 'यां वै कांचिदध्वर्युर्यजमानश्च देवतामन्तरीताः, तस्या आवृश्च्येते, यत्प्राजापत्यं दधिग्रह गृह्णाति, शमयत्येवैनाम्' ।

८२ 'यो वै सम्वत्सरमुख्यम् अमृत्वाऽग्निं चिनुते, यथा सामि गर्भो विपद्यते, तादृगेव तदार्तिमार्च्छेत्, वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्'

८३ 'सम्वत्सरो वा एनं प्रतिष्ठायै नुदते, योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं तनुते'

८४ 'रेवतीषु वारवन्तीयं यजेत पशुकामः'

८५ 'अग्नये कृत्तिकाभ्यः पुरोडाशम् अष्टाकपालम्, अग्निर्नः पातु कृत्तिकाः'

८६ 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः'

८७ 'रुक्ममन्तरं प्रतिमुञ्चतेऽमृतमेव मृत्योरन्तर्दधे'

८८ 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'

८९ 'एकविंशेनाऽतिरात्रेण प्रजाकामं याजयेत् , 'त्रिणवेनौजस्कामं, 'त्रयस्त्रिंशेन प्रतिष्ठाकामम्' ।

९० 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनाऽनिष्ट्वा अथाऽन्येन यजेत गर्तपतितमेव हि तत् जीर्येत प्रवा मीयते'

९१ 'वसन्तेन ब्रह्मवर्चस्कामः यजेत'

९२ 'ऋद्धिकामाः सत्रमासीरन्'

९३ 'मौद्गं चरुं निर्वपेच्छ्रीकामः'

९४ 'अथ यस्य पुरोडाशौ क्षायतः, तं यज्ञं वरुणो गृह्णाति, यदा तद्धविः सन्तिष्ठेत, अथ स तदेव हविर्निर्वपेत् , यज्ञो हि यज्ञस्य प्रायश्चित्तिः'

९५ 'यस्योभयं हविरार्त्तिमार्च्छेत् , ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्'

९६ 'यस्योभावग्नी अनुगतावभिम्लोचेयातां, सूर्यो वाऽभ्युदीयात्, पुनराधेयं तस्य प्रायश्चित्तिः'

९७ 'यः सत्रायाऽऽगूरते स विश्वजिता यजेत'

९८ 'अश्वमेधे वसन्ताय कपिञ्जलानालभते'

९९ 'यदि सत्राय दीक्षितानां त्तिष्ठासेत् , सोमं विभज्य विश्वजिता यजेत'

१०० अनेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्'

१०१ 'अथैतस्याऽष्टरात्रस्य विश्वजिदभिजितावेकाहावभितः, उभयतो ज्योतिः, मध्ये षडहः, पशुकामो ह्येतेन यजेत'

१०२ 'प्रजाकामं चतुर्होत्रा याजयेत्'

१०३ 'यो ब्रह्मचारी अवकिरेत् स गर्दभं पशुमालभेत'

१०४ 'वार्त्रघ्नानि वा एतानि हवींषि'
१०५ 'यन्विषु यूपेषु आलभेत, बहिर्वाऽस्मादिन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्मै जनयेदेकयूप आलभेत'
१०६ 'द्वादशाहेन प्रजाकामं याजयेत्'
१०७ 'द्वादशाहम् ऋद्धिकामा उपेयुः'
१०८ 'द्वादशाहम् ऋद्धिकामा आसीरन्'
१०९ 'त्रयोदशरात्रम् ऋद्धिकामा उपेयुः'
११० 'चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्'
१११ 'य एव भूतिकार्यमिच्छन्तः, यज्ञे यं काममिच्छन्ति त एनं पञ्चदशरात्रमुपेयुः'
११२ 'भतिकामा उपेयुः'
११३ 'अयं यजमान आयुराशास्ते'
११४ 'यज्ञायज्ञीयेन स्तुवीत'
११५ 'यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेय, स एतामविं वशामादित्येभ्यः कामायाऽऽलभेत'
११६ 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्'
११७ 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः'
११८ 'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान्, तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेत्,-इदमहममुं च व्यूहामि,। 'यं द्विष्यात्तं ध्यामन् यदधो विसृज्येद्यच्च स्फ्य आश्लिष्येत् तद् विष्णव उरुक्रमायाऽवद्येत्,। देवताभ्यो वा एष आवृश्च्यते, यो यक्ष्ये इत्युक्त्वा न यजते'
११९ 'सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकामः'
१२० 'अग्नये कामायाऽष्टाकपालं निर्वपति'
१२१ 'आशास्तेऽयं यजमानोऽसौ आयुराशास्ते सुप्रजास्त्वमाशास्ते'
१२२ 'यं कामयेत वशीयान् स्यात्, उच्चैस्तरां तस्य वषट्कुर्यात्'
१२३ 'यं वै काश्चन यज्ञे ऋत्विज आशिषमाशास्ते यजमानायैव तामाशिषमाशासते'
१२४ 'मरणकामो ह्येतेन यजेत, यः कामयेताऽनामयः स्वर्गं लोकमियाम्, आर्भवे स्तूयमान औदुम्बरीं दक्षिणेन देशेनाऽऽहतेन वाससा परिवेष्टय, ब्राह्मणाः, समापयत मे यज्ञमिति सम्प्रेक्ष्य सम्विशति' ( अग्निं प्रविशति )
१२५ 'सौमारौद्रं घृते चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्'
१२६ 'एकविंशेनाऽतिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्'
१२७ 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'
१२८ 'ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीयात्, यः कामयेत यथापूर्वं प्रजाः कल्पेरन्'
१२९ 'शुक्राग्रान् ग्रहान् गृह्णीयात्, अभिचरतो मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य'

१३० 'धारयेयुस्तं, यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्'

१३१ 'यः कामयेत बहु स्यां प्रजायेय, व्यूढं क्रतुं कुर्यात्'

१३२ 'पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत' अयुत पुण्डरीके दद्यात्, अश्वसहस्रमेकादशम्'

१३३ 'सौमारुद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः'

१३४ 'श्येनचितिं चिन्वीत स्वर्गकामः'

१३५ 'यः कामयेत उत्तरं वसीयान्, श्रेयान् स्याम्, तस्याऽग्नये पवमानाय निरूप्याऽथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्'

१३६ 'यन्व्रीहिमयः पुरोडाशो भवति, अपिहित्या अच्छिद्रतायै'

१३७ 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वतेत् यो रक्षोभ्यो बिभीयात्'

१३८ 'दधि मधु घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकामः'

१३९ 'वृक्षाग्राज्ज्वलतः ब्रह्मवर्चसकामस्याऽऽहृत्याऽऽवदध्यात्'

१४० 'नक्तमाहवनीयं धारयति नित्यं गतश्रियः'

१४१ 'भ्राष्ट्रादन्नाद्यकामस्य, वैद्युदाद्वृष्टिकामस्य (अग्निमाऽऽहृत्याऽऽदध्यात्)

१४२ 'कंकचितं चिन्वीत शीर्षचितं चिन्वीत यः कामयेत सुशीर्षाऽस्मिंल्लोके सम्भवेयम्'

१४३ 'रक्षोहणो वलगहनो वैष्णवान् खनामि'

१४४ 'पञ्चशारदीयोऽहीनः, यः कामयेत बहु स्यामिति स एतेन यजेत'

१४५ 'मांसीयन्ति ह वा एतस्याऽजुह्वतोऽग्नये यजमानस्य, ते यजमानमेव ध्यायन्ति यजमानं संकल्पयन्ति पचन्ति ह वाऽन्येषु वृथा मांसम्'

१४६ 'एकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेत'

१४७ 'चातुर्मास्यैः स्वर्गकामो यजेत'

१४८ 'सौमारुद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः'

१४९ 'नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणाम्'

१५० 'यस्य खादिरः स्रुवो भवति सः छन्दसामेव रसेनाऽवद्यति सरसा अस्याऽऽहुतयो भवन्ति'

१५१ 'यस्याऽश्वत्थी उपभृद्भवति ब्रह्मणैवाऽन्नमवरुन्धे'

१५२ 'यस्य वैकंकती ध्रुवा भवति प्रत्येवाऽस्याऽऽहुतयस्तिष्ठन्ति'

१५३ 'यस्यैवंरूपाः स्रुवो भवन्ति सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते नाऽस्याऽपरूपमात्मञ्जायते'

१५४ 'पालाशं ब्रह्मवर्चसकामस्य यूपं कुर्यात्, बौल्वमन्नाद्यकायस्य'

१५५ 'गोदोहतेन पशुकामस्य प्रणयेत' कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य'

१५६ 'वास्तुमध्ये रौद्रं चरुं निर्वपेत् यत्र रुद्रः प्रजाः शमयेत्, निषादस्थपतिं याजयेत्'
१५७ 'इदं कामो यजेत'
१५८ 'भिन्ने जुहोति स्कन्ने जुहोति'
१५९ 'वि वा एतं प्रजया पशुभिरर्थयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदीयात्'
१६० 'यदि बिभीयात् अभिमोदेष्यतीति, महारात्रे हवींषि निर्वपेत्'
१६१ 'पशुकामो ह्येतेन (विश्वजिता) यजेत्'
१६२ 'वाजिनो यजन्त्याहुतीनां सम्पत्त्यै त्रिंशत्त्वाय'
१६३ 'पूर्णाहुत्या सर्वान्कामानवाप्नोति'
१६४ 'पशुबन्धयाजी सर्वाल्लोकानभिजयति'
१६५ 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते'
१६६ 'यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत'
१६७ 'य उ चैनमेवंवेद तरति मृत्युम्'
१६८ 'अथैषः संदंशेनाऽभिचरन् यजेत्'
१६९ 'अथैषो गवाऽभिचरन् यजेत'
१७० 'इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याशीर्यज्ञस्य भूयात्'
१७१ 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः सः सौभरेण स्तुवीत'
१७२ 'दाक्षायणयज्ञेन यजेत प्रजाकामः'
१७३ 'संक्रमयज्ञेन यजेताऽन्नाद्यकामः'
१७४ 'भक्षे हि मा विश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय'
१७५ 'वैल्वो ब्रह्मवर्चसकामेन कर्तव्यः'
१७६ 'वज्रो वै यूपो यदन्तर्वेदि मिनुयात् तन्निर्दहेत्, यद्बहिर्वेदि अनवरुद्धः स्यादन्तर्वेदि मिनोत्यर्धं बहिर्वेदि अनवरुद्धो भवति न निर्दहति
१७७ 'द्व्यहं नाऽश्नाति त्र्यहं नाऽश्नाति ( यजमानः ) यदा वै पुरुषे न किञ्चिदन्तर्भवति ( मलं ) यदाऽस्य कृष्णं चक्षुषो नश्यति अथ मेध्यतमः'
१७८ 'उद्गाता आत्मने वा यजमानाय यं कामं कामयते तमागायति'
१७९ 'अनतिदृश्यं स्तृणाति अनतिदृश्यमेवैनं प्रजया पशुभिः करोति'
१८० 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, वत्सजानुं पशुकामस्य वेदं कुर्यात्'
१८१ 'यस्य हिरण्यं नश्येत् आग्नेयादीनि निर्वपेत्'
१८२ 'अग्नये भगिनेऽष्टाकपालं यः कामयेत भगी अन्नादः स्यामिति'
१८३ 'मारुतं चरुं निर्वपेत् प्रश्नीनां दुग्धे प्रैयंगवंग्रामकामः'
१८४ 'यावत्या वाचा कामयेत

नावत्या दीक्षणीयायाम् अनुश्रूयात्'

१८५ 'नृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति'

१८६ 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलम् आयुष्यकामः'

१८७ 'वारुणं कृष्णमयां चौषधीनां सन्धावन्नकामः आलभेत'

१८८ 'प्रजाकामाः गवामयनमुपेयुः'

१८९ 'मरणकामो ह्येतेन यजेत'

१९० 'योऽग्नीनाधाय भाग्यजयाग्नि वा जीयेत स पुनरादधीत'

१९१ 'हुताद्याय यजमानस्याऽपराभवाय नवानामैन्द्राग्नः'

१९२ 'यः षोडशी गृह्येत इन्द्रियमेव वीर्यमात्मन् धत्ते'

१९३ 'आश्विनाऽग्रान्ग्रहानामयाविनः शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रहान् गृह्णीयादभिचर्यमाणस्य'

## विधिवाक्यानि

१ 'स्वाध्यायोऽध्येतव्यः'

२ 'वेदमधीत्य स्नायात्'

३ 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत'

४ 'वायव्यं श्वेतमालभेत'

५ 'शूर्पेण जुहोति'

६ 'अष्टकाः कर्तव्याः'

७ 'औदुम्बरीं स्पृष्ट्वा उद्गायेत्'

८ 'औदुम्बरी सर्वा वेष्टयितव्या'

९ 'वैसर्जनहोमीयं वासोऽध्वयुर्गृह्णाति'

१० 'क्षुत आचामेत्'

११ 'ब्रह्मचर्यमहिंसां चाऽपरिग्रहं च सत्यं च यत्नेन रक्षेत्'

१२ 'यवमयश्चरुर्भवति'

१३ वाराही उपानहौ उपमुञ्चेत'

१४ 'मातुलकन्यापरिणयनमप्रमाणम्'

१५ 'सर्वासु तिथिषु अमावास्या कर्तव्या

१६ 'होलाकासामान्यम्' अप्रमाणम्

१७ 'साधूनेव प्रयुञ्जीत न त्वपभ्रंशम्'

१८ 'एक एव शब्दः सम्यक् ज्ञातः स स्वर्गे लोके कामधुक् भवति'

१९ 'ब्राह्मणेन न म्लेच्छितवै नाऽपभाषितवै'

२० 'ब्राह्मणो न हन्तव्यः'

२१ 'आग्नेयं पशुमालभेत'

२२ 'उद्भिदा यजेत, बलभिदा यजेत'

२३ 'विश्वजिता यजेत' व्रीहिभिर्यजेत'

२४ 'अग्नीषोमीयं पशुमालभेत'

२५ 'वैश्वदेवेन यजेत'

२६ 'अञ्जलिना सक्तून्प्रादाय जुहुयात्

२७ 'आज्यैर्देवं प्रकाशयेत्'

२८ 'वसन्ताय कपिञ्जलानालभेत'

२९ 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्'

३० 'इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्'

३१ 'प्रोक्षणीरासादय, इध्मं बर्हिरुपसादय, अग्नीदग्नीन् विहर, बर्हिस्तृणीहि, इन्द्र आगच्छ, हरीवाऽऽगच्छ'

३२ 'अनेन सहस्रदक्षिणेन यजेत'
३३ 'रेवतीषु ऋक्षु वारवतीयं साम गायेत्'
३४ 'आग्नेयमष्टाकपालं निर्वपेत्'
३५ 'यदि ब्राह्मणो यजेत'
३६ 'वसन्ते ब्राह्मणोऽग्नीनादधीत'
३७ 'वसन्ते ब्राह्मणमुपनयीत'
३८ 'द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये'
३९ 'इषामालभेत'
४० 'त्वाष्ट्रं पात्नीवतमालभेत'
४१ 'अग्निमादधीत'
४२ 'मासं दर्शपूर्णमासाभ्यां यजेत'
४३ 'समे यजेत, पौर्णमास्यां यजेत'
४४ यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'
४५ 'वैकंकतो यज्ञावचरः स्याज्जुहुयादवैतेन'
४६ 'कृत्तिकास्वग्निमादधीत'
४७ 'प्रजापतिर्वाचः सत्यमपश्यन्'
४८ 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति'
४९ 'त्रिराह्वयति त्रिः सत्या हि देवाः'
५० 'व्रतं कृणुत' 'चमसेनाऽऽपः प्रणयेत्'
५१ 'अग्निषोमाविदं हविरजुषेतामविवृधेतां महो ज्यायोऽक्राताम्, इन्द्राग्नी इदं हविरजुषेतामविवृधेतां महो ज्यायोऽक्राताम्'
५२ 'न प्रथमयज्ञे प्रवृञ्ज्यात्, कामं तु योऽनूचानः स्यात् तस्य प्रवृञ्ज्यात्, अग्निष्टोमे प्रवृणक्ति'
५३ 'पौष्णं चरुमनुनिर्वपेत्'
५४ 'प्राचीनाऽवीति दोहयेत्'
५५ 'अधस्तात्समिधं धारयन्ननु द्रवेत्' (प्रेताग्निहोत्रे)'
५६ 'नाऽनृतं वदेत्, सत्यमेव वदेत्'
५७ 'मा हिंस्यात्सर्वा भूतानि'
५८ 'मलवद्वासा न संवदेत्'
५९ 'यो ब्राह्मणायाऽवगूरेत् तं शतेन यापयेत्'
६० 'ब्राह्मणं न विन्देत वल्मीकवपायामवनयेत, शतातृणायामवनयेत्'
६१ 'सप्तदशसामिधेनीरनुब्रूयात्'
६२ 'अखण्डामकृष्णां कुर्यात्' (इष्टिकाः)'
६३ 'व्रीहिभिर्यजेत यवैर्यजेत'
६४ 'यदि सोमं न विन्देत पूतिकानभिषुणुयात्'
६५ 'ज्योतिष्टोमेन यजेत'
६६ चतुर्होत्रा पौर्णमासीमभिमृशेत्'
६७ 'आत्मन्नात्मन्नित्यामन्त्रयत'
६८ 'शमितारमुपनयीत यज्ञम्'
६९ 'य एतामिष्टिकामुपदध्यात्स त्रीन् वरान् दद्यात्'
७० 'प्रोक्षिणीरासादय, इध्माबर्हिरूपसादय, अग्नीदग्नीन् विहर, बर्हिस्तृणीहि'
७१ 'ममाऽग्ने वर्चो विहवेष्वस्तु'
७२ 'संस्थितेऽहनि गृहपतिर्मृगयां याति, पुराडाशस्यरसाः भवन्ति'
७३ 'नेक्षेतोद्यन्तमादित्यम्'
७४ 'प्राचीनप्रवणे वैश्वदेवेन यजेत'

७५ 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाम् अमावास्यया यजेत'

७६ 'प्रतितिष्ठन्ति ह एते, य एता रात्रीरुपयन्ति'

७७ 'उद्भिदा यजेत बलभिदा यजेत, अभिजिता यजेत, विश्वजिता यजेत, विश्वजिता यजेत, वैश्वदेवेव यजेत'

७८ 'अध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीम् अभ्युदानयति, उन्नेता चमसानुन्नयति, प्रस्तोता प्रस्तौति, उद्गातोद्गायति, प्रतिहर्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्यमाह'

७९ 'होता प्रातरनुवाकम् अनुब्रूते, मैत्रावरुणः प्रेष्यति, चाऽनु चाह, अच्छावाको यजति, ग्रावस्तुत् ग्रावस्तोत्रीयामन्वाह,, एतावद्भिः कर्मणि प्रपोनन्' ( सप्तदश ऋत्विजः )

८० 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते ग्रीष्मे माध्यन्दिने सिंहीमैन्द्रीम्' शरद्यपराह्णे श्वेतां बार्हस्पत्याम्' (गर्भिण्यो भवन्ति)

८१ 'ईशानाय परस्वत आलभेत'

८२ 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'

८३ 'अग्निं चित्त्वा सौत्रामण्या यजेत'

८४ 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् गृह्णीयात्'

८५ 'सप्तदश प्राजापत्यान् पशूनालभते'

८६ 'सहपशूनालभते'

८७ 'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्, मरुद्भ्यः सान्तपनेभ्यो माध्यन्दिने चरुम्, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्'

८८ 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्'

८९ 'सोमाय बृहस्पतये श्यामाकं चरुम्'

९० 'द्वादशसु रात्रिषु अनुनिर्वपेत्'

९१ 'अग्निचिद्वर्षति न धावेन्न स्त्रियमुपेयात्'

९२ 'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति, यदेवाऽदः पौर्णमासं हविः तत्तर्ह्यनुनिर्वपेत् तर्ह्युभयदेवतो भवति'

९३ 'सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तून् सूर्क्षेत् न च नक्षत्रम्'

९४ 'वसन्ते वसन्ते ज्योतिषा यजेत'

९५ 'यदैवेनं यज्ञ उपनयेदथाऽऽदधीत'

९६ 'य इष्ट्या पशुना सोमेन वाऽऽग्रयणेन वा यक्ष्यमाणः सोऽमावास्यायां पौर्णमास्यां वा यजेत'

९७ 'गवा यजेत'

९८ 'क्षौमे वसानावग्नी आदधीयाताम्'

९९ 'वास्तुमयं रौद्रं चरुं निर्वपेत्'

१०० 'एतया निषादस्थपतिं याजयेत्'

१०१ 'त्रैधातवीयेन यजेत्'

१०२ 'न कलञ्जं भक्षयेन्न लशुनं न गृंजनम्'
१०३ 'गुरुरनुगन्तव्योऽभिवादयितव्यश्च'
१०४ 'यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'
१०५ 'यस्य सर्वाणि हवींषि नश्येयुः दुःष्येयुः अपहरेयुर्वा, आज्येन ता देवताः परिसंख्याय यजेत'
१०६ 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत'
१०७ 'चतुरहे पुरस्तात् पौर्णमास्या दीक्षरेन्'
१०८ 'चित्रापूर्णमासे दीक्षेरन्'
१०९ 'दीक्षितो न ददाति न पचति न जुहोति'
११० 'एतया पुनराधेयसम्मितया इष्ट्वाऽग्निहोत्रं जुहुयात्'
१११ 'यस्य जुह्वादयः स चेत् सत्रमध्ये म्रियेत तदा मृतेन सह जुह्वादयो दह्यन्ते'
११२ 'एतया निषादस्थपतिं याजयेत्'
११३ 'जायापती अग्नीनादधीयाताम्'
११४ 'अग्निमुपनिधाय स्तुवीत'
११५ 'वसन्ते ललामाँस्त्रीन् वृषभानालभेत'
११६ 'यन्त्रिषु यूषेषु आलभेत'
११७ 'विश्वजिता यजेत, अभिजिता यजेत, 'द्वादशाहेन यजेत प्रजाकामः'
११८ 'यदेकया जुहुयाद् दर्विहोमं कुर्यात्'
११९ 'अम्लष्ठानां दर्वीहोमिको ब्राह्मणः'
१२० 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्'
१२१ 'बृहति स्तूयमावे मनसा समुद्रं ध्यायेत्'
१२२ 'श्येनमस्य वक्षः कृणुतात्' अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्, अस्य पशोर्वक्षः श्येनं कृणुतात्, गात्रं गात्रमस्याऽनूनं कृणुतात्'
१२३ 'यस्याऽग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्'
१२४ 'स्थाण्वाहुतिं जुहोति, स्वाहाकारं यजति'
१२५ 'आज्यभागावग्नीषोमाभ्यां यजति'
१२६ 'यदि पत्नीः संयोजयन् कपालम् अभिजुहुयात्, वैश्वानरं द्वादशकपाल निर्वपेत्'
१२७ 'यदि सत्राय संदीक्षितानां यजमानः प्रम्रीयेत, अथ तं दग्ध्वा तस्य कृष्णाऽजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः सम्वत्सरेऽस्थीनि याजयेयुः'
१२८ 'हिरण्यमात्रेयाय ददाति'
१२९ 'द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम्'
१३० 'ब्रह्मदृंहिं त्वाक्षत्रदृंहिं, ब्रह्मदृंह क्षत्रंदृंह, उत्तम्भय पृथिवीम्, अद्भिः परिषिञ्चति' (खलेवालीसेचनम्)

१३१ 'पितृभ्यो बर्हिषद्भ्यो धानाः'
१३२ 'पितृभ्योऽग्निष्वात्तेभ्योऽभिवात्यायै दुग्धे मन्थम्'
१३३ 'उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीत'
१३४ 'यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात्'
१३५ 'पुरस्ताच्चोपरिष्टाद्वा जुहुयात् बहिरात्मनः सजातीयान्दध्यात्, यन्मध्यतो जुहोति मध्यत एव सजातीयान्मनुते'
१३६ 'पत्न्य उपगायन्ति, दिक्षु दुन्दुभयो नदन्ति'
१३७ 'अग्निं यजति, पृषदाज्येनाऽनुयाजान्यजति'
१३८ 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वा'
१३९ 'अनया त्वा पृथिव्या पात्रेण समुद्ररसया प्रजापतये त्वा जुष्टं गृह्णामीतिमानसं प्राजापत्यं गृह्णाति'
१४० 'त्र्यंगैः स्विष्टकृतं यजति'
१४१ 'अपबर्हिषः प्रयाजान्यजति'
'अपबर्हिषावनुयाजौ यजति'
'अप्सुमन्तौ आज्यभागौ यजति'
१४२ 'नाऽनुयाजेषु 'ये यजामहं' करोति'
१४३ 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति'
१४४ 'जर्तिलयवाग्वा जुहुयात्, जवीधुकयवाग्वा जुहुयात्'
१४५ 'वषट्कारेण स्वाहाकारेण वा देवताभ्योऽन्नं प्रदीयत'
१४६ 'वारुण्या निष्कासेन तुषैश्चाऽवभृथमभ्यवयन्ति'
१४७ 'पूर्वेद्युरमावास्यायां वेदिं करोति'
१४८ 'कृष्णविषाणया कण्डूयते'
१४९ 'सरस्वतीम् आज्यस्य यजेत'
१५० 'भूः स्वाहेति गार्हपत्ये जुहुयात्, भुवः स्वाहेति दक्षिणाऽग्नौ जुहुयात, स्वः स्वाहेत्याहवनीये जुहुयात्, भूर्भुवःस्वःस्वाहेत्याहवनीये जुहुयात्'
१५१ 'पर्वणि नाध्येतव्यम्, वाते नाऽध्येतव्यं, स्तनयित्नौ नाऽध्येयम्'
१५२ 'वैष्णवीमनूच्य वाग्यन्तव्या, सारस्वतीमनूच्य वाग्यन्तव्या, बार्हस्पत्यमनूच्य वाग्यन्तव्या'
१५३ 'अन्वाहार्ये दर्शनात्' (१२।४।१५।४७) ब्राह्मणानामेवार्त्विज्यम्'
१५४ 'आयुर्दा असीत्याशीः, अग्निर्मूर्धेति स्तुतिः, एको ममेति संख्या, अक्षीते इन्द्र पिंगले इतिप्रलपितम्, अम्बेम्बिके इति परिदेवनम्, अग्नीदग्नीन्प्रैषः, कोऽसि कतमोऽसि—अन्वेषणम्, पृच्छामि त्वा पृष्टम्, इयं वेदिः आख्यानम्, अच्छिद्रेण पवित्रेण—अनुषङ्गः, त्रैःस्वर्यं चातुःस्वर्यं प्रयोगः, अभिधानं सामर्थ्यम्'
१५५ 'सम्वत्सरो दिनम् (६।७।१३।४०)
१५६ 'कवतिषु रथन्तरं गायति'

१५७ 'अमेध्यं द्रव्यमुच्छिष्टः शयानो वा प्रौढपादो वामेन हस्तेन पादेन वा यथाकथञ्चिद्देवताया उत्सृजति तस्य फलं न भवति'

१५८ 'यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमना मन्त्रवन्नियमवच्च देवताया उत्सृजति तस्य फलं भवति'

१५९ 'अंगिरसो वा इत उत्तमाः स्वर्गं लोकमायँस्ते यज्ञवास्त्वभायँस्ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तं चापश्यँस्तमब्रुवन्—इन्द्राय ध्रियस्व, बृहस्पतये ध्रियस्व, विश्वेभ्यो देवेभ्यो ध्रियस्वेति, सताह न ध्रिये, तमब्रुवन् अग्नये ध्रियस्व, सोऽब्रवीत् ध्रियेऽहमिति'

१६० 'साम्नाय्यं वा तत्प्रभवत्वात्' (८।२।४।१३) पशुपदेन पशुजन्यं पयो दधि पुरोडाशः सान्नाय्यं ग्राह्यम्'.

१६१ 'वास्तुहोमे यदेकया जुहुयात् दर्विहोमं कुर्यात्'

१६२ 'सस्तोभस्वरकालाऽभ्यासविकारायां हिंकारप्रणवप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवत्यामृचि सामशब्दः सैव सामोच्यते'

१६३ 'गानं रथन्तरं साम, गानं बृहत्साम, वैरूपं वैराजं, शक्करं, रैवतं, आसारितकं वर्धमानकगीतिः, अन्यथालक्षणा—आसारिकगीतिः, वर्धमानकगीतिः, रथन्तरगीतिः, बृहद्गीतिः' । ( रथन्तस्य ऋग्योनिः )

१६४ 'अतिजगतीसाम (त्रैशोकम्)—"विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षूरिन्द्रंज्जनुश्च राजसे, क्रत्वा वरिष्ठं वर आमुरीमुतोग्रमोजिष्ठं तवसंतरस्विनम् । नेमिं नमन्ति चक्षुषा मेषं विप्रा अभिस्वरा, सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्कभिः, समीरे. भासो अस्वरन्निन्द्रं सोमस्य पीतये, स्वर्पतिं यदीं वृधे धृतवतो ह्योजसा समूतिभिः'

१६५ 'बृहत—"अभि त्वा शूर नोनुमो दुग्धा इव धेनवः, ईशानमस्य—जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः, न त्वावान् अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते, अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे, त्वामिद्धि हवामहे सातावाजस्य कारवः, त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठां स्वर्वतः, स त्वं नश्चित्र वज्रहस्त धृष्णुया महःस्तवानो अद्रिव, गामश्वं रथ्यमिन्द्र संकिरसत्रावाजं न जिग्युसे'

१६६ 'बृहती 'पुनानः सोम धारयापो वसानो अर्षसि, आरत्नधा योनिमृतस्य सीदस्युत्सो देहहिरण्ययः, कुहानऊधर्दिव्यं मधु

प्रियं प्रत्नं सधस्थमासदत्, आमृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः'

१६७ 'अनुष्टुप्–'पुरोजितीवो अन्धसः सुताय मादयित्नवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वयम् । यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः । तं दुरोषमभीनरः सोमं विश्वच्या धिया यज्ञं हिन्वन्त्यद्रिभिः'

---

चत्वारः ऋत्विजः—अध्वर्युः, ब्रह्मा, होता, आग्नीध्रश्च । यजमानस्तत्पत्नी च

| अध्वर्युगणः | ब्रह्मगणः | होतृगणः | उद्गातृगणः |
|---|---|---|---|
| १ अध्वर्युः, | १ ब्रह्मा, | १ होता, | १ उद्गाता, |
| २ प्रतिप्रस्थाता, | २ ब्राह्मणाच्छंसी, | २ मैत्रावरुणः, | २ प्रस्तोता, |
| ३ नेष्टा, | ३ आग्नीध्रः, | ३ अच्छावाकः, | ३ प्रतिहर्ता, |
| ४ उन्नेता, | ४ पोता, | ४ ग्रावस्तुत् , | ४ सुब्रह्मण्यः, |

---

दक्षिणाविभागाः, रूप्यकादीनां साहस्रमभिमत्य— १००० =

| | | | |
|---|---|---|---|
| १२० अध्वर्युः, | १२० ब्रह्मा, | १२० होता, | १२० उद्गाता, |
| ६० प्रतिप्रस्थाता, | ६० ब्राह्मणाच्छंसी, | ६० मैत्रावरुणः, | ६० प्रस्तोता, |
| ४० नेष्टा, | ४० आग्नीध्रः, | ४० अच्छावाकः, | ४० प्रतिहर्ता, |
| ३० उन्नेता, | ३० पोता, | ३० ग्रावस्तुत्, | ३० सुब्रह्मण्यः, |
| २५० | २५० | २५० | २५० |

---

द्वादश ऋतुग्रहाः मासनाम्न्यो देवताश्च—

१ इन्द्रो मधुश्चैत्रः, २ मारुतो माधवो वैशाखः, ३ त्वष्टा शुक्रो ज्येष्ठः, ४ अग्निः शुचिः आषाढः, ५ इन्द्रो नभः श्रावणः, ६ मित्रावरुणौ नभस्यो भाद्रपदः, ७ द्रविणोदाः इषः आश्विनः, ८ द्रविणोदाः ऊर्जः कार्तिकः, ९ द्रविणोदाः सहः मार्गशीर्षः, १० द्रविणोदाः सहस्यः पौषः, ११ आश्विनौ तपो माघः, १२ अग्निर्गृहपतिः तपस्यः फाल्गुनः ।। इति ।। विष्णुः अधिकः पुरुषोत्तमः ।।

---

स्तोत्रनामानि देवतास्तुतिगानात्मकानि—

१ बहिष्पवमानम्, २ आज्यम्, ३ माध्यन्दिनपवमानम्, ४ पृष्ठम्, ५ आर्भवपवमानम्, ६ अग्निष्टोमम्, उक्थ्यम्, ८ षोडशिस्तोत्रम्, ९ रात्रिस्तोत्रम्, १० सन्धिस्तोत्रम्, ११ मैत्रावरुणपृष्ठम्, १२ ब्रह्मपृष्ठम्, १३ आच्छावाकपृष्ठम्, १४ आप्तोर्यामस्तोत्रम् ।

---

स्तोमाः—क्रियमाणस्तोत्राणां संख्याः, संख्यायितस्तोत्राणि स्तोमाः—

१ त्रिवृत् ( नव ), २ पञ्चदशः, ३ सप्तदशः, ४ एकविंशः, ५ सप्तविंशः, ६ त्रयस्त्रिंशः, ७ चतुर्विंशः, ८ चतुश्चत्वारिंशः, ९ अष्टचत्वारिंशः, इति नव प्रकाराः स्तोत्राणामावृत्तयः, अन्या अपि भवन्ति ॥ सर्वे स्तोमाः ॥

---

शस्त्राणि—तत्तद्देवता उद्दिश्य आज्यदातक्षणे मण्डपे गानमन्त्रैः स्थूणासमीपे ऋत्विक्क्रियमाणाः स्तुतिविशेषाः शस्त्राणि ।

१ आज्यशस्त्रं, २ प्रउगशस्त्रम्, ३ मैत्रावरुणशस्त्रं, ४ब्राह्मणाच्छंसिशस्त्रम्, ५ अच्छावाक्शस्त्रम् , ६ मरुत्वतीयशस्त्रम् , ७ वैश्वदेवशस्त्रम् , ८ आग्निमारुतशस्त्रम् , ९ षोडशिशस्त्रम् , १० रात्रिशस्त्रम् , ११ आश्विनशस्त्रम् , १२ आप्तोर्यामशस्त्रम् ॥

---

विष्टुतयः, संस्थाः, सामानि, अग्रताः, पृष्ठ्यः, अभिप्लवः, अभ्यासङ्गचः, गोष्टोमः, आयुष्टोमः, महाव्रतमित्याद्यास्तु तत्तत्प्रक्रियाभिर्ज्ञातव्याः भवन्ति ॥

---

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥ १ ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु ।
एतद्वै सर्ववेदेषु नियतं विधिलक्षणम् ॥ २ ॥

'तेन ह्यन्नं क्रियते'इति हेतुः, 'तद्दध्नो दधित्वम्'इतिनिर्वचनम्, 'अमेध्या वै माषाः'इति निन्दा, 'वायुर्वै क्षेपिष्ठा देवता'इति प्रशंसा, 'तद् व्यचिकित्सत् जुहवानि, मा हौषम्'इति संशयः, 'यजमानेन सम्मिता औदुम्बरी भवति, इतिविधिः, माषानेव मह्यं पचत'इति परकृतिः, पुरा ब्रह्मणा अभैषुः' इति पुराकल्पः, 'यावतोऽश्वान्प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्'इतिविशेषाऽवधारणकल्पना, 'सोमवल्लीमिव पूतिकामादद्यादि'त्युपमानम् । इति ब्राह्मणवाक्येषु ॥ अथ मन्त्रेष्वपि 'इन्दवो वामुशन्ति हि'इतिहेतुः, 'उदानिषुर्महीरिति तस्मादुदकमुच्यते'इतिनिर्वचनम्, 'मोघमन्नं विन्दते अप्रचेताः' इतिनिन्दा, 'अग्निर्मर्धा दिवः ककुत्पतिः'इतिप्रशंसा, 'अधः स्विदासीदुपरिस्विदासीदि'ति संशयः, 'कपिञ्जलानालभेते'तिविधिः, 'सहस्रमयुतं ददत्'इति परकृतिः, यज्ञेन यज्ञमयजन्त देवा'इतिपुराकल्पः, 'प्रथमपक्ष' इति व्यवधारणा, 'श्येनेन यजेत' यद्वा 'अध्वर्युः प्रम्रियते स इव यजमान' इत्युपमानम् । प्रयोगसमवेताऽर्थस्मारकाः मन्त्राः । मन्त्रोपोद्बलकवाक्यानि ब्राह्मणानि । पदेन व्रतेन चोपेता बद्धा मन्त्राः । गीतिरूपा मन्त्राः

सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि। परप्रत्यायनार्था मन्त्रा निगदाः। यद्विभागे साकांक्षम् अविभागे चैकार्थं तदेकवाक्यम्। त्रयो वेदा असृजन्त। अग्नेः ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः॥

अथ शेषशेषिलक्षणस्योभयपदार्थस्य विधाने वाक्यभेदः स्यात्, तत्राऽष्टदोषप्रसंगः, तथाहि—'व्रीहिभिर्यजेत यवैर्वा'इत्यत्र व्रीहिभिर्यजेतेति प्रयोगे व्रीह्यनुष्ठाने—१—यवशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वरूपस्य परित्यागः, २—स्वार्थाऽननुष्ठापकत्वरूपस्याऽप्रामाण्यस्य स्वीकारः। द्वितीयप्रयोगे यवानुष्ठाने ३—पूर्वपरित्यक्तस्य यवशास्त्रप्रामाण्यस्य स्वीकारः, ४—स्वीकृतस्य चाऽप्रामाण्यस्य परित्यागः, इति यवशास्त्रे चत्वारो दोषाः। अथ प्रथमप्रयोगे यवानुष्ठाने—१ व्रीहिशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वलक्षणस्य परित्यागः, २—स्वार्थाऽननुष्ठापकत्वस्वरूपस्य चाऽप्रामाण्यस्य स्वीकारः, ततो द्वितीयप्रयोगे व्रीह्यनुष्ठाने ३—व्रीहिशास्त्रप्रामाण्यस्य पूर्वं परित्यक्तस्य स्वीकारः, ४—स्वीकृतस्य तदप्रामाण्यस्य परित्यागः, व्रीहिशास्त्रे चत्वारो दोषाः। इत्यष्टदोषदुष्टो विकल्पो व्रीहियववाक्ये प्रसिद्धः।

अथ युगपत्तन्त्रेण यागेनेष्टं भावयेत् सोमेन यागं भावयेदिति उभयविधानं तदा—विरुद्धत्रिकद्वयप्रसंगः, तथाहि—दध्ना होमं भावयेत् होमेनेष्टं भावयेदिति साध्यत्वेन करणत्वेन च होमान्वयः स्यात्, तत्र दध्ना जुहोतीति सकृदुच्चरितस्य जुहोतीत्याख्यातस्य दधिरूपगुणे किञ्चिदिष्टे च तन्त्रेण इति कर्तव्यतया प्रधानेन तन्त्रेण सम्बन्धांऽगीकारे सति 'उपादेयत्व, विधेयत्वं, गुणत्वं, चेत्येकं त्रिकम्। उद्देश्यत्वम्, अनुवाद्यत्वं प्रधानत्वं, चेत्यपरं त्रिकं, होमे सम्पद्यते, तथाहि—फलमुद्दिश्य होम उपादीयते, फलमनूद्य होमो विधीयते, फलं प्रधानं होम उपसर्जनम्, एवं—होममुद्दिश्य दध्युपादीयते, होममनूद्य दधि विधीयते, होमः प्रधानं दध्युपसर्जनम्, तवश्च होमे—फलाऽपेक्षया उपादेयत्वं विधेयत्वं गुणत्वं, दधिरूपगुणाऽपेक्षया चोद्देश्यत्वमनुवाद्यत्वं प्राधान्यं च सम्पद्यते। न चाऽत्र न तन्त्रेण सम्बन्धः, किन्तु पृथग्घोमावृत्त्या सम्बन्ध इति वाच्यम्। गौरवात्मकवाक्यभेदप्रसंगात्। दध्ना होमं भावयेत् होमेन चेष्टं भावयेदितिवाक्यद्वयप्राप्तेः।

यत्र हि साध्यत्वेन करणत्वेन चैकस्य युगपत्तण्त्रेण (सकृदुच्चरितस्योभयत्र सम्बन्धः तन्त्रसम्बन्धः) आशंकितेन तेन सम्बन्धेन तत्संसर्गिस्थले विरुद्धत्रिकद्वयस्य प्रसंगो यथा—'वाजपेयेन स्वाराज्यकामो यजेते'त्यत्र वाजपेयशब्दस्य पेयसुराद्रव्यदाचित्वेन गुणविध्याशंकायां मत्वर्थलक्षणाप्रसंगाऽऽश्रेपे तन्त्रेण युगपत्स्वाराज्यफलवाजपेयगुणसम्बन्धो यागस्य पूर्वपक्षितः। तत्र विरुद्धत्रिकद्वयप्रसंगाऽऽपादनेन यथोक्तद्रव्यनिमित्तं वाजपेयशब्दस्य नामधे-

यत्वं राद्धान्तितम्, विरुद्धत्रिकद्वयप्रसंगश्च फलमुद्दिश्य याग उपादीयते फलमनूद्य यागो विधीयते फलं प्रधानं याग उपसर्जनम्। एवं—यागमुद्दिश्य वाजपेय उपादीयते, यागमनूद्य वाजपेयो विधीयते, यागः प्रधानं वाजपेय उपसर्जनमिति ॥

'यज्जौहवं तत्प्रयाजत्रितयार्थम्, यत्त्वौपभृतं तदवशिष्टप्रयाजद्वयार्थम् अनुयाजार्थं च,—इत्येवं वाक्यद्वयस्य व्यवस्थायां सम्भवन्त्याम् अष्टदोषग्रस्तो विकल्पो नाऽऽश्रयितुं शक्यः, यदा जौहवस्वीकारः, तदानीम् औपभृतवाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत, अप्राप्तमप्रामाण्यं स्वीक्रियेत, पुनरपि कदाचित् औपभृतस्वीकारे त्यक्तं प्रामाण्यं स्वीक्रियेत, स्वीकृतमप्रामाण्यं परित्यज्येत। इत्यौपभृतवाक्ये चत्वारो दोषाः। एवं जौहववाक्येऽपि चत्वारो दोषाः—यदा औपभृतस्वीकारः, तदानीं जौहववाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत, अप्राप्तमप्रामाण्यं स्वीक्रियेत, पुनरपि कदाचिज्जौहवस्वीकारे त्यक्तं प्रामाण्यं स्वीक्रियेत, स्वीकृतमप्रामाण्यं परित्यज्येत,—इति जौहववाक्ये चत्वारो दोषाः। इत्येवमष्टौ दोषाः ॥

परिसंख्यायां विधिर्दोषत्रयवान्, तथाहि—परिसंख्यायां 'विधिः स्वार्थं जह्यात्, परार्थं कल्पेत, प्राप्तं बाधेत' इतिदोषत्रयं प्रयज्येत, दोषत्रयः—स्वार्थत्यागः, अन्यार्थस्वीकारः, प्राप्तबाधश्चेति। 'पर्यग्निकृतं पालीव्रतमुत्सृजन्ति' इतिवाक्ये स्वार्थो विधिस्त्यज्येत, अन्यार्थो निषेधः स्वीक्रियेत, चोदकप्राप्तान्युपरितनाऽङ्गानि बाध्येरन्निति ॥

विरुद्धत्रिकद्वयम्—१ उद्देश्यं विधेयं, २ उपादेयम् अनुवाद्यम्, ३ सिद्धं साध्यं चेति। विरुद्धं त्रिकं द्वयं द्वयं तद्वत्त्वप्रसंगो यागे स्यात्। सोमो विधेयः, तत्र अनुवाद्यत्वम् उद्देश्यत्वं सिद्धत्वं च, भावना अनुवाद्या, तत्र उपादेयता विधेयता साध्यता चेति। एतत् त्रिकं त्रिकम् उपादेये यागे,—अनुवाद्यत्वम् उपादेयत्वम्, उद्देश्यत्वं विधेयत्वं, सिद्धत्वं साध्यत्वं, चेति विरुद्धत्रिकं प्रसज्ज्येत ॥

अथ मीमांसाया द्वादशाऽध्याय्या विषयाः—

जैमिनिक्लृप्तानि धर्मनिर्णायकान्यधिकरणानि न्यायाः शाब्दिकयुक्तयः, ताश्च—विषयः, सन्देहः, संगतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवरूपिण्यः। संगतिः—वाक्यतदर्थसंश्लेषगतिः। विषयः—उद्देश्यकीर्तिः। सन्देहः—विधानाऽविधानोभयाऽन्यतरप्राप्त्यभिमतिः, भावाऽभावप्रकारकोपस्थितिः। पूर्वपक्षः—विपरीतार्थसिद्धियत्नोऽसद्धेतुप्रयोज्यः। सिद्धान्तः—सद्धेतुप्रयोज्यः शास्त्रानुसारी निर्णयः। कृतौ प्रतितन्त्रसिद्धान्तः। व्यापारे द्रव्ये बोधे भाव-

नायां च स्वतन्त्रसिद्धान्तः। अपूर्वे सर्वतन्त्रसिद्धान्तः। यज्ञीयपद्धतौ तु अधिकरणसिद्धान्तः॥ द्वादशाऽध्यायेषु—

**प्रथमाऽध्याये**—विध्यर्थवदादिरूपं प्रमाणं निरूपितम्। तत्र प्रथमे पादे—विधिरूपं मानमीरितम्, द्वितीये पादे अर्थवादरूपम्, अर्थवादो मन्त्रस्याऽप्युपलक्षणकः, तत्प्रमाणमीरितम्। तृतीयो पादे—स्मृतिराचारश्चेति प्रामाणिकमीरितम्। चतुर्थ पादे—उद्भिच्चित्रादियागनामरूपं प्रमाणमीरितम्॥

**द्वितीयाऽध्याये**—यागदानादिकर्मभेदो निरूपितः। तत्र प्रथमे पादे—आख्यातमेवाऽपूर्वबोधकम्, अपूर्वसद्भावः, कर्मभेदचिन्तनं च विहितम्। द्वितीय पादे—धातुभेदपुनरुक्त्यादिभिः कर्मभेदः कथितः। तृतीय पादे—रथन्तरादीनां कर्मभेदप्रामाण्याऽपवादा दर्शिताः। चतुर्थे पादे—नित्यकाम्ययोः प्रयोगयोर्भेदो दर्शितः॥

**तृतीयेऽध्याये**—प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वं निरूपितम्। तत्र प्रथमे पादे—शेषत्वबोधकानां श्रुतिलंगादीनां मध्ये श्रुतिर्विचारिता। द्वितीय पादे—लिंगं निरूपितम्। तृतीय पादे—वाक्यप्रकरणादि निरूपितम्। चतुर्थ पादे—निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसदसद्भावश्चेति निरूपितम्। पञ्चमे पादे—प्रतिपत्तिकर्माणि दर्शितानि। षष्ठे पादे—अनारभ्याऽधीतानि वाक्यकाण्डानि कथितानि। सप्तमे पादे—बहुप्रधानोपकारकप्रयाजादीनि निर्णीतानि। अष्टमे पादे—याजमानानि अनुष्ठानान्युक्तानि॥

**चतुर्थाऽध्याये**—गोदोहनस्य पुरुषार्थप्रयुक्त्याऽनुष्ठानम्, न तु क्रत्वर्थप्रयुक्त्या, इत्यादिकं मीमांसितम्। तत्र प्रथमे पादे—प्रधानभूताऽऽमिक्षादध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये पादे—अप्रधानं वत्साऽपाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वं मीमांसितम्। तृतीये पादे—जुहूः पर्णमयीत्यादेः अपापश्लोकश्रवणादिफलभावाऽभावचिन्तनं कृतम्। चतुर्थे पादे—राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्तनं कृतम्॥

**पञ्चमाऽध्याये**—क्रमनियतिविधेयत्वादयो निरूपिताः। तत्र प्रथमे पादे—श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वितीये पादे—वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादिक्रमविशेषोऽभिहितः। तृतीय पादे—पञ्चप्रयाजादीनाम् आवर्तनेन ऐकादश्यमित्यादिवृद्धिः, अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादिवृद्ध्यभावश्चेति निरूपितम्। चतुर्थे पादे—क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावो निरूपितः॥

**षष्ठेऽध्याये**—कर्तुरधिकारो नाऽन्धादेरित्यादिर्विषय उक्तः। तत्र प्रथमे पादे—कर्माधिकारः कर्तुरस्ति, अन्धादेर्नास्ति, पत्न्या सहाऽस्ति, इत्येवमादिनाऽधिकारी निरूपितः। द्वितीये पादे—सत्ताऽधिकारिणां प्रत्येकं कृत्स्नं फलम्, दर्शपूर्णमासयोः कर्त्रैक्यनियमः, काम्यं कर्म समापनीयम्, इत्येवमधिकारिधर्मा उक्ताः। तृतीय पादे—द्रव्यस्य प्रतिनिधिः, देवादीनामग्न्यादीनामधिकारिणश्च प्रतिनिधिर्नास्तीति निरूपितम्। चतुर्थे पादे—पदार्थलोपनं विचारितम्, अवत्तनाशे सति आज्येन यजेत, इडाज्यस्य नाशे सति शेषान्नं ग्राह्यम्,—इत्यादिनिरूपितम्। पञ्चमे पादे—कालाऽपराधेन चन्द्रोदये सति अभ्युदयेष्टिः प्रायश्चित्तम्, ज्योतिष्टोमस्यैकादशदीक्षाः, द्वादशाहस्य द्वादश दीक्षाः, इत्यादिनिरूपितम्। षष्ठे पादे—सत्त्राऽधिकारिणस्तुल्यकल्पना एव, सत्त्रं विप्रस्यैव, इत्यादि निरूपितम्, सप्तमे पादे—पित्रादि महाभूमिः पत्नी चेत्यादिदानेन देयं देयविचारश्च। अष्टमे पादे—लौकिकाग्नावुपनयनहोमः, स्थपतीष्टिः, इत्याद्यग्निविचारः कृतः॥

**सप्तमेऽध्याये**—'समानमितरच्छयेनेने'तिप्रत्यक्षवचनेन, अग्निहोत्रादिनाम्नाऽनुमितवचनेन, च सामान्यतोऽतिदेशः। तत्र प्रथमे पादे—समानमितरच्छयेनेन' इत्यादिप्रत्यक्षवचनातिदेशः। द्वितीये पादे—रथन्तरशब्देन गानमात्राऽभिधायिना गानस्यैवाऽतिदेशत्वमित्येतादृशः पूर्वोक्ताऽतिदेशस्य शेषो विचारितः। तृतीये पादे—अग्निहोत्रनाम्नाऽतिदेशो विचारितः। चतुर्थे पादे—निर्वापौषधद्रव्यादिर्लिगाऽतिदेशो विचारितः॥

**अष्टमेऽध्याये**—'सौर्यं चरुं निर्वपेदि'त्यत्र निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमिति लिंगेनाऽऽग्नेयपुरोडाशेतिकर्तव्यतैव, नाऽन्यस्य, इत्येवमादिर्विशेषोऽतिदेशो निरूपितः। तत्र प्रथमे पादे—स्पष्टेन लिंगेनाऽतिदेशविशेषः, यथाहि—सौर्यचरावतिदेशकानि निर्वापः, तद्धितेन देवतानिर्देशः, एकदेवतत्वम्, औषधद्रव्यकत्वम्, इत्यादीनि स्पष्टान्याग्नेयलिंगानि दर्शितानि। द्वितीये पादे—अस्पष्टलिंगैरतिदेशः कृतः। तथाहि—वाजिने हविःसामान्येन लिंगेन पयोविध्यन्तोऽतिदिश्यते, तत्र लिंगमस्पष्टं, शीघ्रं तद्बुद्ध्यनुत्पादनादिति। तृतीये पादे—प्रबलेन लिंगेनाऽतिदेशः, तथाहि—आभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविष्षु त्रित्वेन लिंगेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदैवत्यत्वेन लिंगेन प्रथम आग्नावैष्णवे तृतीयस्याऽग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः, प्रबलं च द्विदैवत्यम्, शब्दोच्चारणमात्रेण सहसा प्रतिभासात् क्रमस्तु विलम्बितप्रतीत्या दुर्बल इति। चतुर्थे पादे—दर्विहोमेष्वतिदेशोऽपोद्यते॥

**नवमेऽध्याये**—प्रकृतौ 'अग्नये जुष्टं निर्वपामी'तिपठिते मन्त्रे विकृतौ सौर्यचरावग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण 'सूर्याय जुष्टं निर्वपामि'इत्येवमाद्यूहः। तत्र प्रथमे पादे—उपोद्घातपूर्वकमूहमिचारप्रारम्भः, तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः, अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः, सवित्रश्विपूषशब्दानां विकृतिषु नास्त्यूहः, अग्निशब्दस्याऽस्त्यूहः, इत्याद्यूहविचारारम्भः। द्वितीये पादे—सपरिकरः सामोहः। तृतीये पादे—मन्त्रोहः। चतुर्थे पादे—मन्त्रोहप्रसंगाऽऽपतितो विचारः कृतः॥

**दशमेऽध्याये**—कृष्णलेषु चोदकप्राप्तस्याऽवघातस्य वितुषीकरणाऽसम्भवेन लोप इत्येवमादिर्बाधो निरूपितः। तत्र प्रथमे पादे—बाधहेतुर्द्वारलोपो निरूपितः, तद्यथा—'स्वयंकृता वेदिर्भवति' इत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः, कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनाऽवघातस्य बाधः। द्वितीय पादे—द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये पादे—बाधकारणं कार्यैक्यं, तद्यथा—प्रकृतौ गवाऽश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यम्, विकृतौ भूनाम्न्येकाहे धेनुरूपायाया दक्षिणायास्तदेव कार्यं, ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते, इत्यादि। चतुर्थे पादे—नक्षत्रेष्टिर्विहिता, उपहोमाश्चोदकप्राप्तैर्नारिष्ठहोमैः सह समुच्चीयन्ते,–इत्यादिः समुच्चय इति। पञ्चमे पादे—षोडशिग्रहः प्रकृतिगामी, स चाऽऽग्रयणपात्रादेव ग्रहीतव्यः—इत्यादिर्बाधप्रसंगागतो ग्रहादिविचारः कृतः। षष्ठे पादे—'साम तृचे गेयमि'त्यादिबाधप्रसंगाऽऽगतः सामविचारः कृतः। सप्तमे पादे—पश्वङ्गेषु प्रत्यंगं हविर्भेदः, न कृत्स्नः पशुर्हविर्भेदः, गृहमेधीयमपूर्वं कर्मेत्यादिर्बाधप्रसंगागतः प्रकीर्णविचारः। अष्टमे पादे—'नानायाजेषु' इतिपर्युदासः, 'न सोमे'–इत्यर्थवादः, 'नातिरात्रे'इतिप्रतिषेधः,–इत्यादिबाधोपयुक्तो नञर्थविचारः कृतः॥

**एकादशेऽध्याये**—बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यंगेन उपकार इति तन्त्रं प्रदर्शितम्। तत्र प्रथमे पादे—तन्त्रस्य उपोद्घातो वर्णितः। द्वितीय पादे—तन्त्राऽऽवापौ संक्षेपेणोक्तौ। तृतीय पादे—तन्त्रम् उदाहरणबाहुल्येन प्रपञ्चितम्। चतुर्थे पादे—उदाहरणबाहुल्येनाऽऽवापः प्रपञ्चितः॥

**द्वादशाऽध्याये**—प्रधानस्य पशोरुपकारायाऽनुष्ठितेन प्रयाजाद्यंगेन पश्वंगपुरोडाशेऽप्युपकार इत्यादिः प्रसंगः स्पष्टीकृतः। तत्र प्रथमे पादे—पशुधर्माणां पशुपुरोडाशे प्रसंगः, सोमिकवेदेरुत्तरकालीनकर्मसु प्रसंग इत्यादिविचारः कृतः। द्वितीय पादे—सवनीयपशोस्तन्त्रित्वं, न तु सवनीयपुरोडा-

शानाम्, विकृतिस्तन्त्रिणी, न प्रकृतिः, अन्वारम्भणीया विकृतिष्वपि स्यात्; न तु प्रकृतावेवेत्यादिविचारः कृतः। तृतीय पादे—त्वग्वाससोः समुच्चयः, आधारगतानामृजुत्वसन्ततत्वादीनां समुच्चयः—इत्यादिकं प्राधान्येन, यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयाऽपवादत्वेन, इत्युभयं चिन्तितम्। चतुर्थे पादे—ऐन्द्राबार्हस्पत्ययाज्याऽनुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन, याज्याऽनुवाक्ययोः समुच्चय इत्यादिकं विकल्पाऽपवादत्वेनेत्युभयं चिन्तितम्॥

इत्येवं द्वादशाऽध्यायी षष्टिपादसमन्विता।
प्रतिपाद्यार्थगृहिणी जैमिन्याशयसम्भृता॥ १॥
बोध्या संगतयश्चापि रूप्यन्ते शास्त्रसम्मताः।
इष्टता हेतुताऽऽकांक्षा योग्यता शेषनिर्वृतिः॥ २॥
पारम्पर्यमुपोद्घातः प्रसंगो वृत्ततानता।
कार्यताऽवसरः कार्यैकता निर्वाहकैकता॥ ३॥
वैशद्यं प्रतिपक्षश्चाऽनवधानमलंकृतिः।
प्रश्नः समाधिरुन्मादो निरासो विरतिस्तथा॥ ४॥
संगतिर्वर्णवाक्यादौ द्वाविंशतिरिष्यते।
आक्षेपश्चापि दृष्टान्तः प्रत्युदाहरणं तथा॥ ५॥
अपवादः संगतयोऽधिका मीमांसकोदिताः।
संगतं चाऽन्वितं प्रोक्तं बोधयाथार्थ्ययोजकम्॥ ६॥

अथ जैमिनिना निजसूत्रे 'विष्णुर्वा स्यात् हौत्राम्नानात् अमावास्याहविश्च स्यात् होत्रस्य तत्र दर्शनात्' (१०।८।१७।५३) इत्यनेन विष्णोः परमात्मनः सर्वार्पणयागाऽर्हता दर्शिता। शाबरभाष्ये—'इदं विष्णुर्विचक्रमे' 'प्रतद्विष्णुः स्तवते वीर्येणेत्युपांशुयाजने 'विष्णुर्देवत्य' इत्युक्तम्। अतः परमात्मा सर्वदेवताकविग्रहाऽर्पणफलप्रदः सर्वविग्रहो शरीरी प्रोक्तः। सर्वमेवेऽपि परमात्मा फलदः। स्वीकृतः। विष्णुयागेऽपि परमात्मदेवत्यं स्वीकृतम्। तथा 'हिरण्यगर्भः पूर्वस्य मन्त्रलिंगात्' (१०।३।२।१३) इत्यत्र 'हिरण्यगर्भः समवर्तताऽग्रे' इति आधारमाधारयतीति सगुणब्रह्म वर्णितम्। 'हारियोजने वा सर्वसंयोगादि'ति (३।५।६।२८) इत्यत्र 'हरिरसि हारियोजनः' 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इत्यनेन श्रीहरिप्रसादे सर्वाऽधिकार उक्तः। 'ब्रह्मवर्चस्विनोऽन्नादा भवन्ति' इत्यत्र ब्रह्मणस्तेजोवन्तो नित्यतृप्तिभोजना भवन्तीति परमात्मा तन्मुक्ता ब्रह्मशीलाः प्रदर्शिताः। 'सः स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वात्' (४।३।७।१५) इत्यत्र दुःखाऽसम्भिन्ननिरतिशयसुखं धाम शाश्वतं स्वर्गं सर्वान् जीवेशादीन्प्रति समानत्वेन स्वीकृतम् मोक्षफलस्थानम्। 'प्रतिबिम्बविधानाद्वा विष्णुः समानदेशः स्यात्' (१०।८।१७।५७)

इत्यत्र फलेन प्राप्यतया सर्वेषां समानो देशो विष्णुः परमात्माऽभिहितः। 'अपवर्गं च दर्शयति' ( २।४।११४ ) इत्यत्राऽपवर्गोऽपि दर्शितो मोक्षः। तत्र शाबरभाष्यम्—

'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एताभ्यां निर्मुच्यते मृत्युना च, इति जरामरणनिर्मोचनाऽवधारणवचनं च नियमपक्ष एवोपपद्यते'। 'जरया वा एताभ्यां निर्मुच्यते मृत्युना च'॥ यज्ञस्वरूपविधिविवरणादौ यजुर्वेदः प्रधानः, तैत्तिरीयशाखा प्राचीनतमा क्रतूनां स्वरूपविवेचिका विद्यते, आपस्तम्बीयं श्रौतसूत्रं बोधायनीयं च सूत्रं तत्तन्महर्षिपद्धतयश्च क्रतुपरायणा एव विद्यन्ते। तानि मीमांसितानि सर्वाणि शास्त्राणि भविष्यत्सुखदाऽपूर्वसाधकाऽनुष्ठानयोजकानि मानवानां देवतानां चोपकारकाणि भवन्तीति॥

## मीमांसकीयकतिपयशब्दाद्यर्थस्फुटता

आभ्युदयिकम्—अभ्युदयार्थं श्राद्धम्।
ऊषा—उषरभूमिगता मृत्।
आखुकरीषम्— मूषिकोत्कीर्णा मृत्।
वल्मीकवपा—वल्मीकशिरःस्था मृत्।
सूदः—अशोष्यजलाशयमृत्।
वराहविहतम्—वराहदन्तोत्कीर्णा मृत्।
शर्कराः—क्षुद्रपाषाणकर्कराः।
अपवरकम्—सावरणकुटीकक्षास्थलम्।
ब्रह्मौदनः—ब्राह्मणभोजनार्थमोदनः।
शरावः—तस्तरी, मृत्कलशिका।
उद्वासनम्—बहिर्निःसारणम्।
उपयमनम्—सिकतास्थापनम्।
विहारः—यागानुष्ठानस्थलम्।
स्रुवः—विकंकतीयहवनसाधनम्।
स्रुवः—वर्तुलपुष्करा दर्वी खादिरा।
स्रुक्—अधोमुखी दर्वी।
स्फ्यः—खड्गाकृति रेखाकरणसाधनं खादिरम्।
पर्यग्निकरणम्—कुम्भ्युपर्यंगारभ्रामणम्।
वर्त्मकरणम्—कुम्भीतलाकर्षणसृतिः कृष्णवर्णा रेखा।
प्रादेशः—नवाऽगुलमानम्।
जुहूः—पालाशी सविला सदण्डा हवनी।
हवणी—जुह्वाकारा विकंकतकृता।
उपभृत्—सबिलाऽऽश्वत्थी दर्वी हवनी।
छत्रिन्यायः—'छत्रिणो यान्ति' एकसमुदाये उपचारः।
निर्लेहनम्—जिह्वया चाटनम्।
निनयनम्—क्षारणं स्रंसणम्।
यवागूः—तण्डुलपक्वा विरलद्रवा व्रीहियवक्षिप्ता तरला।
ध्रुवा—विकंकतकृता सपुष्करा हवनी।
योक्त्रम्—यजमानीकटिमुञ्जरशना।
मदन्त्यः—तप्ता आपः।

प्रेक्षणम्—काष्ठकीलिका पिष्टसंयवनार्था, वरणवृक्षस्थाली, होमदर्वी च ।

वेदः—दर्भमुष्टिः, सम्मार्जनसाधनम् ।

अन्वाहार्यः—ओदनादिदक्षिणाः ।

अन्वाहार्यस्थाली—पाकपात्रम्

फलीकरणं—तण्डुलत्वङ्मोचनम् ।

संयवनम्—पिष्टपिण्डे जलमिश्रणम् ।

धातवः—हर्मशलाकाः ।

उपस्तरणम्—स्रुवेण पात्र्यां घृतक्षेपणम् ।

अभिघारणम्—पुरोडाशे स्रुवेण घृतक्षारणम् ।

पुरोडाशः—व्रीहियवतण्डुलान्यतमकृतं पिण्डितद्रव्यं हविः ।

आघारः—कुण्डेवायव्याऽऽग्नेयपर्यन्ता नैर्ऋतेशानकोणपर्यन्ता आज्यधारा ।

प्रैषः—मन्त्रोच्चारणप्रेरणाशब्दः ।

भृगुवत्—भार्गवः ।

वीतहव्यवत्—वैतहव्यः ।

सवेदोवत्—सावेतसः ।

समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकारः, — पञ्च प्रयाजाः प्रयाजदेवताश्च ।

स्विष्टकृत्, आज्यभाक् प्रयाजः, अनुयाजश्च, — चतस्रो देवताः यागाश्चापि ।

अग्नयेऽनुब्रूहीति—एवंविधः पुरोवाक्याप्रैषः ।

अग्निं यजेति—याज्याप्रैषः ।

उपांशुयाजः—मौनमन्त्रयाजनम् ।

प्राशित्रहरणम्—ब्रह्मणे भक्षहविर्भागदानम् ।

बर्हिः, नराशंसः, स्विष्टकृदग्निः — एता अनुयाजानां देवताः ।

इध्मप्रवश्चनानि—पलाशादिच्छिन्नछर्दिकानि ।

सान्नाय्यद्रव्यम्—पयोदधिमिश्रणम् ।

वत्साऽपाकरणम्—गोभ्यो बालवत्सानां दूरीकरणम् ।

कुम्भी—महती पयःपात्री, पयःश्रवणमृत्पात्री, पश्वंगपाचनपात्री ।

पूतिकाः—सोमलतासदृश्यो लताः ।

आतञ्चनम्—दुग्धे तक्रदानं दधिकरणाय ।

कूर्चः—पीठाकारः पीठः ।

शम्या—तीक्ष्णाग्रा गदानिभा गदा ।

उपवेषः—पालाशः कृत्तः खण्डः ।

चषालः—यूपाग्रपरिधापनसाधनम् ।

चमसः—अप्प्रणयनसाधनं, चमसस्थं होमद्रव्यं, सोमरसश्च ।

मदन्तीपात्रम्—संयवनोष्णीकरणार्थं पित्तलपात्रम् ।

कपालं—वर्तुलमृद्भाण्डम् ।

अभिधानी—बन्धनी रज्जुः ।

विदेवनम्—कलहक्रीडनम् ।

निदानम्—दोहनार्थं गोपादबन्धनी रज्जुः ।

स्थाली—हविःपाकार्था पात्री ।

स्वरुः—पशोः अंजनार्थम् यूपच्छेदशकलः ।

पृषदाज्यम्—दध्ना मिश्रितमाज्यम् ।

कण्टकः—हृदयार्थं शूलं साधनम् ।

संज्ञपनम्—प्राणरोधनेन प्राणवियोजनम् ।

शामित्रः—तन्नामाऽग्निः ।
मेदः—हृदयवेष्टनं त्वक् ।
वसा—स्निग्धरसः ।
वृक्यौ—पार्श्वपिण्डौ ।
स्वधितिः—यूपच्छेदकक्षुरः ।
यूपः—पशुबन्धनस्तम्भः, यज्ञस्तम्भः' पलाशखदिरकिचरोहितकटशाखान्यतमजन्योऽष्टकोणः ऊर्ध्वहस्तपुरुषप्रमाणः ।
अभ्रिः—यूपावटखननार्था शस्त्रिका ।
वेदिः—अग्निकुण्डः चतुरंगुलखाता भूमिः ।
कूष्माण्डाः—तन्नामानो मन्त्राः ।
सोमो—लताविशेषः ।
सोमप्रवाकः—सोमयागनिवेदकः प्रेष्यः ।
अदाभ्यः—सोमरसः, सोमांशयुक्दधि च ।
प्रागग्राः—शालाच्छादनवंशाः ।
विचयनम्—सोमकच्चरशोधनम् ।
आसन्दी—सोमस्याऽऽसनिका ।
सम्राट्—महावीरपुत्तलम् ।
उपदीकाः—श्वेतपिपीलिकाः ।
सुब्रह्मण्यः—इन्द्रोऽपि, ऋत्विक् च ।
सुब्रह्मण्याह्वानम्— सोमपानार्थमाह्वानम् ।
धानाः—भ्रष्टयवाः ।
करम्भः—आज्यमिश्रा यवसक्तवः ।
परिवापः—लाजा ।
अंशवः—सोमलताखण्डाः ।
ऋषीजम्—नीरसाः तृणांशाः कूर्चाः ।
प्रचारः—सांगाऽनुष्ठानम् ।
ग्रहः—पात्रं, पात्रस्थहवनद्रव्यं च ।
ऋतुग्रहाः—वसन्तादिदेवताका ग्रहाः ।
खरः—सोमरसाधारपात्रम् ।
स्तोत्रम्—स्तुतिमन्त्राः ।
स्तोमाः—स्तोत्रावृतिसंख्याः, आवृत्तस्तोत्राणि ।
शस्त्रम्—आज्यदाने स्तुतिशेषाः ।
शुक्रामन्थिग्रहः—शुक्रपात्रस्थमन्थिपात्रस्थसोमरसहोमः ।
दधिद्रप्सः—दधिस्वल्पांऽशः ।
राजासन्दी—क्रीतसोमपात्री, सोमासनम् ।
चयनम्—स्थण्डिलनिर्माणम् ।
चितिः—स्थण्डिलम् ।
तानूनप्त्रम्—वेद्यां स्थापितं घृतम् ।
रुक्मम्—वर्तुलसुवर्णखण्डः ।
आघारणं—घृतक्षारणम् ।
चलचमसः—वटजटांकुररसः ।
अरत्निः—चतुर्विंशतिरंगुलयः ।
प्रणीतापात्रं—जलपात्रम् ।
नीवीबन्धनं—कट्यां दर्भशलाकारक्षणम् ।
संस्रवप्राशनं—स्रुगाज्यस्य घ्राणनम् ।
निवीतं—कण्ठे यज्ञोपवीतम् ।
प्राचीनाऽवीतिः—दक्षस्कन्धे सूत्रम् ।
महालयश्राद्धम्—भाद्रकृष्णपक्षीयश्राद्धम् ।
ऊर्ग्—सूक्ष्मोऽन्नरसोऽमृताभिधः ।
ऊर्ग्—ऊर्ग् वै रशना ।
स्योनम्—समीचीनम् ।
मल्हा—गलस्तनाऽजा ।
प्रश्निः—अल्पतनुः ।
पृष्ठौही—भारवाहिनी ।

आमनहोमाः—आमनस्यहोमाः अफलाः ।
संग्रहणीं—सफलां स्वर्गफलाम् ।
उषा, उखा—पिठरः, अग्निपात्रम् ।
क्षामवतीष्टिः—गृहदाहनिवर्तिनीष्टिः ।
व्यापन्नं—केशादिदुष्टमन्नम् ।
अवदानम्—हविःसंस्कारः ।
तन्त्रम्—तन्यते बहूनामुपकारो येन संघः, उभयसम्बन्धः ।
तन्त्रानुष्ठानम्—युगपदनुष्ठानम् ।
तन्त्रम्—साधारणो धर्मग्रामः ।
महालयचटाः—भाद्रे पित्रधिष्ठानदर्भाः ।
अवश्यायः—पश्चरात्रौ शैत्यसेवनम् ।
प्रवर्ग्यम्—कर्मनाम, प्रवर्ग्यसम्भाराः, विष्णोः यज्ञस्य शिरःसन्धानम् ।
विशाखदाम—रज्जुः ।
रुक्मः—वर्तुलो व्यजनः ।
शंकुः—किलकः ।
प्रसर्पणम्—प्रतिकच्छं गृहीत्वाऽपसर्पणम् ।
मेथी—गोबन्धनरूपा ।
घृष्टी—द्वे हस्तकाष्ठे ।
शफौ—पाटलौ पट्टिकौ ।
मुञ्जप्रलवः—पुलाकः ।
रौहिणपुरोडाश :— ।
प्रवञ्जनम्—महावीरपुतलमुखे पयःप्रक्षेपः ।
घर्मं—पयोमिश्रं घृतम् ।
गोः—घर्मधुक् ।
महावीरः—यज्ञशिरोरूपः ।
वसतीवरी—तन्नामकं जलम् ।
अंशुग्रहः—अश्वदाम्यग्रहपात्रे सोमरसः ।
करम्भः—साऽऽज्ययवसक्तुः ।
पयस्या—आमिक्षा ।
उपांशुग्रहः—वारत्रयं होमः ।
पवित्रः—वस्त्रखण्डो गालनार्थः ।
शुनः—इन्द्रः ।
सीरिः—वायुः ।
आनुबन्ध्यपशुः—वन्ध्या गौः ।
पर्यग्निकरणम्—उल्मुकदर्भत्रिवारभ्रामणम् ।
पशुनिपातनं—संज्ञपनम् ।
इडा—पशुपुरोडाशः ।
आमिक्षा—कठिनस्फाटितदुग्धकूर्चाः ।
वाजिनं—दुग्धस्य स्फाटितस्य जलम् ।
मृतः—बद्धः, बन्धनवान् ।
प्रतिगरः—प्रोत्साहनार्थं प्रतिशब्दः ।
नाराशंसहोमः—ऐन्द्राग्नग्रहम् ।
ऊमाः—पितरो देवताः ।
उक्थ्यग्रहप्रचारः—उक्थ्यस्थालीतस्त्रिवारं सोमरसग्रहणम् ।
उलूखलम्—वरणकाष्ठीयगर्तः ।
मुसलम्—वरणकाष्ठीयाऽवघातदण्डः ।
इडायाः—पात्री चतुरंगपरिणाहपात्री ।
उपवेषः—पालाशशाखयष्टिः ।
अहीनः—पुनः पुनः अनुष्ठानं यागः ।
सोमप्रवाकः—सोमाभिमन्त्रणकर्ता जनः ।
प्राचीनवंशाः—शालाऽऽच्छादनवंशाः ।
निष्ठानं—स्थानम् ।
चषालः—यूपपिधानःकटकः द्व्यंगुलः ।
मन्थम्—मथितोष्णयवचूर्णम् ।

वपा—श्वेतरक्ताऽऽन्तरी त्वक् ।
चात्वालः—स्वल्पगर्तः । खनिः ।
पशुरसः—यूषाख्या वसा ।
वारवन्तीया—ऋक् ।
उत्सर्गः—उत्सर्जनम् । त्यागः ।
सुषेवं—सेवनाऽर्हम् ।
उलपाः—दर्भसमतृणानि ।
अवत्तं—संसृतम् अर्पितं घृतम् ।
कदरः—श्वेतखदिरः ।
वाजपेयं—पेयसुराद्रव्यम् ।
चित्रा—दधिमधुपयोघृतोदकतण्डुलानां द्रव्यं चित्रं, चित्रायागश्च ।
सश्वसि—घातको न भवसि ।
तरीरसि—नौकारूपोऽसि ।
चोदकम्—अतिदेशवाक्यम् ।
अभिक्रामः—सर्वतः संचरणम् ।
अभिघार्य—लग्नीकृत्य ।
नारिष्ठाः—तन्नामानो होमाः ।
निवपनम्—प्रक्षेपः ।
न्युप्य—प्रक्षिप्य ।
अपोह्य—उद्धृत्य ।
अपवर्गः—समाप्तिः ।
प्रोक्षणीः—आपः ।
आधानं—धारणम् ।
प्रैषः—पुरुषप्रवर्तनाऽतिसर्गः ।
उपवपति—अपसारयति ।
दृषत्—पाषाणपट्टिका ।
अश्मा—मर्दकवर्तुलपाषाणः ।
कृष्णलाः—गुञ्जाः ।
अवदानम्—दानम् ।
शौनःशेपं—शुनःशेपस्याऽऽख्यानम् ।
दब्धिः—मर्दितः, घातकमायुधम् ।
दभेयम्—दमयेयम् ।
परिवीय—प्रदक्षिणीकृत्य ।
शुन्धध्वम्—शोधयध्वम् ।
समाख्या—यौगिकशब्दः ।
हारियोजनोग्रहः—वषट्कर्तुर्भक्षोग्रहः ।
प्रासनम्—प्रतिपत्तिकर्म, कण्डूयनोपयोगि ।
प्राशुः—आशुतां अविलम्बः ।
सोमाऽभिषवः—सोमरसधारा ।
शल्लकी—शृगालो ।
यूपनियोजनं—यूपे रज्ज्वा बन्धनम् ।
मिथूनं—युगलम् ।
आश्रयिकर्म—द्रव्यदेवताश्रयि कर्म ।
त्यागः—अर्थकर्म ।
याज्या—ऋक् 'यजे'ति ।
अनुवाक्या—ऋक् 'अनुब्रूही'ति ।
आश्विनः—सोमग्रहः ।
गिरागिरा—इरा साम्नामूहः ।
तव्यः—शब्दभावनामभिधत्ते ।
भावना—लिंगादिशब्दवाच्या ।
प्रवर्तना—पुरुषनिष्ठव्यापारः ।
प्रेषणा—शब्दनिष्ठा शक्तिः ।
विधिः—व्यापारो भावना ।
प्रेषणा—अतिसर्गः कामचारः ।
आज्ञा—प्रवर्तकपालकशब्दः ।
अध्येषणा—पुरुषस्याऽऽशयोऽभिलाषः ।
अनुज्ञा—सम्मत्याज्ञा ।
अनुमतिः—बुद्धानुबोधः ।
उपवपति—अपसारयति ।
अवद्यति—दानांगं करोति ।
उत्सर्गः—पशुत्यागादिः ।
ऋतस्य—सत्यफलस्याऽश्वस्य ।
अश्वाभिधानीम्—अश्वरशनाम् ।

रथकारः—सौधन्वनः।
सम्मार्गः—मार्जनं शुद्धिः।
दाशुषे—आहुतिं दत्तवते यजमानाय।
प्रणयनम्—कुण्डान्तरे स्थापनम्।
अपांप्रणयनम्—दर्भेषु जलपात्रस्थापनम्।
उपाकरणम्—उपस्पर्शनम्।
ब्रह्मौदनः—ऋत्विग्भोजनार्थपाकः।
उपारोहणं—प्रतिष्ठानम्।
गृह्याग्निः—वैवाहिकहोमाग्निः।
अनाहिताग्निः—अगृहीतगृह्याऽग्निः।
हविर्निर्वापः—हविषश्चतुर्वारं पात्रे करणम्।
अक्षणया—सन्ततधारया।
पत्नीयोक्त्रमोचनम्—पत्न्या उत्थानम्।
पाञ्चदश्यं—प्रकृतियोगे पञ्चदश ऋचः।
साप्तदश्यं—मित्रविन्दादिप्रकरणे सप्तदश ऋचः। विकृतिषु गमनम्।
निर्वपामि—सदने स्थापयामि।
चोदकेन—'प्रकृतिवद्विकृतिः कर्तव्या' इतिवाक्येन।
उदितहोमिनः—कठास्तैत्तिरीया मैत्रापणीयाश्च।
अनुदितहोमिनः—बह्वृचाः कातीयाः छन्दोगाश्च।
प्राशित्रहरणं—भक्षणार्थदत्तहविर्भागः।
आमनहोमाः—वैश्वदेवीं सांग्रहणीं निर्वपेत्। ग्रामकामः, काम्येष्टौ होमाः, आमनदेवार्थं होमाः, ब्रामनदेवानस्य देवाः, अनस्य देवाः, अमनसे स्वाहा, रेतस्विने, स्वाहा, आमनहोमाः॥
ज्योतिष्टोमे—त्रिपशवः—अग्नीषोमीयः, सवनीयः, अनुबन्ध्यश्च। क्रमशः औदवसथ्याहः, सौत्याहः, धिष्ण्याहश्च।
प्रासनस्य—प्रतिपत्तिकर्मणः कण्डूयनोपयोगात् अपूर्वजनकत्वम्।
पर्युदासः—तदन्यमात्रसंकोचः 'नोद्यन्तमीक्षेताऽऽदित्यम्' इक्षणविरोध्यनीक्षणसंकल्पो व्रतं मानसो व्यापारः 'कुर्यादि'ति। 'घटो नास्तीति' घटसत्त्वविरोध्यसत्त्वं बोधयति। 'नाऽनुयाजेषु ये यजामहं करोती'त्यत्र अनुयाजव्यतिरिक्तेषु यजतिषु 'ये यजामहं वदति'। यजतिषु वदतीतिसामान्यप्राप्तस्य अनुयाजातिरिक्ते वदतीति॥
विकल्पः—शास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधो विकल्पः—'एतदपि' 'तदपि' 'तत्रैतदि'ति'।
बाधः—प्रतिषेधशास्त्रेण विधिशास्त्रस्याऽत्यन्तबाधः, परस्परनिरपेक्षशास्त्रयोरत्यन्तबाध्यबाधकभावः। विरोधिनिषेधः।
उपसंहारः—संकोचः, पुरोडाशं चतुर्धा करोति, आग्नेयं पुरोडाशं चतुर्धा करोति, इतिविशेषे संकोचः, तन्मात्रे संकोचः।
प्रतिषेधः—नातिरात्रे षोडशिनं गृह्णाति, अतिरात्रे ग्रहणप्राप्तस्य विरोधस्य प्रत्यक्षस्य सत्त्वेन षोडशिग्रहणनिषेधः। रागतः प्राप्तौ

प्रतिषेधः। कलञ्जभक्षणब्राह्मणहवनादौ प्रतिषेधः। यज्ञावसरे व्रते स्वस्त्रीभोगोऽपि निषिद्धः।

प्रशंसा—शोभतेऽस्य मुखं य एवं वेद।

निन्दा—पूतिगन्धायतेऽस्य मुखं य एवमाह।

परकृतिः—परेण महता इदं कृतं तत्कुरु, यागोऽग्निना पुराकृतः।

पुराकल्पः—परवक्तृकार्थप्रतिपादकः 'तमशयद्धिया धिया त्वावध्यासुः।

सन्दिग्धार्थनिर्णायकः—अक्ताः शर्कराः उपदध्यात्, घृताक्ता इति, तेजो वै घृतमितिशेषात्।

विङ्गार्थे—व्यापारत्वं प्रवर्तनात्वं प्रवृत्तिप्रयोजकव्यापारत्वं शक्यतावच्छेदकम् जातौ शक्तिः।

लिङि—लिङ्त्वम्, एवं लेटि लेट्त्वं, लोटि लोट्त्वं, शक्ततावच्छेदकं, जातौ शक्तिः। व्यक्तिभानम् अर्थात्।

पौनरुक्त्यम्—'प्रकृतौ वाऽद्विरुक्तत्वात्'-इतिवाक्येन सह पौनरुक्त्यम्।

पूर्णमासो यागो—दिनद्वयम्, पूर्णिमाप्रातस्तः प्रतिपत्पूर्वाह्णे समापनम्। वसन्तेऽप्यारम्भः।

दर्शयागो—दिनद्वयम्, अमावास्याप्रातरारभ्य प्रतिपत्पूर्वाह्णे समापनम्।

पूर्णिमायाम्—अग्निदेवताकः पुरोडाशद्रव्यकः-१। विष्णुप्रजापत्यग्नीषोमाऽन्यतमदेवताकः उपांशुयाजाख्यः-२। अग्नीषोमदेवताकः पुरोडाशद्रव्यकः-३। प्रधानास्त्रयः। अन्ये यागहोमादयस्तदंगानि।

अमावास्यायाम्—आग्नेयः पुरोडाशयागः-१। ऐन्द्रो दधियागः-२। ऐन्द्रः पयोयागः-३। प्रधानास्त्रयः। सकृदनुष्ठानम्।

दर्शपूर्णमासौ—नित्यौ काम्यौ च यागौ।

अग्निहोत्रहोमः—नित्योऽनित्यः, सामान्यो विशेषश्च।

अग्नीषोमीयपशुयागे—मन्त्रा उपांशुचातुःस्वर्येण पठनीया यजुर्वेदीया अध्वर्युणा, होत्रा तु-ऋग्वेदीयाः-याज्या-पुरोनुवाक्या-प्रैषादिरूपाः, ऐकस्वर्यणपठनीयाः। अध्वर्युणा प्रैषास्तु अत्युच्चैः पठनीयाः।

पौर्णमास्याम्—अग्निषु अग्न्योः समन्त्रकं प्रतिष्ठापनम्।

उशीरचन्दनम्—वीरणीयं चन्दनम्।

कुशमुष्टिः—प्रथमः प्रस्तरः। पञ्चदश समिधः सामिधेन्यर्थम्, तिस्रः परिध्यर्थम्, द्वे आघारसमिधौ, एका अनुयाज्यार्था।

अग्नयः—आहवनीयः, दाक्षिणकः, आवसथ्यः, सभ्यः, प्रवमानः, पावनः, शुचिश्च। अन्येऽपि यथासम्भवाः।

अरणिद्वयम्—शम्यां प्ररूढोऽश्वत्थः, तच्छाखाऽर्धद्वेधाभागौ।

अग्निहोत्रं—प्रथमा पयसः आहुतिः अग्निदैवत्या। प्रातः प्रथमा स।

सूर्यदैवत्या, द्वितीया प्रजापतिदैवत्या। सर्वाश्चैतस्त्र आहुतयोऽग्निहोत्रनाम्न्यः 'छत्रिणो यान्ती'तिवल्लक्षणा।

पञ्चमप्रयाजस्य—स्विष्टकृदाज्यभागप्रयाजाऽनुयाजदेवतास्तत्तत्कर्मप्रधानाः अग्निदेवतायै पूर्वं सोमदेवतायै अपरमाज्यभागं दद्यात्।

प्रधानयागः उपांशुः—विष्णवाद्या देवताः, आज्यं हविः, आज्यापुरोवाक्यापाठः उपांशुपाठः, अग्नीषोमदेवताकं प्रैषं, पुरोडाशखण्डम् अग्निषोमदेवताभ्यां जुहुयात्। पार्वणं होमं जुहुयात्, अत्र पूर्णमासो देवता, ततो नारिष्ठहोमाः।

स्विष्टकृद्यागः—हुताऽवशेषं स्विष्टकृदग्नये जुहुयात्।

अनुयाजास्त्रयः—देवो बर्हिः, देवो नराशंसः, देवोऽग्निः स्विष्टकृत्। सूक्तवाक् मन्त्रः। शंयूवाक् मन्त्रः।

अग्निहोत्रे—अग्निर्गृहपतिः, रयिपतिः, पुष्टिपतिः, कामोऽन्नाद्यो वा चत्वारः। पशुकामः स्वर्गकामः पयसा, इन्द्रियकामोदध्ना, ग्रामकामो यवाग्वा, अन्नकाम ओदनेन, ओजोबलकामस्तण्डुलैः, तेजस्कामोघृतेन जुहुयात्।

अग्निहोत्रे—सार्वदिकोऽग्निर्गार्हपत्यः अमावास्या रात्रावग्निहोत्रं कार्यम्।

पौर्णमास्यां—प्रथमेऽग्नये निर्वापः, ततोऽग्निषोमाभ्याम्।

आग्नेयः—अष्टकपालश्रपणः पुरोडाशः।

अग्नीषोमीयः—एकादशकपालश्रपितः पुरोडाशः।

पञ्चप्रयाजाः—प्रतिप्रयाजम् आश्रावणम्, प्रत्याश्रावणम्, प्रैषदानम्, याज्यापाठाः, होमाः।

आग्नीध्रः—ऋत्विक्चतुर्थः। अध्वर्युकर्तृकम् 'आश्रावये' त्याश्रावणम्। अग्नीध्रकर्तृकम् 'अस्तु वौषट्' इतिप्रत्याश्रावणम्। होतृकर्तृकः 'यज' इति प्रैषो याज्यावषट्कारपाठः। 'ये यजामहे' याज्यापाठः।

सोमयागे—चातुर्मास्यपर्वाणि, वैश्वदेवः, वरुणप्रघासः, साकमेघः, शुनासीरीयः।

वैश्वदेवे—अष्टौ यागा वैश्वदेवकर्मनामधेयाः, तत्र–आग्नेयः, सौम्यः सावित्रः, सारस्वतः, पौष्णः, मारुतः, वैश्वदेवी, द्यावापृथिव्यम्।

पत्नीसंयाजादिः—तत्र–सोमः, त्वष्टा, देवपत्न्यः, राका, सिनीवाली, कुहूः, अग्निर्गृहपतिर्देवता, समष्टियजुःसंज्ञकं होमत्रयम्।

दर्शयागे—आग्नेयः पुरोडाशः, ऐन्द्रो दधिद्रव्यकः, ऐन्द्रः पयोद्रव्यकश्च। अमावास्यादेवताकःपार्वणहोमः।

पशुयागे—एकादश प्रयाजाः–समिधः, तनूनपात् नराशंसो वा, इडः, बर्हिः, द्वारो देव्यः, दैव्यौ उपासा नक्ता, दैव्यौ होतारौ, तिस्रो

देव्यः, त्वष्टा, वनस्पतिः, स्वाहाकृत्यश्च, दैव्यमाज्यम् ।

साकमेधपर्व —चतुःकर्माणि—अनीकतवत्यादय इष्टयः, महाहवींषि, पितृयज्ञः, त्र्यम्बकहवींषि च, अष्टाकपालः पुरोडाशः, अग्निरनीकवान् देवता, मध्यन्दिने सान्तपनीष्टिः, चरुर्द्रव्यम् , मरुतः सान्तपना देवताः । सायं गृहमेधीयेष्टिः, दुग्धपक्वचरुर्द्रव्यम् , ओदनः दुग्धपाकः, मरुतो गृहमेधिनो देवताः । आघारप्रयाजाऽनुयाजसामिधेनीनाम् अनुष्ठानम् ।

स्विष्टकृद्यागः—वृषभखेलनेष्टिः, सप्तकपालः पुरोडाशः, मरुतः क्रीडिनो देवताः, मरुतः स्वतवत्यो वा ।

महापितृयज्ञः—साकमेधपर्वान्तर्गतः, षट्कपालः पुरोडाशः, धानाः,—भ्रष्टयवाः, पयोभर्जितयवचूर्णम्। अथ देवताः—सोमः पितृमान् , पितरो बर्हिषदः, पितरोऽग्निष्वात्ताः । मन्थं—मथितयवचूर्णम् । 'आ स्वधा' आश्रावणम् । 'अस्तु स्वधा' प्रत्याश्रावणम् । 'सोमं पितृमन्तं यज' इति प्रैषः । 'ये यजामहे' इतिस्थाने 'ये स्वधामहे' इति । वौषट्' इतिस्थाने 'स्वधा नमः' इतिपठेत् । अग्निः कव्यवाहनः । स्विष्टकृत् देवता । पिण्डत्रयं—पितृपितामहप्रपितामहेभ्यः । शय्योपबर्हणवस्त्राञ्जनादीनि दानानि ।

पशुसंज्ञपनहोमादिः—अध्रिगुप्रैषा मन्त्राः, एकादशम् आज्येन कृत्वा वपामाहवनीये जुहुयात्, इन्द्राग्नी सूर्यः प्रजापतिर्वा देवताः, शामित्रोऽग्निः, चात्वाले हस्तप्रक्षालनम्, पशुपुरोडाशरूपामिडां भक्षयेयुः ॥

अनुयाजः—एकादश एकादश देवताः, पुच्छेन पत्नी संयाजाननुतिष्ठेत् ऐष्टिकानि पात्राणि ।

राजसूये—पर्वाणि चत्वारि, पूर्णिमापर्वाणि, वैश्वदेवः, वरुणप्रधानाः, साकमेधाः, शुनाशीरीयः, वैश्वानरेऽन्वारम्भणीयेष्टिः, वैश्वानरपार्जन्येष्टिः, द्वादशकपालः पुरोडाशः, चरुर्द्रव्यम्, वैश्वानरः पर्जन्यश्च देवते । वैश्वदेवेऽष्टौ यागाः ॥

चातुर्मास्यानि—अष्टकपालः पुरोडाशः, चरुः द्वादशकपालः पुरोडाशः, चरुः, पिष्टकचरुः, सप्तकपालः पुरोडाशः,आमिक्षा, एककपालः । पुरोडाश, इतिद्रव्याणि क्रमेण । वाजिनहोमः, नव प्रयाजाः, नवाऽनुयाजाः ॥

वरुणप्रघासपर्व—आषाढ्यां वा श्रावण्यां पूर्णिमायाम् । नव यागाः—आग्नेयः, सौम्यः, सावित्रः, सारस्वतः, पौष्णः, ऐन्द्राग्नः, मारुतः, वारुणः, कायः । आमिक्षा द्रव्यम्, वारुणस्नानं, स्त्रियाः जारसंगदोषनाशः अवभृथम् ।

अग्निष्टोमः प्रकृतिः—सोमयागो विकृतिः, अग्निष्टोमस्तोत्रेण समाप्यमानत्वात् अग्निष्टोमः दशरात्रादिः। पुनः पुनः अनुष्ठानम् दशरात्रादिः, सोमयागश्चतुर्धा-एकाहः, अहीनः, साद्यस्कः सत्रं चेति। एकदिनीयतः सहस्राऽब्दादिपर्यन्तः। सम्वत्सरो दिनपरः। रात्रिसत्राणि शतरात्रपर्यन्तानि।

सोमप्रवाको—जनः अयनसत्राणि शतपराणि।

सोमलता—सोमरसः।

गार्हपत्याऽग्नौ अरणिजन्ये आहवनीये चतुर्विंशतिहोमान् हुत्वा होतृहोमान् दीक्षणीयेष्टिं, एकादशकपालः व्रीहिपुरोडाशः, अग्नाविष्णू देवते। जायापती अंजनेन अक्षिणी। नवनीतेन देहौ लिम्पेयाताम्। दीक्षाहुतयः षट्। पत्न्याः शिरसि इषिकाजालम्, मुष्टिमोडनम्, सुत्यादिनम्।

त्र्यम्बकहवींषि—अदितिदेवताको यागः, रुद्राय होमं कुर्यात्।

आग्रयणेष्टिः—नवाऽन्नेष्टिः अग्निः, इन्द्राग्नी, विश्वे देवाः, द्यावापृथिव्यौ देवताः, अमायां पूर्णायां च। शरदि वसन्ते वर्षासु च। पुरोडाशोऽष्टाकपालः, द्वादशकपालः, चरुः, एककपालः, सोमो देवता, चरुः—श्यामाकद्रव्यम्।

अवभृथेष्टिः—अग्निवरुणौ आज्यभागदेवते। चत्वारः प्रयाजाः, द्वावनुयाजौ, वरुणः पुरोडाशदेवता, जले होमाः, आमिक्षायागः, धाताऽनुमतिः राका सिनीवाली कुहूः पञ्चदेवताः।

नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात्' (२।४।२।८)।

'सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् प्रत्ययाच्च' (४।३।७।१५, १६)।

'कर्माऽर्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्' (३।८।१५।२८)।

'धर्मस्य शब्दमूलत्वात् अशब्दम् अनपेक्ष्यं स्यात्' (१।३।१।१)।

'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्, तस्मात्स्वयं प्रयागं स्यात्' (३।७।८।१८)॥

'अपि वा कर्मसामान्यात् अशब्दमनपेक्ष्यं स्यात्' (१।२।१।२)।

'आम्नायस्य क्रियार्थत्वात् आनर्थक्यम् अतदर्थानाम्, तस्मादनित्यमुच्यते' (१।२।१।१)।

'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्मक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' (१।१।४।४)।

'चोदनालक्षणोऽर्थो धर्मः' (१।१।२।२)।

'स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् (नास्ति यजमानस्य प्रतिनिधिः, मृते तु ऋत्विक् स्यात्)। (६।३।६।२१)॥

'भुजिक्रियायामोदनः करणं, शाकसूपादयः सन्निपत्योपकारिणः' पीठदीपस्थाल्यादयः आरादुपकारि-

णः। भावनायां यागः करणम्, अवघातादयः सन्निपातिनः, प्रयाजादयः आरादुपकारिणः (८।१।३) टीकायाम्॥

'विष्णुयागस्येति'श्लोकः, शत्रुनाशाय-होमः' (१०।१।६)।

'चुञ्चुपाकारमिक्षुदण्डं निर्धयन्तो भक्षयन्ति' (१०।२।३)।

'मरणकामो हि एतेन यजेताऽनामयः स्वर्गं लोकमियात्'(१०।२।२३)।

'आर्भवे स्तूयमान औदुम्बरीं दक्षिणेन देशेनाऽऽहतेन वाससा परिवेष्टय 'ब्राह्मणाः समापयत मे यज्ञम्' इति सम्प्रेष्याऽग्नि प्रविशति' (शाबरभाष्यम्)।

यजमानकर्तृकं बाध्यम्, अन्यत् क्रत्वर्थं तु कार्यम्, आर्भवपवमानस्तूयमानत्वं, यजमानमरणक्षणः।

'सः स्वामी स्यात् तत्संयोगात्' (६।३।९।२३)।

'यः फलं प्राप्नोति सः स्वामी' शा० भा० सूत्रं २४)।

वायुपुराणे—'पलाशफल्गुन्यग्रोधाः प्लक्षाऽश्वत्था विकंकताः। उदुम्बरस्तथा बिल्वश्चन्दनो यज्ञीयाश्च ये'। फल्गुः—कृष्णोदुम्बरः। विकंकतः—विकलतरुः। 'सहलो देवदारुश्च शालश्च खदिरस्तथा। समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः'॥ सरलः—पीतवेरजः। शालः—रालवृक्षः। खदिरः—खेरनामकः।

भागवते (९।७।) (९।१६) तमेऽध्याये शौनःशेपस्य कथा—हरिश्चन्द्रो वरुणं गत्वा 'मे पुत्रो जायतां तेनैव त्वां यक्ष्ये' इति याचनया रोहितं सुतं लेभे'। वरुण एत्य–अनेन मां यजस्वेति प्राह 'दशदिनेषु, अदन्ते, पुनर्दन्ते, युद्धयोग्ये, पुत्रे मेध्ये जाते अर्पयिष्ये, इतिवरुणं वञ्चयामास। रोहितः प्राणरक्षणाय वनं प्रययौ। वरुणो ज्ञात्वा हरिश्चन्द्रम् उदररोगिणं चकार, रोहिणो वने पञ्चवर्षाणि उषित्वा षष्ठे वर्षे स्वमरणनिवृत्त्यर्थम् अजिगर्तद्विजस्य पुत्रं शुनःशेपं क्रीत्वा गृहमागत्य पित्रे दत्वा ववंदे। तेन पुत्रेण हरिश्चन्द्रो मुक्तोदररोगः पुरुषमेधं चकार। शुनःशेपं न जघान,। शुनःशेपो देवादीन् स्तुत्वा पाशबन्धान्मुक्तः। तं शुनःशेपं विश्वामित्रः स्वयं पञ्चाशत्पुत्रेषु ज्येष्ठं चकार। यज्ञमण्डपे देवैः रक्षितः शुनःशेपो भार्गवोऽपि गाधेयो देवरातः कौशिकगोत्रोऽभवत्। इति कथानकम्।

**प्रवर्ग्यं कर्म**—शिरःसन्धानम् तदाख्यानं तथाहि—

पूर्वं देवा विष्णुना सह कुरुक्षेत्रे सत्रमन्वतिष्ठन्, तद्यशो विष्णुरवाप, तदसहमाना देवा विष्णुमुपारुन्धत, विष्णुर्धनुरिषं सृष्ट्वा तेन देवान् व्यद्धमारभत, भीतान्देवान्वीक्ष्य स्वधनुःकोटिं स्वचुबुकस्याऽधःकृत्वा द्वितीयां कोटिं

भूमौ कृत्वाऽवष्टभ्याऽवतिष्ठत्, तावद् वम्रयो भूमौ धनुर्ज्यामच्छिन्दन्, तेन वेगाद्धनुःकोटिः शिरः कण्ठादुत्पाट्याऽऽकाशे प्रासयत्, यज्ञरूपविष्णोः शिरश्छेदेन फलहीना देवाः शिरःसन्धानार्थम् अश्विनावप्रार्थयन्, तौ यज्ञे दर्विभागमयाचताम्, देवदत्तभागं लब्ध्वा शिरः प्रतिसमधत्ताम्। तदेतद् यज्ञशिरःप्रतिसन्धानरूपं प्रवर्ग्यकर्म। महावीरपुत्तलं यज्ञशिरोरूपम्॥

**सामिधेनीकर्म**—तत्र प्रजापतिर्देवता, तां मनसा ध्यायेत्, न मन्त्रानुच्चारयेत्। 'कदाचिद् वाङ्मनसयोर्देवेभ्यो हव्यवाहने कलहात् ते वाङ्मनसी प्रजापतिमगच्छताम्। प्रजापतिराह—मनः श्रेष्ठम्, वाङ् तु दूती। तदा वाङ् क्रुद्धाऽशपत्,—हे प्रजापते!, न त्वां मन्त्रमुच्चार्य कश्चिदपि जुहोतु। अतो मन्त्राननुच्चार्य, मनसा ध्यात्वा, ऋत्विजो जुह्वति। सामिधेनीसंज्ञका एकादश ऋचः। समिधः इध्मकाष्ठानि आहवनीये होतव्यानि, आज्यधाराश्रावणम्, प्रजापतितर्पणम्॥ इन्द्रसामिधेनीकर्म तु समन्त्रोच्चारणपूर्वकमेव॥ इत्येवं प्रजापतेर्मन्त्राऽनुच्चारणमुपांशुस्मरणमिति॥ उपांशुस्मरणेनाऽपूर्वोत्पत्तेरभ्युपगमात्॥

अथ—अदृष्टमपूर्वं धर्माऽधर्माख्यं विहितकर्मजन्यं, कर्माणि निमित्तानि, आत्मगुणत्वेनाऽऽत्मा समवायी। अथ तर्हि ज्ञानाऽभावेनेच्छादिजन्यत्वेन ज्ञानभावनेच्छाद्या असमवायिकारणानि भवन्ति, स्वर्गादीनि काम्यानि त्वनागताऽवस्थानि प्रयोजकानि भवन्ति। तथा चाऽऽत्मविशेषगुणेषु यथायथं प्रयत्नं प्रतीच्छायाः, इच्छां प्रति ज्ञानस्य, द्वेषं प्रत्यपि ज्ञानस्य, सुखं प्रति धर्मस्य, दुःखं प्रत्यधर्मस्य, भावनां प्रति ज्ञानस्य, वासनां प्रति मोहस्य, धर्मं प्रति भावनायाः, अधर्मं प्रति वासनायाः, स्मृतिं प्रति संस्कारस्य, असमवायिकारणत्वं सम्भवेत्, शब्दोत्तरजायमानशब्दे पूर्वपूर्वशब्दस्याऽसमवायिकारणत्वमिव ज्ञानोत्तरज्ञानादाविच्छोत्तरेच्छायास्तदुत्तरयत्नादीनां चाऽवश्यमसमवायिकारणत्वं स्यात्, तत्कथमात्मविशेषगुणेष्वसमवायिकारणत्वं नास्तीति प्रामाणिकैरभिमतमिति चेदुच्यते—

बाह्यविषयेष्विन्द्रियाणां प्राथमिकयोगजन्ये प्रकटज्ञाने चाक्षुषरासनघ्राणजस्पार्शनश्रावणादिविभिन्नसंस्थाके तत्तन्नियमनार्थमन्वयव्यतिरेकप्रयुक्तोऽव्यभिचारी कश्चिद्धेतुरंगीकार्यः, आत्मविषययोगो वाऽऽत्मेन्द्रियविषययोगो वेन्द्रियविषययोगो हि सम्भवदुपस्थितिकोऽपि ज्ञानसातत्यद्वारसातत्यप्रयुक्तसातत्यतत्फलाऽनाधानत्वादिदोषसातत्याऽपरिहारकत्वेन नियतव्यवस्थापकं तदितरत् कारणं तथाविधं सर्वैर्मानसमान्तरमणुकरणं स्वीकृत्य तत्संयोगस्य बाह्यज्ञानव्यवस्थानुरोधेन सुषुप्तौ च तथा ज्ञानाऽभावाऽनुरोधेन कारणत्वं व्यवस्थाप्य-

ते, एवं च सति ज्ञानादिविशेषगुणान्प्रति एकस्याऽऽत्ममनःसंयोगस्य बाह्य-संयोगनियामकस्याऽवश्यक्लृप्तनियतपूर्ववर्तिनोऽसमवायिकारणत्वे लाघवकृते-ऽनुगतीकृते मार्गिते सति विभिन्नानां विभिन्नधर्मैश्च हेतुत्वे गौरवतर्कपराहत-त्वात् प्राप्तमपि तथाविधकारणत्वम अन्यथासिद्धतां गतं तत्र तत्र नाऽङ्गी-क्रियते ॥

किञ्च सुखमपि न सत्तामात्रेण सुखहेतुः, ज्ञानाऽपेक्षणे तु तेनैवाऽन्या-सिद्धिः, न च तज्ज्ञानं तस्य व्यापारः इति नाऽन्यथासिद्धिः, अनागतस्य तस्य व्यापारत्वाऽयोगात्, तथा च पुत्रादिसुखादिविषयत्वेन ज्ञानस्य सुखजनकत्वं, न तु विषयस्याऽपि तस्य, कारणतावच्छेदकमात्रत्वात्, तथा च कारणता-वच्छेदकमन्यथासिद्धम् । मनःसंयोगस्यैवाऽसमवायिकारणस्य सत्त्वेन तस्याऽ-समवायिकारणत्वे मानाऽभावात् । सुखादिष्वात्मादिबन्दीग्रहस्याऽत्यन्ताऽ-भावव्यतिरेकमुपादायैवोन्मोचनात्, सामग्रीकादाचित्कत्वस्य पूर्वपूर्वसामग्र्य-नुविधानात्, आधारत्वस्य सम्बन्धभेदेनाऽन्यथासिद्धत्वात्, आधारानुमान-स्याऽप्यन्यथासिद्धिशंकादूषितत्वात् ।

उत्पादकसजातीयाऽत्रस्थोत्पादकत्वेऽपि शब्दे ज्ञानादौ इच्छायां स्मृतौ धर्मादौ तत्त्वाऽभावात् । किञ्च—नित्यमपि विशिष्टं सत् विशेषणजन्यत्वो-पचारं लभते, तथा च विशिष्टज्ञानवता जनिताः संस्काराः स्मृत्यात्म-विशिष्टज्ञानवन्तमेवात्मानं भावयन्ति, शब्दवताऽऽकाशेन जनितः शब्दः पुनः शब्दवन्तमेवाऽऽकाशं कुरुते, विषयनिरूप्यधर्मवता जनिता भावना तादृश-स्मृतिमन्त्रमात्मानं कुरुते, स्वर्गादीच्छावताऽऽत्मना जनिताऽवगता शब्दार्थ-भावना संस्कारो वासना वा तद्वन्तमेवाऽऽत्मानं कुरुते, इच्छावताऽऽत्मना जनितेच्छाऽपि तादृशी, धर्मवताऽऽत्मना जनितो धर्मोऽपि धर्मवन्तमात्मानं कुरुते, तथा च तत्तद्गुणविशिष्टात्मा तत्तत्समवायिहेतुः सन् स्वनिष्ठस्वा-वच्छेदकविशेषगुणान् अन्यथासिद्धानापादयति दण्डरूपवत् ।

अथ—असमवायिकारणत्वं चाऽदृष्टस्य सुखदुःखे प्रति, तयोः पूर्वमसत्त्वेन तद्वैशिष्ट्यं न प्राङ्लभ्यते इति चेन्न । समस्तात्मगुणोत्पत्तावसामर्थ्येऽन्यस्य समर्थस्य स्वीकारे तत्कृताऽन्यथासिद्धत्वम् ॥

अथ—आत्मन इच्छादिसमवायिकारणत्वं सर्वसम्मतम्, ज्ञानस्याऽऽत्म-धर्मत्वमपि चैतन्यस्य मानससाक्षितया सर्वप्रामाणिकतया च सम्मतम् । इच्छादिसमवायिकारणत्वसिद्धौ सत्याम्—'इच्छात्वं, संयोगाऽसमवायि-कारणकवृत्ति, नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वात्' इति, आत्ममनःसंयोगाऽसमवायिकारणककार्यतावच्छेदकतत्तज्जातिमत्तया

सिद्धौ सत्यां तदितराऽसमवायिकारणकत्वत्वस्यादननुगतप्रयोज्यस्य स्वयं-पराहतत्वात्, आत्मसंयोगमात्रस्येच्छादिजनकत्वेऽतिप्रसंगात्। आत्ममनः-संयोगस्याऽऽत्मगुणानां चोभयाऽसमवायिकारणत्वे कल्पनागौरवात् अव्य-वस्थानात्। व्यापकमनोयोगस्याऽसमवायिकारणत्वेऽपि अव्यवस्थानात् अणु-मनोयोगस्याऽसमवायिकारणत्वांगीकारात्। अदृष्टेऽसमवायिकारणत्वं तु मनोयोगकारणताकृतपराहतम्। निमित्तमात्रत्वे तु नाऽनुपपत्तिः असमवा-यिकारणत्वपरिभाषाऽपि सति निमित्ते प्रवर्तते। असमवायिकारणत्वस्थाऽऽ-त्मविशेषगुणेषु तान्त्रिकाणामव्यवहारात् न प्रवृत्तिः। व्यवहारस्य अन्यथा-सिद्धिपराहतत्वेन तथाविधकारणतायां मानाऽभावात्। असमवायिकारणत्व-मिति या परीक्षकाणां परिभाषा सा यत्र परीक्षिता सती निवर्तते तत्र नाऽसमवायिकारणतेति। तथा च नाऽदृष्टं वा ज्ञानादि विशेषगुणपरिभा-षितमात्मगतगुणव्रातमसमवायिकारणमिति ॥

असमवायिकारणनाशे कार्यद्रव्यस्य नाश इति नियमः। कार्यद्रव्यसत्त्वेऽ-समवायिकारणसत्त्वमिति नियमः। जन्यभावस्य समवायिकारणकत्वनि-यमः। जन्यज्ञानसामान्यस्याऽऽत्ममनोयोगात्मकाऽसमवायिकारणकत्वनियमः। ज्ञानसमानाधिकरणविशेषगुणानामपि ज्ञानकारणताकनियमनियमः। आत्म-विशेषगुणेषु निमित्तकारणतेति सृष्टेरदृष्टानुरूपभवनतानियमनियमानुरुद्धा। अवश्यक्लृप्तनियतपूर्ववर्तिलघुकारणेन कार्यनिर्वाहे तदन्यस्मिँस्तत्तथाविधाऽ-कारणत्वमिति परीक्षकपरिभाषास्वीकृतं तत्त्वज्ञानसौकर्यार्थमिति। असुकरं गौरवं विपरीतमपि चाऽगत्या तु असति तर्कादिपराहनने प्रतिपन्नं परीक्षका-णामपि भवतीति तदनुसृतानामपि तत्तथैव नियमः। उद्देश्यसिद्धौ लक्षण-सिद्धया निर्णीतस्वीकृतिरिति नैसर्गिको न्यायः शास्त्रप्रामाण्यव्याप्तः। न्या-यऽभावेऽशास्त्रत्वं स्यात् अप्रामाण्यं स्यात् अनवधेयत्वं स्यादिति ॥

श्रीकृष्णवल्लभाचार्यैः संगृहीता परिष्कृतिः।
श्रुत्यादीनि च तत्सिद्धयादीनि क्रमोऽप्यपूर्वता ॥ १ ॥
मखाश्च विधिवाक्यानि स्तोत्राद्याः ऋत्विजस्तथा।
संगतयश्च विषया द्वादशाऽध्यायवर्णिताः ॥ २ ॥
पारिभाषिकशब्दानां विशदर्थनिदेशनाः।
न्याया विशेषा बाधाद्या अनुष्ठानानि देवताः ॥ ३ ॥
इतिवृत्तान्तकश्चाऽऽत्मविशेषगुणमण्डले।
असमवायिहेतुत्वेऽन्यथासिद्धिश्च दर्शिता ॥ ४ ॥

कृताऽऽवश्यकबोध्यार्था मीमांसाऽर्थांशरूपिणी ।
सर्वोपकारिणी चाऽस्तु त्वंगत्वादिपरिष्कृतिः ॥ ५ ॥

अभ्यासिनां सुसरला दृष्टाऽपूर्वफलप्रदा ।
ब्रह्मसायुज्यसन्धाता स्वामिनारायणेऽर्पिता ॥ ६ ॥

इतिश्री मद्वैष्णवविद्वत्सार्वभौम-दार्शनिकरत्नाननषड्दर्शनाचार्य-नव्य-
न्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थकाव्यकुशल-महोमहो-
पाध्याय-पण्डितश्रीकृष्णवल्लभाचार्यस्वामिनारायण-
विरचिता—मीमांसाविषयिणी 'अंगत्वादि-
परिष्कृतिः' सम्पूर्णा ॥

# मूलश्लोकवाक्यानुसूची

पृष्ठम्

श्लोकादिः

१ वासुदेवं रमाकान्तं नत्वा लोगाऽक्षिभास्करः ।
कुरुते जैमिनिनये प्रवेशायाऽर्थसंग्रहम् ॥ १ ॥
३ 'अथाऽतो धर्मजिज्ञासा' ।
,, 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः ।
'धर्मस्तु तद्विधिरि'त्यमरः ।
'धर्माः पुण्ययमन्यायस्वभावाऽऽचारसोमपाः' इत्यमरः ।
'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे'तिमेदिनी ।
५ 'स्वाध्यायोऽध्येतव्यः' ।
'चोदनालक्षणोऽर्थो धर्मः' ।

पृष्ठम्

'तस्य निमित्तपरीष्टिः' ।

'तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' ॥

'औत्पत्तिकस्तु शब्दस्याऽर्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चाऽर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्याऽनपेक्षत्वात्' ।

'वेदप्रतिपाद्यः प्रयोजनवदर्थोधर्मः' ।

६ 'स्वाध्यायोऽध्येतव्यः' ।

९ 'चोदनालक्षणोऽर्थो धर्मः' ।

१० 'यजेत स्वर्गकामः' ।

११ 'अग्निहोत्रं जुहुयात् स्वर्गकामः' ।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' ।

'न हिंस्यात् सर्वा भूतानि' ।

'वेदमधीत्य स्नायात्' ।

'कारीर्या वृष्टिकामो यजेत' ।

१३ 'तद्भूतानां क्रियाऽर्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' ।

'पदानि हि स्वं पदार्थमभिधाय निवृत्तव्यापाराणि, 'अभिधाव्यापारः पदार्थेष्वेव' ।

१५ 'ओदनं पचेत्' 'गगनं खादेत्' ।

१७ 'अस्मात्पदादयमर्थो बोद्धव्य' इति भावना एषणा' ।

२२ 'ऐन्द्रं दध्यमावास्यायाम्' । 'ऐन्द्रं पयोऽमावास्यायाम्' ।

,, 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पूर्णमास्यां चाऽच्युतो भवति' ।

,, 'तामब्रूतामग्नीषोमावाज्यस्यैव तावुपांशुः पौर्णमास्यामिति' ।

२३ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' ।

,, 'चित्रया यजेत पशुकामः' ।

,, उद्भिदा यजेत पशुकामः' ।

,, 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति ।

,, 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' ।

,, 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' ।

,, 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' ।

२५ 'अग्निहोत्रं जुहुयात् स्वर्गकामः' ।

,, 'दध्ना जुहोति' ।

पृष्ठम्

२६ सोमेन यजेत'।
२७ 'उद्भिदा यजेत पशुकामः'।
२८ 'अग्निहोत्रं जुहोति'।
२९ 'दध्ना होमं भावयेत्'।
३२ 'दध्नेन्द्रियकामस्य जुहुयात्'।
३३ 'एतस्यैव रेवतीषु वारवन्तीयम् अग्निष्टोमसाम' ( कृत्वा ) 'पशुकामो ह्येतेन यजेदि'ति।
३४ 'समेषु कर्म युक्तं स्यादि'ति।
३५ 'अरुणया एकहायन्या गवा सोमं क्रीणाति'।
३६ 'व्रीहीन् प्रोक्षति'।
३७ 'इमामगृभ्णन् रशनाऽमृतस्येत्यश्वाऽभिधानीमादत्ते'।
३८ 'यदाहवनीये जुहोति'। 'पशुना यजेत'।
४० 'अनन्यलभ्यः शब्दार्थः'।
'ऐन्द्रया गार्हपत्यमुपतिष्ठते'।
४१ 'सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते'।
४२ 'बर्हिर्देवसदनं दामि'।
,, 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम् अर्थ-विप्रकर्षात्'। ( ३।३।७।१४ )
४३ 'स्यानन् ! ते सदनं कृणोमि'।
,, 'कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दराः।
गोधूमा व्रीहयो मुञ्जा एते दर्भाः प्रकीर्तिता॥ ( स्मृत्यर्थसारः )
,, 'कुशाऽभावे तथा काशान् दूर्वाव्रीहियवानपि।
तदभावे तु नीवारान् श्यामाकान् वा नियोजयेत्॥ ( शङ्खः )
,, "नभोमासस्य दर्शे ये कुशाः शुद्धा उपाहृताः।
अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः॥
कुशः प्रादेशमात्रः स्याद् द्विगुणो दर्भ उच्यते।
हस्तमात्रो भवेद् वज्रो गोपुच्छस्तृणमुच्यते॥
श्राद्धकाले कुशः श्रेष्ठो दानेषु दर्भ उच्यते।
आवसथ्ये भवेद् वज्रो गोपुच्छः प्रेतकर्मणि॥
पाणिनैकगुणं प्रोक्तं दर्भैः शतगुणं तथा।
अक्षय्यं खड्गपात्रेण पितृणां तर्पणं भवेत्"॥
४४ 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति'।

पृष्ठम्

४५ 'स्योनन् ते सदनं कृणोमि' ।

४७ 'प्रकृतिवत् विकृतिः कर्तव्या' ।

४७ 'प्रकृतौ वाऽद्विरुक्तत्वात्' ।

५० 'आश्रावये', 'अस्तु वौषट्' 'यज' 'ये यजामहे' ।

,, 'अग्नये इदं नमम' ।

५१ 'अग्निरिदं हविरजुषत' ।

,, 'महेन्द्र इदं हविरजुषत' ।

५२ 'वैश्वदेवेन यजेत' । 'सार्थं चरुं निर्वपेत्' ।

,, 'सावित्रं द्वादशकपालम्' ।

५३ 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा' । ( १।८।१०।१५ )

,, 'यदाहवनीये जुह्वति तेन सोऽस्याऽभीष्टः प्रीतः' ।

,, 'पदे जुहोति' । 'वर्त्मनि जुहोति' । 'वल्मीकवपायामुत्सृज्य जुहोति' । 'अनारभ्याऽऽम्नायते' । सप्तदशसामिधेनीरनुब्रूयात्' ।

,, 'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' ।

५४ 'इन्द्राग्नी इदं हविः' ।

५५ 'इन्द्राग्नी इदं हविरजुषेताम्' ।

,, 'अग्नीषोमाविदं हविरजुषेताम् अवीवृधेताम् , महो-

,, 'ज्यायोऽक्राताम्' इति 'कृत्स्नोपदेशादुभयत्र सर्ववचनम्' । यथार्थं वा शेषभूतसंस्कारात्' ।

५६ 'समिधो यजति' ।

५७ 'दर्शपर्णमासाभ्यां स्वर्गं भावयेत्' ।

५८ 'प्रकृतिवत् विकृतिः कर्तव्या' ।

५९ 'सौर्ययागेन ब्रह्मवर्चसं भावयेत्' ।

,, 'समानयत उपभृतः' । 'यो वै प्रयाजानां मिथुनं वेद' ।

६० 'समानयते जुह्वाम् उपभृतस्तेजो वा' ।

,, 'यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान् तुदन्ते जुहोत्यभिजित्यै' ।

६२ 'साकांक्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण' । ( ३।१।१०।२० )

६३ 'अभिक्रामं जुहोति' ।

,, 'जुह्वा घृतमानयति' ।

६४ 'अक्षैर्दीव्यति' । ( आ. श्री. सू, १८।८।१ )

६६ 'अक्षैर्दीव्यति' ।

पृष्ठम्

६७ 'शौनःशेपाख्यानम्' ।

६८ 'राजसूयाय ह्येता उत्पुनाति' ।

६९ 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' ।

,, 'वैश्वानरं द्वादशकपालं निर्वपेत्' ।

,, 'इदाग्नी रोचनादिव' ।

७० 'अग्नेरहं देवयज्ययाऽन्नादो भूयासं, दब्धिरस्य दब्धो भूयासम् , अमुं दभेयम् , अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' ।

,, 'एतया वै दब्ध्या देवा असुरान् दभ्नुवन् ; तयैव भ्रातृव्यं दभ्नोति' ।

,, वैश्वदेवीं साग्रहणीं निर्वपेत् ग्रामकामः' ।

'आमनदेवा इति तिस्र आहुतीर्जुहोति' ।

७१ 'अमनसे स्वाहा, रेतस्विने स्वाहा, आमनस्य-आमनस्य-देवा इति तिस्र आहुतीर्जुहोति' ।

७२ 'सहस्रसम्वत्सरं तदायुषामसम्भवान्मनुष्येषु' । ( ६।७।३१ )

,, 'अहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषात्' । ( ६।७।१४ )

,, 'आदित्यो वा सर्वऋतवः, स यदोदेत्यथ वसन्तः, यदा सङ्गवोऽथ ग्रीष्मः, यदा मध्यन्दिनोऽथवर्षाः, यदाऽपराह्णोऽथ शरत् , यदाऽस्तमेत्यथ हेमन्त-शिशिरौ' ।

,, 'विश्वजिता यजेत' ।

७३ 'प्रजापतेर्जायमानाः पशवः, इदं पशुम् अग्नये त्वा इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमि' ।

७४ 'सान्नायं वा तत्प्रभवत्वात्' । ( ८।२।१३ )

७५ 'वैश्वदेवपर्व, पर्वाणि, महापितृयज्ञः' ।

७८ 'साकमेधपर्व, अवभृथम् , सवनीयःपाशुः' ।

८० 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः ।

८१ 'पदचातुर्विध्यम्' ।

८२ हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा पत्यञ्चः परेत्य सदसि भक्षात् भक्षयन्ति' ।

८३ 'पुरोऽध्वर्युर्विभजति' 'दर्शपूर्णमासाभ्यां यजेत' ।

८६ 'अग्नये इदं नमम' ।

८७ 'नीतासु दक्षिणासु चात्वाले गर्ते कृष्णाविषाणं प्रास्यति, कृष्णविषाणया कण्डूयति' । 'बृहस्पतिसवेन यजेत' ।

८८ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' ।

पृष्ठम्

'एकादश प्रयाजान् यजति'। 'एकादशाऽनुयाजान् यजति'। 'पृषदाज्येनाऽनुयाजान् यजति'।

८९ 'यद्यत्र प्रयोजनान्तरं स्यादुपलभ्येत, नोपलभ्यते ततो नास्ति'।

९२ 'गुणप्रधानविधिभ्यां क्रमं भावयेत्, क्रमेण चाऽपूर्वं भावयेत्' 'क्रमं भावयेत्, प्राशुभावं च भावयेत्'।

९३ 'वेदं कृत्वा वेदीं करोति'।

९४ 'वषट्कर्तुः प्रथमभक्षः'।

९७ 'आश्विनो दशमो गृह्यते'।

९८ 'अग्निहोत्रं जुहोति' 'यवागूं पचति'।

'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ'।

'गुरुं चैवाऽप्युपासीत स्वाध्यायार्थं समाहितः'। (याज्ञव० १।२६)

'आश्विनो दशमो गृह्यते'।

१०० 'यवाग्वाऽग्निहोत्रं जुहोति'।

१०१ 'अध्वर्युं त्वां वृणे'। होतारं त्वां वृणे'। 'आश्रावय, 'अस्तु श्रौषट्'।

'ताभ्यामेतदग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्'।

१०२ 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाऽच्युतो भवति'।

१०३ 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं निर्वपामि'।

अग्नेरहं देवयज्ययाऽन्नादो भूयासम्'।

'अग्निषोमयोरहं देवयज्यया वृत्रहा भूयासम्'।

१०३ 'समिधो यजति' 'तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति'।

१०४ 'भृगुवत् वीतहव्यवत् सवेदोवत्' इति आर्षेयवरणम्।

१०५ 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि'। 'स्वगादैव्या होतृभ्यः स्वस्तिर्मानषेभ्यः शंयुवाकाय संयोब्रूहि'। 'समिधोऽग्न आज्यस्य व्यन्तु'।

१०६ 'तदर्थशास्त्रात्'। (१।२।४।३१) 'मन्त्राणाम् अविवक्षितवचनवतो'।

'दर्शपूर्णमासादिभ्यः क्रमप्रकरणाभ्यां यावत्संस्पृश्यते तत्सर्वम् उपकारकत्वेन स्वीक्रियते'।

१०९ 'सह पशूनालभेत'।

११२ 'आश्विनग्रहं कृत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति'।

११३ 'प्रकृतिवत् विकृतिः कर्तव्या'।

पृष्ठम्

नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्' ॥ ( मनु० ४।३ )
'न लंघयेद् वत्सतन्त्रीं न प्रधावेच्च वर्षति ।
न चोदके निरीक्षेत स्वं रूपमिति धारणा (३८) ॥
'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।

१५२ 'यजतिषु ये यजामहं करोति नाऽनुयाजेषु' ।

१५५ 'चाऽनुयाजव्यतिरिक्तेषु यजतिषु 'ये यजामह' इति मन्त्रं कुर्यात्' ॥

१५६ 'उपसंहारो हि तन्मात्रसंकोचार्थः'। 'पर्युदासस्तु तदन्यमात्रसंकोचार्थः'॥

१५७ 'नातिरात्रे षोडशिनं गृह्णाति' । 'अतिरात्रे षोडशिनं गृह्णाति' ।

१५८ 'न कलञ्जं भक्षयेत्'-इति पुरुषं निवर्तयति' ।

१५९ 'नञः एष स्वभावो यत् स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्' । 'घटो नास्तीति घटत्वविरोधि घटाऽसत्वं नञ् गमयति' ।

१६० 'अर्थवादस्य प्राशस्त्यनिन्दितत्वे लक्षणा' ।

१६१ 'वायव्यं श्वेतमालभेत भूतिकामः' 'वायुर्वै क्षेपिष्ठा देवता' । 'बर्हिषि रजतं न देयम्' । 'आम्नायस्य क्रियार्थत्वात्' ॥ 'स्वाध्यायोऽध्येतव्यः' ।

१६२ 'सोऽरोदीत् यत् अरोदीत् तत् रुद्रस्य रुद्रत्वम्' । 'प्रजापतिरात्मनो वपामुदखिदत्' 'देवा वै देवयजनमध्यवसाय दिशा न प्राजानन्' ।

१६३ विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' ॥

१६४ 'अक्ता शर्करा उपदध्यात्' । 'तेजो वै घृतम्' । 'शोभतेऽस्य मुखं य एवं वेद' । 'असत्रं वा एतत् यत् अच्छन्दोमम्' । 'अश्रुतं हि रजतं यो बर्हिषि ददाति' । 'सोऽरोदीत्' । 'परेणमहता पुरुषेणेदं कर्म कृतम्' । 'अग्निर्वाऽकामयत' ।

१६५ 'अग्निर्हिमस्य भेषजम्' । 'इन्द्रो वृत्राय वज्रमयच्छत्' ।

१६६ 'यजेत स्वर्गकामः' ॥ 'यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्' ॥ 'धर्मस्य शब्दमूलत्वात् अशब्दम् अनपेक्षं स्यात्' । 'अपि वा कर्तृसामान्यात् प्रमाणम् अनुमानं स्यात्' । 'अष्टकादिस्मृतेर्धर्मे न मात्वं मानताऽथवा । निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता' ॥

१६७ 'बालानां सुखबोधाय भास्करेण सुमेधसा ।
रचितोऽयं समासेन जैमिनीयार्थसंग्रहः' ॥



## श्लोकाः

टीकाविहीने तु कृता हि टीका पूर्वे तु तन्त्रे खलु संग्रहेऽस्मिन् । दुर्बोध-शास्त्रे किमु मादृशानां दृष्ट्वाऽपिदोषं न सहन्ति धीराः ॥ १ ॥ यदाज्ञया बन्धविमोक्षणं विना स्वधर्मसेवा फलहेतुतां गता । प्रणौमि सोमं मृडमादि-कारणं किमन्यदेवैर्जनफल्गुहेतुभिः ॥ २ ॥ मदीययत्नः शिवपादसेवया गुरोः कटाक्षैकलवेन लब्धया । प्रयुज्यमानः शिवपादपङ्कजे स्वयं तु भूयान् मृड-तोषकारणम् ॥ ३ ॥ सुजनपदविनीतो दुर्जनाद् दूरनिष्ठो गुरुतरशिवभक्त-स्तेन लब्धाऽऽगमेक्षः । श्रुतिमणिपदनिष्ठो भिक्षुरामेश्वराख्यः सुजननय-निवेशाय प्रबन्धं चकार ॥ ४ ॥ गुणगणमणिसिन्धुः शम्भुपादैकभक्तो निगम-शिरसि निष्ठो जातवैराग्यचित्तः । श्रुतिनलिनविकासे भानुभावो य ईशस्त-मिह महिमपूज्यं नौमि गोपं यतीन्द्रम् ॥ ५ ॥ तस्मादेवगुरुवरादभीष्टलब्धं गोपालाश्रमपदगीयमानदैवात् । येनोमाधवचरणाऽब्जसेविनाऽत्र तं वन्दे महिमगुरुं विशालबुद्धिम् ॥ ६ ॥ या काशीर्निखिलगुरोर्महेश्वरस्य प्राणान्ते सकलशिवप्रदा प्रसिद्धा । यत्राऽहं सकलसुरेशलब्धतत्त्वस्तत्रेयं सुजनहितप्रभा निबद्धा ॥ ७ ॥ रामेश्वरस्य कृतिमाप्य विवेचितेयं श्रीकृष्णवल्लभविदा-किरणावलिश्च । मीमांसकश्रुतिगणेङ्गितसारभाव्या विद्वज्जनातिहृदयंगम-सम्मुदेऽस्तु ॥ ८ ॥

## टीका श्लोकाः—पृष्ठं १६७

भारते पश्चिमे प्रान्ते पुण्ये सागरसङ्गते । रेवताद्रिसमाधारे कङ्कसौराष्ट्र-विश्रुते ॥ १ ॥ वैक्रमेऽष्टादशशते वर्षे सर्वशुभावहे । बलिखातमहाराजः कूकावालाख्यभूपतिः ॥ २ ॥ यं प्रधानं नियोज्यैव ग्रामान् संयोज्य वै दश । अस्थापयद् राजधानीरूपां हि नगरीं शुभाम् ॥ ३ ॥ नामतः कुंकुमवापीं नवतिग्राममूर्धनीम । कूकानृपतिमान्यस्य राज्यकल्याणमिच्छतः ॥ ४ ॥ श्रीमत्कल्याणदेवानीकस्य ख्यातस्य तस्य वै । नवतिग्रामसमूहात्मकस्य मण्ड-लस्य यः ॥ ५ ॥ राष्ट्राध्यक्षो बली 'लिम्बा' देवानीकस्य पुत्रकः । कूका-वालानृपपुत्रे आलावालाऽऽख्यभूपतौ ॥ ६ ॥ राज्ये शासत्युन्नतिं वै राष्ट्रस्य कृतवांस्तदा । आलावालानृपे स्वर्गं याते राज्ञी च धीमती ॥ ७ ॥ राज्यं समकरोत् कम्री लिम्बादेवसहायतः । तस्य पञ्चमपुत्रस्य सर्वसद्गुणशालिनः ॥ ८ ॥ श्रीमद्गोपालदेवानीकस्य पुण्यवतो गृहे । धर्मपत्न्यां कम्भरायां देव्यां पुत्रस्तृतीयकः ॥ ९ ॥ वैक्रमे चन्द्रषण्णिधिभूमिते ( १९६१ ) वत्सरे शुभे । ऊर्जकृष्णाष्टमी (आश्विनकृष्णाष्टमी) प्रातः पुत्रो यो जन्म लब्धवान् ॥ १० ॥ ( ईशवीयख्रीष्टाब्दे ( ता० २१।१०।१९०५ ) शनिवासरे ) ॥ अधीतभाषा-

षड्वर्गो गुणातीतमुनेस्ततः । बालमुकुन्दमुन्याख्यशिष्यार्पितस्वजीवनः ॥११॥ वर्षे त्वेकादशे स्वामिमन्दिरे दीक्षितोऽभवत् । पुनर्दीक्षां दुर्गपुरे भाद्रे वै लब्धवान् शुभाम् ॥ १२ ॥ जीर्णदुर्गे च संस्थानं कृत्वाऽष्टादशवर्षकः । काशीमागत्य शास्त्राणि सर्वाण्यधीत्य तत्त्वतः ॥ १३ ॥ सन्दृब्धे येन भाष्ये वै प्रगल्भे सांख्ययोगयोः । वेदान्तन्यायसाहित्यसांख्ययोगसमाश्रयाः ॥ १४ ॥ टीकाग्रन्थाश्च सुस्पष्टा रचितास्तात्त्विकास्ततः । प्रमाख्यातिविमर्शाद्या भाष्यं ब्रह्मरसायनम् ॥ १५ ॥ सुधासिन्धोरथ श्रीस्वामिनारायणदर्शनम् । सत्सङ्गिभाष्यमथ वै हरिस्वरूपनिर्णये ॥ १६ ॥ तत्त्वप्रभावलीभूमण्डलीयाद्यास्तथाऽपरे । अपि ग्रन्थाश्च रचिताः सिद्धान्ता वर्णिताः स्फुटाः ॥ १७ ॥ दृष्ट्वा तं योग्यविद्वांसं सर्वसद्गुणशालिनम् । वृत्तालयपदाधीशाऽऽनन्दप्रसाददेशिकाः ॥ १८ ॥ वृत्तालये पुरे यस्मै सद्गुर्वाख्यं पदं ददुः । काशीपण्डितधौरेयैः सभायां काशिकापुरे ॥ १९ ॥ प्रदत्तं वैष्णवविद्वत्सार्वभौमपदं महत् । अन्ये उपाधयश्चापि काशीलब्धाः परीक्षणे ॥ २० ॥ गुर्वाशिषस्तथा लब्धा प्रसादफलबोधिकाः । श्वेतायनीयसंहितासम्पादनमथो कृतम् ॥ २१ ॥ श्रीकृष्णवल्लभाचार्यः स्वामिनारायणाश्रितः । न्यायाचार्यपदैरन्यैः सांख्यादितीर्थभूषितः ॥ २२ ॥ योऽसौ काशीं समागत्य तृणीकृतपरिश्रमः । अर्थैः स्वार्थं विहायेदं प्रकाशयति सादरम् ॥ २३ ॥ तस्मै मत्प्रियशिष्याय वश्यायाऽशेषभक्तये । सदानन्दमयायैवमाशीर्वादः प्रदीयते ॥ २४ ॥ पूर्णपण्डितभावस्त्वं यशोमुकुटमण्डितः । पूर्णाऽऽयुः सर्वपुण्यानामाश्रयः सन् सुखी भव ॥ २५ ॥ नव्ये न्याये च सांख्ये श्रुतिशिरसि च योगेऽन्यशास्त्रेषु योऽस्ति; मीमांसायां च काव्ये नवकृतिरचने पारगो दर्शनेषु । वाग्धारायां विमर्शे विबुधसदसि वैशेषिके लेखने च निष्णातश्चेतिहासे जयति स निगमे तन्त्रशास्त्रे पुराणे॥२६॥ श्रीकृष्णो वल्लभाचार्य इह सुरनिभश्चाऽर्हगाऽर्हः शुभाङ्को विद्वान् ज्ञाने प्रवीणो बुधपरिषदि काश्यां च यो लब्धकीर्तिः । मूर्धन्यं यत् सुधासिन्धुरसमरचद् ब्रह्मरासायनाख्यं, भाष्यं वै दर्शनानां पुरुमततयो यत्र विश्रान्तिमापुः ॥ २७ ॥ गोपालानन्दमुनिकृद्वार्ताः संस्कृतपद्यगाः । गुणातीतानन्दमुनिवार्ता जग्रन्थ संस्कृते ॥ २८ ॥ यश्चकाराऽन्यशास्त्राणि विविधानि मुदा हरेः । साम्प्रदायिकसिद्धान्ताऽऽवेदकानि प्रसादतः ॥ २९ ॥ मीमांसार्थसंग्रहस्य सुस्फुटा किरणावलिः । किरणं किरणावल्यो न्यायादौ रचितास्तथा ॥ ३० ॥ स्वामिनारायणतत्त्वैः श्रुतितात्पर्यनिर्णयः । ग्रन्थः सुरचितः पारायणी सत्संङ्गिजीवने ॥ ३१ ॥ तत्त्वमुक्ताकलापस्य पञ्चसरात्मकस्य वै । किरणावलिका स्पष्टा रचिता न्यायशालिनी ॥ ३२ ॥ मीमांसायाः सत्प्रमाणपरिष्कृतिरपिस्फुटा । रचिता विशदा स्पष्टा मन्त्रबोधादिकारिणी ॥ ३३ ॥ सोऽयं विरा-

जते स्वामी स्वामिनारायणाश्रितः। सान्त्राशार्वादपीयूषाऽसीमपानप्रजीवनः ॥ ३४॥ शास्त्रार्थे च सुलेखने, नवकृतौ, चाध्यापने, पर्षदि, व्याख्याने, च विवेचने, नवनवोन्मेषे, प्रमानिर्णये, । ऊहे च, ग्रथने, परात्मभजने, शास्त्रेषु, पारङ्गतः, श्रीकृष्णाऽन्वितवल्लभार्यमुनिराड् विद्याब्धिरास्ते जये ॥ ३५॥ काश्यां यस्य विराजते सुमहिमा यः शास्त्रसिद्धान्तवित्, विद्वच्छ्रेणिषु यः सतां बहुमतः श्रीस्वामिनारायणे। श्रीसत्सङ्गिसुजीवनाख्यपरमग्रन्थाऽर्णव-स्नातधीर्जीयात् कृष्णसुवल्लभाचार्य इह सः प्रौढप्रभाभासुरः ॥ ३६॥ काश्यां येन जिता सभा मतिमतां शास्त्रार्थकार्ये सदा, विद्वद्वर्यविभावसुः सुरगिरा मुग्धीकृताः पण्डिताः। न्यायाचार्यपदाङ्कितः प्रतिदिनं श्रीधार्मि-सेवारतः, सोऽसौ, वैष्णवकृष्णवल्लभमुनिर्विद्वत्प्रियो राजते ॥३७॥ युगलम्—आम्नितिप्रयतिचित्तिसत्प्रभाव्यावृतिव्यभिसुदृष्टिसङ्गताः। वीक्ष्यकृत्स्नविद-शेषशेमुषी कृष्णवल्लभभिधः स्वधीतिमान् ॥३८॥ भूषितः स्वसुमतिप्रमापितः शारदाऽऽमनिविधिप्रसादभाग्। योग्यदार्शनिकपञ्चकाननश्चेति पात्रमिति नाऽनरोक्षता ॥ ३९ ॥ श्रीमच्चमत्कारपुरे महोज्ज्वलो निर्मापितः स्फाटिक-मण्डपो हरेः। प्रासादवर्यो भुवि शंसनाऽर्हणः श्रीकृष्णसद्वल्लभदेशिकेन ॥४०॥ महामहामण्डपराज उच्छ्रितो लक्ष्मीशनारायणकृष्णराजितः। श्रीराजकुट्टेऽपि च कृष्णवल्लभाचार्यैर्मणिस्फाटिकहेमनिर्मितः ॥ ४१ ॥ कृतस्तृतीयोऽद्भुत-दिव्यशोभः सुस्वर्णसिंहासनशोभितांशुः। सुचित्रसत्फाटिकदीर्घकायश्चतुःसु-भूमिः पुरुदर्शनोयः ॥ ४२ ॥ आशाविराजच्छशिकौमुदीस्पृक्, विशालरूपो गगनाऽभ्रदर्शी। प्रकारितोऽसंख्यधनैश्च जीर्णे श्रीकृष्णसद्वल्लभदेशिकैर्हि ॥४३॥ अश्वपट्टसरःक्षेत्रे लोमशाश्रममण्डले। यस्याऽऽस्ते मण्डपो रम्यो जनताभक्त-कारितः ॥ ४४ ॥ यशस्वी कीर्तिमान् विद्वत्सार्वभौमः सुलेखनः। व्याख्याताऽ-ध्यापकः शास्त्रतत्त्वाऽर्थाऽनिगतिप्रभः ॥ ४५ ॥ पश्चिमकाश्यां निवसन् व्यासः श्वेतायनः स्वयम्। जगद्धिताय रचयन् शास्त्राणि जयशब्दभाक् ॥ ४६ ॥ ईशावतारव्यासस्य स्वरूपमनुसञ्चरन्। दिव्योऽपि साधुरूपोऽयं पण्डितैर्भार-तादिभिः ॥ ४७ ॥ अभिनन्दित ऊध्वाह्यंशकलाविभूतिभाग्। वन्द्यते शरणा-गण्या शरण्यात्मा स्वयं परः ॥ ४८ ॥ वनस्थल्यां तथाऽन्यत्र मन्दिराणि कृतानि वैः। येन ब्रह्मपरेणाऽत्र मानवेन सताऽऽत्मना ॥ ४९ ॥ अष्टोत्तरशतं पारायणानां च कृतं स्वयम्। विभिन्ननगरेष्वत्र यज्ञाश्चाष्टोत्तरं शतम् ॥५०॥ कृताश्चानेन विदुषा कारिता यज्ञवेदिभिः। यशोवितानं गगने ह्यपारे शाश्व-तायते ॥५१॥ अष्टादशपुराणानां पारायणानि भूतले। कृतानि तु स्वयं भिन्न-राजधानिषु सर्वतः ॥ ५२ ॥ महाभारतमाद्यन्तं रामायणं च वाचितम्। वाल्मीकादिकृतयश्च योगवाशिष्ठमित्यपि ॥५३॥ पञ्चादशी तथा चोपनिषदो

बाचिता मुहुः । लक्षाऽतिलक्षजनताव्रातेभ्यः श्राविताः कथाः ॥ ५४ ॥ स्मृति-शास्त्राणि सततं कथास्वतिरसासु वै । वाचितानि जनतानां समाजेषु सभासु च ॥ ५५ ॥ देवायतनरूपाणि कारितानि बहून्यपि । तेषु वैदिकविधिभिर्मूर्त्तयः स्थापिता हरेः ॥ ५६ ॥ काश्यां मत्स्योदरींभूमौ शङ्करः कृष्णसङ्गतः । प्रतिष्ठापितो विप्रैश्च विदुषां बहुधा सभा ॥ ५७ ॥ आकारिताश्च विद्वद्भ्यो दानानि च बहून्यपि । दत्तान्यवसरे देवगिरा सम्भाषणानि च ॥ ५८ ॥ व्याख्यानानि च तत्त्वानां कृतानि विदुषा मुहुः । आजीवनं ब्रह्मचारी देशिकः कृष्णवल्लभः ॥५९॥ वर्तते वैष्णवविद्वत्सार्वभौमो जयत्यपि । शाखाः प्रशाखाः शिष्याणां चाऽस्थापयत्तु भूतले ॥ ६० ॥ सौराष्ट्रराजधान्यां वै राज्ञा रथे सुवर्णजे । सूर्यवच्छोभने स्वर्णच्छत्रयष्टिधरान्विते ॥६१॥ आचार्यो भ्रामितः सोऽयं मानाऽर्हाक्षतकौसुमैः । चन्दनाद्यैर्जयशब्दैर्वर्धितो जनतार्चितः ॥६२॥ मोंहमय्यां शतवर्षमहोत्सवे सभास्वयम् । शेषासने निषद्यैव व्याख्यानि ददौ मुहुः ॥ ६३ ॥ लक्षातिलक्षजनतावन्द्यो विजयतेतराम् । श्रीकृष्णवल्लभा-चार्यो देवसद्गुरुसन्निभः ॥ ६४ ॥ सतामाशीर्वादभूमिः सर्ववित्सु विराजते । शरणागतिमाप्तानां श्रेयस्करो जयत्यसौ ॥ ६५ ॥ दीक्षाशिक्षापरीक्षेणाऽ-समीक्षाऽऽन्वीक्षिकाऽन्तदृक् । आध्यात्मिक्यात्मविद्विद्यामहाब्धिर्जयतीश्वरः ॥ ६६ ॥ मन्त्रदानप्रदानाद्यैर्मानवाद्याः सुवैष्णवाः । कृता असंख्या जगति सोऽयं विराजते गुरुः ॥ ६७ ॥ गौरवं यत्र विश्रान्तं ख्यातिर्यत्र खनीश्वरी । लक्ष्मीर्यत्राऽक्षया प्रीता सोऽयं विजयतेतराम् । ६८ ॥

**चौखम्भा-ओरियन्टालियाभिधं मुद्रणं स्थलम् ।**
**काश्यां विराजते सर्वमूर्धन्यं भारते शुभम् ॥ ६९ ॥**
यस्य व्रजभवनाख्यो दासो गुप्ता सुचालकः ।
दिक्षु कीर्त्या वर्धमानः सदा विजयतेतराम् ॥ ७० ॥
श्रीवामाचरणा भट्टाचार्याः, दामोदराह्वयाः ।
गोस्वामिनो जयन्त्येते मद्विद्यागुरवोऽन्वहम् ॥ ७१ ॥
मदभिनन्दने ग्रन्थे विद्वन्मूर्धन्यमण्डलम् ।
आशीर्वादपरं वन्दे स्वामी श्रीकृष्णवल्लभः ॥ ७२ ॥

इति ।

**स्वामिनारायणमन्दिरम् ।**
**बालमुकुन्दभवनम् , नं० २**
**जूनागढ़, सौराष्ट्रम् ,**
**भारतम् ।**

